योगतन्त्र-ग्रन्थमाला

[२५]

# कालीकल्पद्रुवल्लरी

कुलपतेः डॉ० मण्डनमिश्रस्य 'मिथिलाभूषणः' पुरोवाचा

पुरस्कृता

सम्पादकः

डॉ० रामनारायणत्रिपाठी



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

YOGATANTRA-GRANTHAMĀLĀ

[ Vol. 25 ]

# KĀLĪKALPADRUVALLARĪ

FOREWORD BY
**DR. MANDAN MISHRA**
VICE-CHANCELLOR



EDITED BY
**DR. RĀMA NĀRĀYANA TRIPĀTHĪ**
Ex-Head, Oriental Sanskrit Department
Lucknow University
Lucknow

VARANASI
1996

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.



Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.



Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221 002

First Edition—500 Copies
Price Rs. 240.00



Printed by—
Mahakant Press
B 18/14, Rewari Talab
Varanasi-221 010

योगतन्त्र-ग्रन्थमाला

[ २५ ]

# कालीकल्पद्रुवल्लरी

कुलपतेः डॉ० मण्डनमिश्रस्य 'शिवसङ्कल्प'-पुरोवाचा

पुरस्कृता

सम्पादकः

डॉ० रामनारायणत्रिपाठी

भूतपूर्व-अध्यक्षः, प्राच्यसंस्कृतविभागस्य

लखनऊ-विश्वविद्यालयः

लखनऊ

वाराणस्याम्

२०५२ तमे वैक्रमाब्दे १९१७ तमे शकाब्दे १९९६ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

□

प्रकाशकः —
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्राप्तिस्थानम् —
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्रथमं संस्करणम्, ५०० प्रतिरूपाणि
मूल्यम्—२४०.०० रूप्यकाणि

□

मुद्रकः —
**महाकान्त-प्रेस**
बी. १८/१४, रेवड़ी तालाब
वाराणसी–२२१ ०१०.

# शिवसङ्कल्पः

विशालोऽस्माकं देशः, विपुला चात्रोपासनाप्रक्रिया, विविधाश्चोपासनासम्प्रदायाः। अवान्तरभेदसहिता लघुगुरुसम्प्रदाया अद्यत्वेऽपि श्रीपरशुरामचतुर्वेदिकृते **'उत्तरभारत की सन्तपरम्परा'**-नामके ग्रन्थे (तृ० सं० १९७२, पृ० ४६७ ४६८) द्वाविंशत्युत्तरैकशतसंख्याका दृश्यन्ते। पुरा च जैनवाङ्मयस्य **'षड्दर्शनसमुच्चय'**-ग्रन्थस्य गुणरत्नटीकायां त्रिषष्टयुत्तरत्रिशतसंख्याका (३६३) दार्शनिकदृष्टयो वर्णिताः सन्ति, यथा तदर्थसङ्ग्रहगाथेयम्—

**असि इसयं करियाणं अकिरियवाईण होई चुलसुई।**
**अत्रापि असतट्ठी वेणइयाणं च बत्तीसं॥**

(अस्याः संस्कृतच्छाया—अशीत्यधिकं शतं क्रियावादिनाम् अक्रियावादिनाञ्च भवति चतुरशीतिः, अज्ञानिनां सप्तषष्टिर्वैनायिकानाञ्च द्वात्रिंशत्।) एतावद्दर्शनानुसारं प्राय एतावन्त एवोपासनप्रकारा अपि भवितुमर्हन्ति। साम्प्रतमागमनिगमपुराणानुसारं प्रमुखा उपासका पञ्चविधाः परिगण्यन्ते—गाणपत्याः, सौराः, शैवाः, शाक्ताः, वैष्णवाश्च। तस्याः शक्तेर्विभिन्नं रूपमुपासनाप्रकारश्च वेदे पुराणेषु आगमेषु च द्रष्टुं शक्यते। तत्र शाक्ततन्त्रानुसारं दशमहाविद्यारूपा शक्तिः प्रामुख्येण सर्वैरङ्गीक्रियते। ताश्च—काली तारा षोडशी भुवनेश्वरी भैरवी छिन्नमस्ता बगला मातङ्गी कमला च। यथा वैष्णवानां मत्स्यकूर्मादयो दशावतारास्तथैव शाक्तानामिमाः शक्तिरूपा विद्याः। एतास्वपि कश्चन भेदप्रकारो वर्ण्यते—

काली, तारा, षोडशी, भुवनेश्वरी—एताश्चतस्रो महाविद्याः। भैरवी, छिन्नमस्ता, धूमावती—एतास्तिस्रो विद्याः। बगला, मातङ्गी, कमला—इमास्तिस्रः सिद्धविद्या इति। अत्र पुनः कुलद्वयं विभज्यते—कालीकुलं श्रीकुलं च। तत्र प्रथमकुले—काली, तारा, भुवनेश्वरी, छिन्नमस्ता च

गण्यन्ते । द्वितीयकुले च—षोडशो, भैरवो, बगला, धूमावती, मातङ्गी च स्वीक्रियन्ते ।

तत्र कालीकुलस्येयं कालीशक्तिर्देवता प्रमुखा । अस्या व्युत्पत्तिविषये स्वरूपविषये माहात्म्यविषये च बहवो जिज्ञास्या विषया भवन्ति । तत्र वैदिक-पौराणिकागमिकदृष्टीनामेकत्र समावेशनात्मको ग्रन्थः प्रायो नोपलभ्यते । विद्वद्वर्य**श्रीरामनारायणत्रिपाठि**भिर्विविधवेदपुराणागमप्रभृतिशास्त्रग्रन्थेभ्यः कालीशक्तिसम्बद्धान् विषयान् सङ्गृह्यैकत्र सन्निवेश्य चायं **'कालीकल्पद्रुवल्लरी'**-नामको ग्रन्थो निरमायि । अत्र प्रायः पञ्चचत्वारिंशत्संख्याकग्रन्थेभ्यो विषयाः सङ्गृहीताः; किन्तु तथापि नालम् । अतोऽपि विवेच्या बहवो विषया अवशिष्टाः । यत एतादृशमेव कालीमाहात्म्यम् ।

श्रीत्रिपाठिमहाशयैरस्मिन् कर्मणि भूयान् महाँश्च श्रमः कृतः । श्रीत्रिपाठिमहोदयाः प्राच्यविद्याया विश्रुता विद्वांसः लखनऊविश्वविद्यालयस्य प्राच्यविद्याविभागं समलङ्कृतवन्तः । एतैर्नैमिषारण्यवैदिक-पौराणिकशोधसंस्थानमपि शोधाचार्यत्वेन संशोभितम् । एतेषां संस्कृतसेवा भारतराष्ट्रपतिभिः सम्मानपत्रं प्रदाय सुसम्मानिताः । सम्प्रत्यपि ते लखनऊनगर्यां विशिष्टानां विदुषामप्यनुसन्धानयोजनासु साहाय्यं कुर्वन्तो विराजन्ते । अयं ग्रन्थस्तेषां विशेषज्ञतायाः प्रतीकभूतः शक्तितत्त्वजिज्ञासूनां शक्तिसमाराधकानां च साधकानां कृते महानुपकारको भविष्यति । अस्य च प्रकाशनं तत्रभवतां मनीषिप्रवराणां कुलपतिचराणां **प्रो० वि० वेङ्कटाचलम्**महोदयानां कार्यकाले प्रारब्धम्, सम्प्रतीदं पूर्णतामेतीति सर्वतः प्रागहं तेभ्यः सम्मानाञ्जलिं समर्पयामि । तदनन्तरं च श्रीत्रिपाठिमहोदयाय स्वकीयानि वर्द्धापनानि, प्रकाशनाधिकारिणे **डॉ० हरिश्चन्द्रमणित्रिपाठिने**, ग्रन्थस्यास्य मुद्रकाय महाकान्तमुद्रणालयव्यवस्थापकाय **श्रीहरिकृष्णाय** च धन्यवादान् समर्पयन् ग्रन्थमिमं पाठकेभ्यः समुपहरामि ।

**वाराणसी**
चैत्रपूर्णिमा,
वि० सं० २०५३
(३-४-१९९६ खैस्ताब्दः)

**मण्डनमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# विषयानुक्रमणिका

## स्तोत्रप्रकरणस्य

## मन्त्रयन्त्राध्यायस्य

## अर्चाध्यायस्य

## ॥ समर्पणम् ॥

जातो लोकेऽनुशिष्टो यदनुपमकृपाराशितो लब्धविद्यो
येषामाशीःप्रभावाल्लिखितुमिह रतः कालिकाकल्पवल्लीम् ।
तातं तद्वर्यबन्धुं सुकृतमयमथो मातरं तत्स्वसारं
नत्वा तातस्य तातं स्तुतपदकमलं श्रद्धयैभ्योऽर्पये ताम् ॥

# किञ्चिन्निवेदनम्

यद्यपि कालिकाया विविधाः स्तुतयो मन्त्रा यन्त्राणि समर्चासाधनापद्धतयो नानातन्त्रागमपुराणेषूपवर्णिताः सन्ति, बहुशश्च विकीर्णा यतस्ततं उपलभ्यन्ते, संगृहीताश्चांशतो न्यूनाधिकरूपेणाधुनिकैः साधकैर्विद्वद्भिर्विशेषतो वंगीयैः; किन्तु राशिरूपेणैकत्रिताः क्वचन न दृश्यन्ते। कालीसम्बद्धपद्धतिष्वपि तादृशी गतिरवाप्यते। अवलोक्यैतन्मनसि मे भावनैषाऽजागरीत् सङ्ग्रहीतुम्।

नैसर्गिकमातृभक्तिप्रवृत्तिप्रभावात् पञ्चदेवोपासनान्तर्गतदेव्युपासनासत्त्वात् तत्रापि विशेषतो मज्जनपदे ग्रामे ग्रामे ग्रामटिकायाञ्च कालीस्थानविद्यमानत्वात् पर्वण्युत्सवे च सदा समाराधितत्वाच्च कालीविषये किमपि लिखितुं स्वतः प्रवृत्तिमत्त्वेऽपि विशेषरूपेण सरयूपारीणवंशावतंसैः पङ्क्तिपावनपङ्क्तिप्रभाकरैः शीलाचारसाधनासम्पन्नैर्विविधविद्याविरुदपदालङ्कृतैः विमलयशोवितानैः काशीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिभिरन्वर्थसंज्ञैर्वन्द्यैः **डॉ० विद्यानिवासमिश्रैः** प्रेरितः सन् कार्येऽस्मिन् संलग्नः।

अस्मिन् ग्रन्थे वेदतन्त्रागमपुराणोक्ताः कालीसम्बद्धाः सकला मन्त्र-यन्त्रस्तवास्तदङ्गभूता न्यासध्यानविनियोगादिविधयोऽन्ये च विषया यावदुपलब्धा अन्वेषणे ते सर्वे सङ्कलिताः। एतत्त्वङ्गीकर्त्तुं न शक्नोमि यत् कालीसम्बद्धविषयाः कात्स्न्येनात्र सन्निविष्टाः सन्ति, न किमपि हापितमस्तीति; किन्तु मन्ये, यथाशक्ति यथाज्ञानं यथोपलब्धि प्रायो बहुशो विषयाणां समासतः सङ्ग्रहोऽत्रेति योऽन्यत्राकृत एवेति विश्वसिमि विशेषतः स्तोत्राणां सङ्ग्रहः सापेक्षोऽधिकः।

ग्रन्थेऽस्मिंस्त्रयोऽध्यायाः—स्तोत्राध्यायः, मन्त्रयन्त्राध्यायः, अर्चाध्यायश्च। आदौ विस्तृत उपोद्घातश्च, सहैव कालीसम्बद्धवाङ्मयस्य तालिका, सहायकग्रन्थसूची, समुद्धृतवाक्यग्रन्थनामावलिर्वर्तन्ते। तत्र **प्रथमाध्याये** (स्तोत्राध्याये) द्विपञ्चाशत्स्तोत्राणां सङ्ग्रहः, यत्र श्रौतानि पञ्च, तन्त्रोक्तानि

एकोनचत्वारिंशत्, यत्र कर्पूरस्तोत्रं द्वयं केवलं टीकाद्वयोपेतं च। अन्ते मदीया अम्बास्तुतिश्च। पुराणोक्तानि द्वादश। कर्पूरस्तोत्रस्य बह्व्यष्टीकाः सन्ति, तत्र टीकाद्वयं डॉ० मिश्रमहाभागानामनुकम्पयाऽवाप्तम्, अन्यास्तु न प्राप्ताः। कालीसहस्रनामस्तोत्रस्यापि टीकाऽस्ति किन्तु साऽपि सम्प्रति न लब्धा। स्तोत्राणामन्येषां पाठभेदोऽप्यत्र नोल्लिखितः, पुस्तकान्तराभावात्। स्तोत्रेषु कवचहृदयपटलशतनामसहस्रनामसहितं गणनाऽस्ति।

**द्वितीयाध्याये** (मन्त्रयन्त्राध्याये) मन्त्रमाहात्म्यम्, काल्यास्तद्विभिन्नरूपाणाञ्च यावन्तो मन्त्रा यन्त्राणि, विनियोगध्यानन्यासजपसंख्याश्चेति सर्वं मन्त्रमहोदधि-विद्यार्णव-निर्वाण-तन्त्रसारादितन्त्रेभ्यः सप्रमाणं सङ्कलितम्। दक्षिणाकाली-भद्रकाली-गुह्यकाली-महाकाली-श्मशानकाली-कामकलाकाली-सिद्धिकाली-कङ्कालकाली-कामाख्याकाली-रक्षाकाली-सर्वाङ्गकालिका, पञ्चदशनित्यानां विविधा अनेके मन्त्राः, महाकालस्य मन्त्राः सङ्कलिताः। न्यासमाहात्म्यम्, षोढा न्यासः, समासां पृथक् पृथग् ध्यानानि, कालीवासना, इत्यादि संगृहीतम्। मन्येऽस्मिन् प्रकरणे यद्यपि बहूनां मन्त्राणां पुनरुक्तिर्जाता, तत्र ग्रन्थभेद एव कारणम्, तथापि पुनरुक्तौ भेदो वैशिष्ट्यञ्च स्तः, तस्मात् पुनरुक्तेर्न व्यर्थता; अपि तु लाभ एव। एतदनन्तरं यन्त्रमाहात्म्यं विविधानि यन्त्राणि, यन्त्रोद्धारश्लोकाः, काली-श्यामा-गुह्यकाली-महाकाली-कामकलाकाली-श्मशानकाली-मातृकादियन्त्रोद्धारप्रक्रियायन्त्राणि चेति सर्वं सप्रमाणमुपन्यस्तम्। यन्त्रस्वरूपं विभिन्नग्रन्थेभ्य एवोद्धृतं यथा प्राप्तं तथैव।

**तृतीयाध्याये** (अर्चाध्याये) तोडलतन्त्रानुसारं बृहत्पूजासूत्रं संक्षेपपूजासूत्रं मयाऽत्रोल्लिखितम्। पूजाप्रयोगविधिस्तु विस्तरेण कालीपूजापद्धतौ, तन्त्रोक्तप्रयोगे, आगमतत्त्वविलासे, तन्त्रसार-विद्यार्णवशाक्त-प्रमोदप्राणतोषिण्यादिग्रन्थेषु सम्यगुल्लिखितो वर्तते, तदुद्धरणे कञ्चिल्लाभं न विलोक्य पिष्टपेषणभयादत्र तत आवश्यकं कर्म कर्तव्यमेवानीयोपन्यस्तम्। अर्घ्यस्थापन-विघ्नापसारण-आसनशुद्धि-भूतशुद्धि-मातृकान्यास-करन्यास-अन्तर्मातृकान्यास-बाह्यमातृकान्यास-संहारमातृकान्यास-सृष्टिन्यास--श्रीकण्ठन्यासा ध्यानपूर्वकाः क्रमशो निर्दिष्टाः। अनन्तरं श्मशानकाली-भद्रकाली-महाकाली-निशाकाली-रक्षाकाली-कालीपूजाविधिः संक्षेपेण वर्णितः। तदनन्तरं तदर्थं कङ्कालमालिनीतन्त्रोक्तं नारदपुराणोक्तं च पूजनं निरूपितं निगद-

रूपेण। मन्त्रयोगस्य षोडशाङ्गानि, मन्त्रचैतन्यविधिः, मुद्रायाः प्रयोजनं माहात्म्यञ्च, कतिपयमुद्राणां परिचयः, षोडशोपचारादयः, कतिपयबीज-परिचयः, कतिपयवर्णसङ्केताश्चात्रोपन्यस्ताः, अन्ते कालिकामाहात्म्यञ्च।

आदावुपोद्घाते शाक्तागमाचार-महाविद्या-कालीशब्दनिरुक्ति-स्वरूप-वैशिष्ट्य-आराधनोत्पत्तिकथावैविध्य-भद्रकाल्यादिपरिचयस्थानानां वैशद्येन निरूपणं वर्तते। अत्र नानापुराणेभ्योऽनेकेभ्यस्तन्त्रेभ्यो बहवो विषया सङ्गृह्य सन्निवेशिताः, अन्ते श्रीविद्यायाः संक्षेपेण परिचय-माहात्म्य-मन्त्र-तद्भेद-षोडशी-त्रिविधरूप-तदङ्गभूतदेवानां वर्णनम्, तथा श्रीचक्रमाहात्म्यं तत्स्वरूपं यन्त्रस्थपूजाविधानञ्च निरूपितम्, नारदपञ्चरात्रोक्तं षोडशी-माहात्म्यम्, षोडशी-मातृका, पञ्चदश्याः स्वरूपञ्चेति सर्वं समासत उपन्य-स्तम्। विश्वसिमि यदेष ग्रन्थो जिज्ञासूनां शाक्तोपासकानां भक्तानामुपकरि-ष्यतीति। अन्ते सर्वप्रथमं वन्द्यपादं स्वनामधन्यं **डॉ० विद्यानिवासमिश्र-**महाभागं नौमि स्तौमि याचे च तत्कृपां येन प्रेरितोत्साहितो धुरं वोढुं शक्तिमवाप्तः।

अस्मिन् कार्ये येभ्यो ग्रन्थेभ्यो मया सामग्री सङ्गृहीता तेभ्यस्तत्कर्तृभ्यो देवेभ्य ऋषिभ्य आचार्येभ्यो लेखकेभ्यः शतशः शिरःप्रणिपातान् विधाय तेषामधमर्णतां शिरसा बिभर्मि, तथा येभ्यो ग्रन्थालयेभ्यो व्यक्तिभ्यश्च तत्र विशेषतो वाराणसेय-सरस्वतीभवनग्रन्थागारात् (लिखितमुद्रितोभयविधात्), नैमिषस्थवैदिकपौराणिकशोधसंस्थानपुस्तकालयाद् भूरिसाहाय्यं मयाऽवा-प्तम्, तदर्थं तदधिकारिवर्गान् प्रति प्रणतिपुरःसरं कृतज्ञतां ज्ञापयामि।

**रामनारायणत्रिपाठी**

# उपोद्घातः

**वन्दे कालीं महाविद्यां महाकालप्रियां पराम् ।**
**खड्गमुण्डवराभीतिकरां भक्तभयापहाम् ॥**

**उद्भवस्थितिसंहारकारिणीं कालिकाम्बिकाम् ।**
**स्थापयामि समाराध्य कालीकल्पद्रुवल्लरीम् ।**

वेदशास्त्रपुराणधर्मशास्त्राद्यतिरिक्तमस्ति शास्त्रमागमनामकम्, यद् वैदिकावैदिकरूपेण द्विविधम् । तत्रावैदिक आगमो बौद्धाद्यागमः, वैदिकस्तु शैवशाक्तवैष्णवभेदेन त्रिविधः । अत्रापि केचनागमानामवैदिकत्वं वदन्ति, केचित्तु कस्यचिद् वैदिकत्वं कस्यचिच्चावैदिकत्वं स्वीकुर्वन्ति;किन्तु तत्तत्साम्प्रदायिका युक्त्युक्तिभ्यां स्वस्वागमस्य श्रुतिमूलकत्वं मन्यन्त एव । कलावागमस्यैव प्राशस्त्यम्, तदुक्तं रुद्रयामले—

**कृते श्रुत्युक्तमार्गः स्यात् त्रेतायां स्मृतिभाषितः ।**
**द्वापरे वै पुराणोक्तः कलावागमसम्भवः ॥** इति ।

आगमस्य प्रामाण्यं मेरुतन्त्रे—

**न वेदः प्रणवं त्यक्त्वा मन्त्रो वेदसमन्वितः ।**
**तस्माद् वेदपरो मन्त्रो वेदाङ्गश्चागमः स्मृतः ॥** इति ।

वेदान्तदेशिकेन हयग्रीवोपाख्यानव्याख्यायां ४०८ पृष्ठे आगमस्य धर्मशास्त्रत्वं प्रतिपादितम्, तद्यथा—एतेन पञ्चरात्रस्य धर्मशास्त्रत्वं सिद्धमिति । एवमन्यत्रापि बोध्यम् । यामुनाचार्यस्यागमप्रामाण्यं प्रसिद्धमेव । तन्त्रशब्देनाप्यागमो गृह्यते ('आगमापरनामानि तन्त्राणि' ल० त० उ०, पृ० १) । अस्य विषये संहिताशब्दोऽपि प्रयुज्यते ।

तत्र शाक्तागमश्चतुःषष्टिविधः, तदुक्तं पूज्यपादैः सौन्दर्यलहर्याम्—

**'चतुःषष्टया तन्त्रैः सकलमतिसन्धाय भुवनम्' ॥ ३१ ॥**

एतद्ग्रन्थस्य टीकाकारो लक्ष्मीधरो वामकेश्वरतन्त्रानुसारं सर्वेषां नामानि निर्दिष्टवान्। सैव नामसूचिका म० म० गोपीनाथकविराजेन "तान्त्रिकसाहित्य"नामकग्रन्थे प्रदर्शिता। किञ्चित्पाठभेदसहकृतैषा सूची कुलचूडामणितन्त्रे १।४-१३ श्लोकेष्वप्यस्ति। सर्वोल्लासतन्त्रे तोडलोत्तर-तन्त्रे चापि चतुःषष्टितन्त्राणि नाम्ना निर्दिष्टानि सन्ति; किन्तु वाम-केश्वरकुलचूडामण्यपेक्षया भिन्नानि।

भारतस्य शाक्ततन्त्राणां शाक्तानां तत्स्थानानां च मुख्यरूपेण त्रिविधो विभागः—विष्णुक्रान्ता, रथक्रान्ता, अश्वक्रान्ता च।

**विष्णुक्रान्ता**–भारतवर्षस्य पूर्वोत्तरप्रदेशः (विन्ध्यतश्चट्टग्रामं यावत्)।

**रथक्रान्ता**–भारतस्य पश्चिमोत्तरप्रदेशः (विन्ध्यतस्त्रिविष्टपं यावत्)।

**अश्वक्रान्ता**—अत्र मतभेदोऽस्ति। केचन दक्षिणभारतं केचन यवद्वीपं यावन्मन्यन्ते कामाख्या-कश्मीर-काञ्चीति प्रधानस्थानानि।

तत्र प्रत्येकविभागे चतुःषष्टिसंख्याकानि तन्त्राणि सन्ति। एतेषां विभागत्रयस्थानां समेषां तन्त्राणां सूची तान्त्रिकसाहित्यग्रन्थे तथा आर्थर-एवलानमहोदयेन '**तान्त्रिक टेक्स्ट्स**'-ग्रन्थे चोल्लिखिता।

आर्थर एवलानमहोदयेन **'प्रिन्सिपिल्स ऑव तन्त्राज'**नामके ग्रन्थे शतत्रयाधिकतन्त्राणां नामानि प्रस्तुतानि, कविराजेनापि सम्मोहनतन्त्रानु-सारमनेकेषां विभागानामुल्लेखः कृतो यतस्तन्त्राणां संख्या समधिका भवति।

एतेषु शाक्तागमेषु केचन दार्शनिकविचारात्मकाः, केचनोपासनामयाः। प्रायोऽमी सर्वे शाक्तागमाः शैवागमान् स्पर्धन्ते, नैकट्यं च तेषां भजन्ति, साम्यञ्चानुकूलयन्ति। भेदस्तु शैवागमेषु शिवस्य प्राधान्यमत्र तु शक्ते-रेव। अस्या एव परममहत्त्वमुपास्यत्वञ्च प्रतिपादितम्; किन्तूभयत्र सह-कारित्वं समानमेव। अर्थाद् यथा शैवेषु शिवशक्तिसामरस्ये शिवस्य प्राधान्यं तथैवात्र शक्तेः। तादात्म्यमभेदो वोभयत्र साम्यं नयति—

**न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।**
**शिवः शक्तिस्तथा भावानिच्छया कर्तुमीहते॥**
**शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते॥** (शिवदृष्टिः –३।३)

एवमुपासनायामपि सहकारित्वं वर्तते, शैवोपासनायां शक्तिरपि गृहीता, शक्त्युपासनायां शिवोऽपि गृहीतोऽस्ति ।

शाक्ततन्त्रे समुपास्यासु दशमहाविद्यासु "काली-तारा-षोडशी" इति तिस्रो महाविद्या विशिष्टास्तथापि प्राधान्यं रूपद्वयस्यैव, तदनुसारं कालीकुलं श्रीकुलमिति विभागद्वये समा महाविद्याः परिगणिताः ।

प्रसङ्गादत्रासां महाविद्यात्वं किञ्चिद् विचार्यते--विदन्त्यनयेति निरुक्त्या संज्ञायां 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' (पा० सू० ३।३।९९) इति सूत्रेण व्युत्पादितो विद्याशब्दः शास्त्रे त्रय्याम्, आन्वीक्षिक्यादिचतसृषु पुराणन्यायमीमांसाधर्मशास्त्रसाङ्गवेदेषु चतुर्दशसु उपवेदसहितोक्तविद्यासु अष्टादशसु वेदान्ते शाण्डिल्यादिद्वात्रिंशद्ब्रह्मविद्यासु विद्याशब्दस्य तथा शास्त्रेऽन्यसाहित्ये लोके च विविधविषयकज्ञानक्रियाकलासु विद्याशब्दस्य व्यवहारो दृश्यते, तर्हि कथं काल्यादिदशशक्तिषु विद्यामहाविद्यासिद्धविद्यानां प्रयोग उपयुज्यते ?

उच्यते–प्रत्येकपदार्थसम्बन्धिविद्या सर्वा परिमिता विश्वान्तर्गताऽपूर्णा, पूर्णा तु विश्वविद्या, सा महाविद्या, इयमेव विराड्विद्यापि कथ्यते । सा च शक्तिरूपा, शक्तिश्च दशधा, अतः सर्वा दश शक्तयो महाविद्यापदवाच्याः । अस्य कथनस्य स्फुटीकरणमग्रे भविष्यति ।

अपरथापि विज्ञेयम्—शरीराभ्यन्तरे मूलाधारे सुषुम्णाग्रभागे ज्ञानेच्छाक्रियात्मकं कोटिसूर्यप्रभं स्वम्भूलिङ्गं वर्तते, तस्य शिरोभागे सार्धत्रिवलयाकारेण वलयिता रक्तविग्रहा देव्यात्मिका सुप्ता सती कुण्डलीशक्तिर्विराजते । इयमेव मूलाधारनिवासिनी कुण्डलीशक्तिः केशमूलव्यापिन्यस्ति । हृदयस्था प्राणशक्तिः, कण्ठस्था स्वप्ननायिका, तालुस्था सदाधारा, बिन्दुस्था बिन्दुमालिनी कथ्यते । अत्र ह्रींबीजस्य, प्रणवस्य वा पराया वाचः स्थानम् । इयमेव कुण्डलीशक्तिः आधारचक्रे सुप्ता समुत्थिता च आज्ञाचक्रं स्वाधिष्ठान-मणिपूरक-अनाहत-विशुद्धचक्रसमुल्लङ्घनपूर्वकं सम्प्राप्य मुक्ति ददाति । इयमेव शब्दात्मिका वाक्शक्तिर्नादशक्तिः, एनामेव प्राणशब्देन सर्पिणीशब्देन व्यवहरन्ति जनाः । अस्मादेव स्थानात् क्रमशः परा-पश्यन्ती-मध्यमा-वैखरीरूपेण समेषां वर्णानामुत्पत्तिः । येभ्यो

वर्णेभ्यो वेदादिसमस्तवाङ्मयं जायतेऽर्थात्मकं भुवनञ्चोत्पद्यते। तथा च श्रुतिः —

**'वागेव विश्वा भुवनानि जज्ञे', 'स भूरिति व्याहरद् भूमिमसृजत्।'**

स्मृतिरपि—

**'वेदशब्देभ्य एवासौ पृथक् संस्थाश्च निर्ममे'।**

एतेनेदमायाति—सर्वासां विद्यानां मूलं कुण्डली, सा च शक्तिः, सैव दशधा भवति विराजते च। अत आसां विद्यात्वं महाविद्यात्वं सिद्धविद्यात्वं च सर्वं संघटते समुचितञ्च। तत्र काली महाविद्येति सुतरां भाति प्राथम्यात्।

इतरथाप्यवगन्तव्यम्—ब्रह्मनारायणशिवशक्तिसर्वेश्वरपरमात्मादि-शब्दवाच्यः सच्चिदानन्दघनः शिवः परब्रह्माख्यो द्विधा-निर्गुणः सगुणः, निष्कलः सकलो वा। तत्र सच्चिदानन्दमयाद् वैभवशालिनः सकलात् परमेश्वरात् पूर्णब्रह्मणः शक्तेः प्रथमं प्राकटयम्,ततो नादः,नादाद् बिन्दोः प्राकट्यमभवत्। स च बिन्दुस्त्रिधा भवति—शिवमयः, शक्तिमयः, शिवशक्तिमयश्च। अत्रेत्थं ज्ञेयम्—बिन्दोराकारश्चणकवत्। यथा चणकस्योपरि वल्कलावरणम्, आभ्यन्तरे च द्वे दले स्तः, मिलित्वा च चणक एकः; किन्तु द्विदलमयः, एवं बिन्दोरुपरि बहिर्मायामयावरणम्, तदभ्यन्तरे शिवशक्तिरूपात्मकं खण्डद्वयम्; किन्तु मिलित्वा तु एक एव बिन्दुः प्रतिभाति चणकवत्। पृथक्-पृथक् सत्त्वेऽपि द्वयोर्दलयोरिव शिवशक्त्योः परस्परसंयोगादभिन्नरूपेण स्थितिः। एवमयं बिन्दुः शिवशक्त्युभयात्मकोऽस्ति, अयमेव शब्दब्रह्मेति नाम्ना व्यवह्रियते। अस्मादेव सर्वः सृष्टिप्रपञ्चो जायते नामात्मको रूपात्मकश्च। पूर्वं यन्मया बिन्दोस्त्रिविधत्व प्रोक्तं तत्तु कालवशाज्जायते, तदेव त्रिविधत्वं शिवशक्त्युभयरूपेण निरूपितमपरथा त्वेवं ज्ञेयम्—स्थूलः सूक्ष्मरूपः पर इति, अपि च विन्दुः, नादः, बीजरूपश्च। तस्माद् बिन्दोरव्यक्तसंज्ञको रवो जायते, स एव रवः, स शब्दब्रह्मेति गीयते। ततः सर्वाः सृष्टयः। एवं सति सिद्ध्यति सर्वविद्यामूलकत्वाद् आसां शक्तीनां महाविद्यात्वम्। अथ विनिगमकं शारदातिलके —

सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः ॥

प्रपञ्चसारे—

स तत्त्वसंज्ञा चिन्मात्रा ज्योतिषः सन्निधेस्तथा ।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम् ॥
कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ।
स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ॥
स बिन्दुनादबीजत्वभेदेन विनिगद्यते ।
बिन्दोस्तस्माद् भिद्यमानाद् रवोऽव्यक्तात्मको भवेत् ॥
स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति कथ्यते ॥
तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः ॥ (१।४१-४४)

बिन्दुनादशक्तिविषये व्यतिक्रमोऽपि प्राप्यते—

आसीद् बिन्दुस्ततो नादो नादाच्छक्तिसमुद्भवः ।
नादरूपा महेशानि चिद्रूपा परमा कला ॥ (वायवीयसंहितायाम्)

शाक्तास्तु शक्तेः प्राधान्यं स्वीकृत्य वदन्तीत्थम्—

या मूलप्रकृतिः सूक्ष्मा जगदाद्या सनातनी ।
सैव साक्षात् परं ब्रह्म साऽस्माकं देवतापि च ॥ (महाभागवते)
सा विश्वायुः सा विश्वकर्मा सा विश्वधायाः । (य० सं० १।४)
महानिर्गुणरूपा च वाचातीता परा कला । (महाकालसंहितायाम्)
इच्छा सैव स्वेच्छा सन्ततसमवाहिनी सती शक्तिः ।
स चराचरस्य जगतो रूपं निखिलस्य निजविलीनस्य ।

(तत्त्वसंहितायाम्)

तस्मिन्नेव काले तु स्वबिम्बं पश्यति शिवा ।
तद्बिम्बं तु भवेन्माया तत्र मानसिकं शिवम् ॥

शक्तिसङ्गमे कालीखण्डे—

सृष्टेरुत्पादनार्थं तु भर्तृरूपं प्रकल्पयेत् ।
विद्यया पञ्चमीरूपं धृत्वा कालसमागमः ॥
भक्तप्राणप्रिया देवी तस्य सङ्गपरायणा ।
पञ्चमीरूपमासाद्य संस्थिता परमा कला ॥
तस्याः सङ्गाभ्यासयोगान्महाकालत्वतां गता ।
येन तुष्टा तु या पूर्वं स तस्या ऋषिरोरितः ॥
उपासकास्तदन्ये स्युरिति संक्षेपतो मतम् ॥

एभिर्वचनैरायाति यदाद्या शक्तिरेव प्रकृत्याद्यपरपर्याया सृष्ट्यर्थं भर्तृरूपेण मानसिकं शिवं कल्पयित्वा स्वयं च स्त्रीरूपं धृत्वा तत्संयुक्ता भवति । तत्संयोगादेव कालस्य शिवस्य महाकालत्वं संहर्तृत्वं निगमागमकर्तृत्वञ्च सम्प्राप्तम् । सा च शक्तिः परा विद्या, 'शब्दब्रह्ममयी चराचरमयी ज्योतिर्मयी वाङ्मयी' सर्वजननी तत एव नामरूपात्मकं जगज्जायतेऽतोऽस्या महाविद्यात्वं सुस्थम् । अत्र शक्तिपदेन काली विवक्षिता । एवं बिन्दुव्याख्यानेऽपि तस्या महाविद्यात्वं स्रष्टृत्वं च सिद्ध्यति । बिन्दुप्रक्रिया तथा वाक्प्रक्रियाऽत्र विस्तरभयान्न लिख्यते । एका लघीयसी प्रक्रियाऽत्र दर्श्यते—

सिद्धान्तशैवागमे रत्नत्रयपरीक्षानामके ग्रन्थे—शिवः, शक्तिः, बिन्दुश्चेति रत्नत्रयं निरूपितम् । इमान्येव त्रीणि रत्नानि सर्वेषां तत्त्वानां मूलानि । शिवः शुद्धजगतः कर्ता, शक्तिः करणम्, बिन्दुरुपादानम्, शक्तेराघातेन बिन्दौ विस्फुरणं भवति, ततः कलानामुदयः । बिन्दोरपरं नाम परनाद इति । तस्मात् परनादाख्याद् बिन्दोः—नादः, बिन्दुः, अर्णाः (वर्णाः) अजायन्त क्रमशः । अत्र प्रथमबिन्दोः संज्ञाः—शब्दतत्त्वम्, अघोषा

वाक्, ब्रह्म (शब्दब्रह्म), कुण्डलिनी, विद्याशक्तिः, परा, नादः, महामाया, व्योम, अनाहतम्, परनाद इति। अस्यैव बिन्दोरवस्थाचतुष्टयम्—परा (सूक्ष्मा), पश्यन्ती, मध्यमा, वैखरीति। कुत्रचित् कुण्डल्याः शब्दोत्पत्ति-र्वर्णोत्पत्तिर्वर्णिता। एवं शक्तिर्वा कुण्डली काल्येव, सा सर्वमूलं महाविद्या।

वाराहीतन्त्रे स्वभावानुसारं शाक्तागमानां त्रयो विभागाः—आगम-यामल-तन्त्रभेदात्। इतोऽतिरिक्तो डामरनाम्नाप्येको विभागोऽस्ति। एते सर्वेऽपि दक्षिणवाममार्गभेदादुभयविधाः, तत्र दक्षिणमार्गानुयायिनः प्रायो वेदानुसारिणः, वामाचारमार्गानुयायिनस्त्ववैदिकाः कथ्यन्ते लोके; किन्तु तान्त्रिका इत्थं न मन्यन्ते, ते तु कथयन्ति यद् वामाचारविधौ प्रायः साङ्केतिकाः शब्दाः प्रयुक्ताः, अतो लौकिकदृष्ट्या निन्दितत्वात् ते वेदबाह्या उच्यन्ते, वस्तुतस्तु तेषां शब्दानामपरो भावः। यथा वामाचारे पञ्चमकारा मद्यमांसमत्स्यमैथुनमुद्राः गृहीताः प्रशस्ताश्च, एतान् विहाय तन्मार्गे सिद्धिर्न स्यात्। एते सर्वे लोकदृष्ट्या निन्द्याः; किन्तु तन्त्रेऽपरोऽर्थ एतेषाम्, यथा कुलार्णवतन्त्रे ५।१०७–११३ श्लोकेषु मद्यपदेन सहस्रकमलस्यन्दमानरसपानं गृह्यते न तु सुरापानम्। मांसपदेन ज्ञानद्वारा पुण्यपापरूपात्मकपशून् हत्वा चित्तस्य परतत्त्वे लय एवोपादीयते, न तु पशुहिंसा। मत्स्यपदेन मत्स्य-सदृशचञ्चलेन्द्रियाणां मनसा नियन्त्रणमेवाभीप्सितम्, न तु मत्स्याशनम्। मुद्रापदेन स्वसङ्कल्पानुसारेण शक्तेरुपयोग एवेष्यते, न तु मुद्राङ्कनम्। मैथुनपदेन आत्मपराशक्तिसामरस्यमेवाभिप्रेतम्। मन्ये, यदेष पन्था असि-धाराव्रतमेव न हि सर्वेषां कृते सुगमः। अधिकारिण एवात्र गन्तुं शक्नु-वन्ति। अत एवोक्तं परशुरामतन्त्रे—

**अयं तु परमः कौलमार्गः सम्यङ् महेश्वरि।**
**असिधाराव्रतसमो मनोनिग्रहहेतुकः॥**
**स्थिरचित्तस्य सुलभः सफलस्तूर्णसिद्धिदः॥**

कुलार्णवे—

**कृपाणधारागमनं व्याघ्रकर्णविलम्बनम्।**
**भुजङ्गधारणा नूनमशक्यं कुलसेवनम्॥**

वाममार्गस्य साधकः स एव भवितुमर्हति य एतदाचरति—

**परद्रव्येषु यो अन्धः परस्त्रीषु नपुंसकः ।**
**परापवादे यो मूकः सर्वथा विजितेन्द्रियः ॥**
**तस्यैव ब्राह्मणस्यात्र वामस्याधिकारिता ॥**

अन्यत्र—

**कर्दमे चन्दने भिन्ने मित्रे शत्रौ तथा प्रिये ।**
**श्मशाने भवने देवि तथैव काञ्चने तृणे ॥**
**न भेदो यस्य देवेशि ! स कौलः परिकीर्तितः ॥**

एतावता सिद्ध्यति यत् कामपि विकृतिं प्राप्तवान् पुरुषो वामे दक्षिणे वा मार्गे गन्तुं न शक्नोति । न हि केवलं शब्दस्य स्थूलमर्थमादाय स्वेच्छया विचरितुं कोऽपि समर्थः । तन्त्रविद्या रहस्यविद्या गूढात्मिका गुरुकृपयैव लभ्या भवति ।

# काली

कालीविषये किञ्चिल्लेखनात्पूर्वं तद्व्युत्पत्तिरावश्यकीति मत्वा प्रथमं शब्दप्रक्रियामेव निरूपयामि—

कल-शब्दसंख्यानयोः (भ्वा० ४९७ आ० से०), कल-विलक्षेपे (चु० १६०४ उ० से०), कल-गतौ संख्याने च (चु० १८६६ उ० से०), कल-शब्दे (भ्वा० ४९९ आ० से०) इति चतुर्भ्यो धातुभ्यः कलति कलते कलयति कलयते सर्वमात्मनि, अथवा 'कलयत्यायुः' इत्यादिनिरुक्तौ पचाद्यचि कलशब्दो निष्पन्नः । ततः स्वार्थे प्रज्ञादित्वादणि कल एव 'कालः' इति कालशब्दो जातः ।

अथवा 'कालयति सर्वाणि भूतानि' इति निरुक्त्या कल-प्रेरणे ण्यन्तात् पचाद्यचि कालः । यद्वा कुं कुत्सितम् (ईषत् कृष्णत्वं) लाति गृह्णाति

इति निरुक्त्या ला आदाने 'आतोऽनुपसर्गे कः' कप्रत्यये आकारलोपे कोः कादेशे कालः। उताहो काल कालोपदेशे (इयत्तया कालनिश्चयार्थोपदेशे) कालयति सर्वमिति पचाद्यचि कालः। कु ईषद् अलति, अचि कोः कादेशे अथवा के स्वस्वरूपे सुखे आ समन्ताद् लाति आदत्ते गृह्णाति प्राणिसमूहमिति कालः। तत्र कालः कृष्णवर्णोऽस्ति अस्या इति काली।'जानपदकुण्डगोणस्थलभाजनागकालनीलकेशकवरादित्यादिसूत्रेण ङीषि काली जाता। कालः कृष्णवर्णोऽस्त्यस्य 'अर्श आदिभ्योऽच्' अथवा कालः शिवस्तस्य पत्नी इति काली, 'पुंयोगादाख्यायाम्' इति ङीषि वा।

इत्थं निरुक्तिव्युत्पत्तिभ्यां व्युत्पन्नः कालीशब्दो नानाकोषाभिधानादिग्रन्थानुसारेण क्षीरकीटे, मातृभेदे, उमायाम्, नवमेघसमूहे, परीवादे, कालाञ्जन्याम्, त्रिवृति-रात्रौ, अग्निशिखाभेदे, वृश्चिकालीवृक्षे, लतायाम्, शान्तनुराजपत्न्याम्, भीमसेनस्य पत्नीभेदे च वर्तते।

अत्र प्रसङ्गात् कालविषये किञ्चिद् वच्मि—

एवं निष्पन्नः कालशब्दः परमेश्वरवाचकः, कालवाचकः, कृष्णवर्णादिवाचकश्च। शैवागमे षट्त्रिंशत्तत्त्वेषु कालो नवमं तत्त्वम्।

कालस्य श्रुतौ पुराणे तन्त्रादिषु सर्वत्र बहुधा चर्चा वर्तते। एष च यद्यप्यनादिः, अनन्तः, अजरः, परः, सर्वगः, स्वतन्त्रः, सर्वात्मा, एकः, महेश्वरः, कविः, अखण्डः, अनादिनिधनः, रुद्रः, संकर्षणः, सर्वभूतशमनः, सर्वभूतकर्षणः,तथाप्युपाधिभेदाल्लव-त्रुटि-निमेष-क्षण-मुहूर्त्त-घटी-प्रहर-दिन-रात्रि-पक्ष-मासर्त्वयन-वर्ष-युग-कल्पादिभेदेनानन्तः। तदुक्तम्—**जन्यानां जनकः कालः'**। अन्यच्च—

**नित्यो जन्यश्च कालौ द्वौ तयोराद्यः परेश्वरः।**
**सोऽवाङ्मनसगम्योऽपि देही भक्तानुकम्पया॥**
**निश्चितं कालनानात्वमनादिनिधनं च यत्।**
**कीर्तितं यत् पुरस्तान्मे सूते यश्चात्ति च प्रजाः॥**
**भूतानामन्तकृत्कालः कालोऽन्यः कलनात्मकः॥**

(महाभा०, शा० प० २३८।१९-२०)

देवीपुराणे देव्या नामनिरुक्तिप्रकरणे काल्या निरुक्तिरेवमुक्ता—

**काली दक्षापमानेन सर्वशत्रुनिवर्हणी ।**
**कलना कालसंख्या वा काली देवेषु गीयते ॥**
**कपालं ब्रह्मकं जातं करे धारयते सदा ।**
**कपाली तेन सा प्रोक्ता कलनाद् वाक्पालिनी ॥** (३७।१४-१५)

## महाकाली

भगवती महाकाली महाकालादन्या कापि न; अपि तु भगवतो महाकालस्य शक्तिरेवास्ति । शिवदशावतारवर्णनप्रसङ्गे शिवपुराणस्य शतरुद्रसंहितायाः सप्तदशाध्याये निगदितम्—

**तत्राद्यो हि महाकालो भुक्तिमुक्तिप्रदः सताम् ।**
**शक्तिस्तत्र महाकाली भक्तेप्सितफलप्रदा ॥ २ ॥**

स च महाकालः कालो वा साक्षाच्छिवः । तदुक्तं कूर्मपुराणे—

**मायावी सर्वशक्तीशः कालः कालकरः प्रभुः ।**
**करोति कालः सकलं संहरते काल एव हि ॥**
**कालः स्थापयते विश्वं कालाधीनमिदं जगत् ॥**

(कू० पु० ११।३८-३९)

जगतः कर्ता, धर्ता, हर्ता काल एव, स च शिवस्तस्य स्त्री शक्तिर्वा कालविशिष्टा वा काली महाकालीति । पुराणेष्वेतद् बहुधा चर्चितम्—

**न शिवेन विना देवी न देव्या च विना शिवः ।**

अवसरप्राप्तत्वात् कालस्य जगत्कर्तृत्वादि निरूप्यते—पुरुषप्रकृतिसंयोगाज्जायत इति प्रायः सर्वविदितमेव । तत्र पुरुषस्य भेदद्वयम्—कालो यज्ञश्च, कालोऽनादिर्व्यापकश्च, यज्ञः सादिः परिच्छिन्नश्च । कालपुरुषः

सृष्टेः प्रवर्तकः, यज्ञपुरुषश्च कालपुरुषसाहाय्येन विश्वं रचयति। तस्य कालस्योदरेऽनन्तविश्वचक्रं नित्यं भ्रमति। स एव पुरुषो मन्त्रसंहितायां कालनाम्ना, उपनिषत्सु परात्परनाम्ना प्रसिध्यति। सर्वमृत्युघन-अमृत-तत्त्वस्यैव संज्ञा परात्परोऽस्ति। अमृततत्त्वं सत्यं तथा मृत्युतत्त्वमसत्, द्वेऽपि तत्त्वे मिथ ओतप्रोते, तत्रामृततत्त्वं निरञ्जनं निर्गुणं शान्तं शाश्वतम् अभयं पूर्णमिति, द्वितीयं साञ्जनं सगुणम् अशान्तं सभयम्। इमे उभे तत्त्वे तमःप्रकाशवत् परस्परमत्यन्तविरुद्धस्वभावेऽविनाभूते स्तः। द्वयोराधाराधेयभावनिर्णयो जटिल एव। द्वयोरेकत्र सर्वथा एकमेव सत्, यस्य कदापि नो विनाशः, अपरत्र सर्वथा असदेवास्ति, यस्य विनाश एवास्ति स्वरूपम्। सदसदोरमृतमृत्य्वोः समष्टिरेव कालपुरुषः। न हि केवलमसदेवास्ति नास्ति केवलं सत्; अपि तु विलक्षणं परात्पर इति, अयमेव कालपुरुषः। उक्तविषये विमृश्यमिदम्, शतपथे—

**अनन्तरं मृत्योरमृतं मृत्यावमृतमाहितम्।** (१०।५।२)

शुक्लयजुषि—

**तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः।** (४०।६)

गीतायाम्—

**अमृतश्चैव मृत्युश्च सदसच्चाहमर्जुन।**

शतपथे—

**नैव वा इदमग्रेऽसदासीद् आसीदिव वा इदमग्रे नैवासीत्।**
**तस्मादेतद् ऋषिणाभ्युक्तं नासदासीन्नो सदासीत्तदानीम्॥**
(१०।४।१)

अस्मिन्नेव निरवधिके परात्परतत्त्वे विलक्षणधर्माणो मायारश्मयः प्रतिक्षणमुदयन्ति विलीयन्ते च। यथा समुद्रे बुद्बुदाः प्रभवन्ति क्षणानन्तरं विनश्यन्ति च। मायाबलमेवासीमितं सीमितं निरवधिकं सावधिकं करोति। यस्याः प्रभावाद् विश्वातीतो विश्वात्मको भवति। या शक्तिः कालं यज्ञरूपेण परिणमयति, सैव महामाया प्रकृतिरुच्यते। अस्या एव समन्वयात्

स कालपुरुषो यत्किञ्चित्प्रदेशेन सीमितो भूत्वा कामनाचक्रे स्वं बध्नाति । एकैकमायाबलादेकैकं विश्वचक्रमुत्पद्यते । मायाबलान्यनन्तानि, अतोऽनन्तं विश्वचक्रं वर्तते, तद्रोमकूपेष्वेकैकं ब्रह्माण्डं लम्बते । अनन्त-विश्वाधिष्ठाता स कालपुरुषो नियतरूपेण खड्गं हस्ते कृत्वा सर्वान् प्रशास्ति । सर्वे लोकाः सर्वाणि भूतानि सर्वमेव विश्वचक्रं तमनुवर्तते तच्छा-सनेऽनुरक्तम् । अत्र द्रष्टव्यैषाऽथर्वसंहिता—

**कालोऽश्वो वहति सप्तरश्मिः सहस्राक्षोऽजरो भूरिरेताः ।**
**तमारोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वाः ।।**
**स इमा विश्वा भुवनान्यञ्जत् कालः स इयते प्रथमो नु देवः ।**
**स एव सम्भुवनान्याभरत् स एव सम्भुवनानि पर्य्यैत् ।।**
**पिता सन्नभवत् पुत्र एषां तस्माद् वै नान्यत् परमस्ति तेजः ।।**

**कालोऽमुं दिवमजनयत् काल इमाः पृथिवीरुत ।**
**कालेऽहं भूतं भव्यं पोषितं ह वै तिष्ठते ।।**

**काले तपः काले ज्येष्ठं काले ब्रह्म समाहितम् ।**
**कालो ह सर्वस्येश्वरो यः पितासीत् प्रजायेत ।।**
**कालः प्रजा असृजत कालो अग्रे प्रजापतिम् ।**
**स्वयम्भूः कश्यपः कालात् तपः कालादजायत ।।**
**कालेऽयमङ्गिरा देवोऽथर्वा चाधितिष्ठतः ।।**

**इमं च लोकं परमञ्च लोकं**
**पुण्यांश्च लोकान् विधृतीश्च पुण्याः ।**
**सर्वान् लोकानभिजित्य ब्रह्मणा**
**कालः स इयते परमो नु देवः ।।** (१९।६।५३-४४)

**कालः प्रजा असृजत्** (१९।६), **कालाद् ऋचः समभवन्, यजुः कालादजायत** (१९।५४) ।

अन्यत्र स एव कालोऽनुपाख्यं तम एव विश्वाभावरूपः कथ्यते, अत एव सद्रूपत्वेऽपि समेषां ज्ञानचक्षुषः परत्वात् तमसदिति कथयन्ति मुनयः। असत्पदेनाभावो न गृह्यते; अपि तु विश्वकाले सद्विलक्षणं किन्तु सदिति तात्पर्यम् ।

यथोक्तम् ऋग्वेदे—तम आसीत् तमसाग्रजाहमग्रेऽप्रकेतम् (७।१२९।३) असदेवेदमग्र आसीत् । तत् सदासीत् । कथमसतः सञ्जायेत । ततः समभवम् । आण्डं निरवर्तत ।

स एवासत्, किन्तु सत्कालपुरुषो महामायापरिच्छिन्नो भवति । अपरिमिते कालपुरुषे न कस्यचिदभावोऽस्ति । स चाप्तकामः, अप्राप्तवस्तुनः कामना जायते; किन्तु तस्मिन् व्यापके तु सर्वमेवास्ति, अत एव तस्य कामना नास्ति; परन्तु तस्यैव मायावान् प्रदेशः सीमितो भूत्वा अनाप्तकामः सन् काममयो भवति । एषैव कामना 'एकोऽहं बहु स्याम् प्रजायेय' इति । मायाबलाऽव्यवहितोत्तरकाले तस्य हृदयबलमुत्पद्यते तदेव कामनामयं भवन्मनो भवति । मनसो व्यापारः कामना तथा मनसः स्थानं हृदयमेव 'हृत्प्रतिष्ठम्', तस्माच्च मनसो रेतः प्रथममजायत–'कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्' (ऋ० सं० १०।१२९।४) । अत्र रेतःपदेन भूतकामनाभीष्टा । ततः पञ्चीकृतप्राणाप्वागन्नान्नादेति पञ्चजना उत्पद्यन्ते, तेभ्यो वेदास्ततो लोकप्रजाभूतपशव इति पुरञ्जना अजायन्त । अत्र क्रमे मन्तव्यैषा श्रुतिः—'सोऽपः सृजत वाच एव लोकात्—वागेवमन्वसृज्यत' (शत० ६।१।३) अत्र तन्मात्रा अभीष्टाः । अत्र आप्पदेन सोमः, अथर्वा वा गृहीतः, स च भृग्वङ्गिरोभेदेन द्विधा तथा घनतरलविरलावरलावस्थाभिरापः षट् त्रयी—ब्रह्म चतुष्कलं द्वयोः समन्वयाद् विराट् पुरुषो जायते । अर्थाद् वेदमूर्तिः पूर्णपुरुषो दशकलः (ऋक्सामादिभेदेन) स्वं भागद्वये विभज्य विराजं जनयति । स च (ऋक्, साम, यत्-जू, आपः, वायुः, सोमः, यमः, अग्निः, आदित्यः) दशकलात्मकोऽक्षरप्रजापतिरूपेण परिणतो भूत्वा दशकलो वर्तते—'दशाक्षरो वै विराट्' (श० १।१।२) । अयं विराट्पुरुष एव यज्ञपुरुषः । एवं विश्वात्मको विराट्पुरुषो दशावयवः, अतः प्राजापत्या विश्वविद्या अपि दशावयवा–'दशाक्षरा वै विराट्' (शत० १।१।१) । दशमः पूर्णः स एव महाकालो विश्वातीतः

परात्परोऽस्ति। एतेनेदमायाति यत् सृष्टिविद्या दशधा विभक्ता, अर्थाद् एकः पुरुषः दश पुरुषा भवन्ति, स च पुरुषः प्रकृत्यविनाभूतः। एवं सति महाकालस्तच्छक्तिर्महाकाली एक एवास्तीति सिद्धयति। आगमशास्त्रम् एता दश शक्तीर्निरूपयति, ता एव शक्तयो दश महाविद्या इति। तत्र महाकाली मुख्या अपरास्तदङ्गभूताः। एवं सिद्धयति महाकालस्य शिवस्य शक्तिस्ततोऽभिन्ना महाकाली।

## कालीस्वरूपविमर्शः

यद्यपि काल्याः कृष्णवर्णत्वं लोकव्यवहारपरम्परया कालीशब्दान्वर्थतया च निश्चीयते, तामसी कालरात्रीत्यादिशब्दप्रयोगैश्च दृढीक्रियते, तथापि वस्तुतः सा सुन्दरी (सौम्या सौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी), अन्यथा तद्रूपविलोकनमात्रेण विमोहितानां बहूनां पुराणचर्चितानां कथानामसङ्गतिः स्यात्। अत्र यदस्या घोररूपत्वं निरूपितं तत्तु कार्यविशेषवशात्। नेयं कृष्णवर्णमात्रत्वात् काली; अपि तु कालविशिष्टत्वात्, कालरूपत्वात्, कालशक्तित्वात्, कालस्य शिवस्य स्त्रीत्वादपि काली। तमोगुणविशिष्टत्वाद् अन्धकारमोहाज्ञानमयत्वाच्च तामसी, एतस्मादेव च कालरात्रीति। तमोगुणो हि गुणत्रयान्तर्गत एको गुणः, यः सांख्यशास्त्रानुसारेण भूतादितत्त्वानां जनकः, अर्थादुत्पादनशीलः, वेदान्तोऽप्यत्रानुमोदते तदेव, एवं तमोगुणविशिष्टा तामसी जगदुत्पादयित्री, आद्या विश्वातीता च। श्रुतिरपि वदति—

**"असदेवेदमग्र आसीत्, तम असीत् तमसाग्रजमहमग्रे···"** ॥

(ऋ० सं० ७।१२९।३)

देवीभागवते हिमवन्तं देव्याह—

**"अहमेवास पूर्वं नान्यत् किञ्चिन्नगाधिप"**।

एवमस्याः सृष्टिकर्तृत्वात्तमोविशिष्टत्वाद् अन्धकारमयत्वात्कालीत्वं तामसीत्वं कालरात्रित्वं च सिद्धयति (कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा)। जगतः संहारकर्तृत्वात् संहारे च घोररूपत्वाद् अज्ञानेन जगदा-

२

च्छादकत्वाच्च कृष्णत्वं तामसत्वं कालरात्रित्वञ्चात्र संघटते। तस्मादेव वदन्त्येनां महामायां महामोहां योगमायाञ्च।

**काल्याः स्वरूपम्**—शवारूढा, महाभीमा, घोरदंष्ट्रा, चतुर्भुजा, खड्गमुण्डवराभयकरा, मुण्डमालाधरा, लोलजिह्वा, दिगम्बरा, श्मशानवासिनीति। प्रलयकारिण्याः प्रलये जगद्विनाशानन्तरं शवरूपस्य विश्वस्याथवा शवरूपस्य शिवस्योपरि आरूढत्वात् तथा जगद्विनाशानन्तरं जगन्निर्जनत्वात् श्मशानं श्मशानसदृशमेव भवति तत्रैव निवासत्वात्, एवं विश्वरूपावरणविनाशे जाते प्रलयेऽवशिष्टस्य दिक्समूहस्य सत्त्वाद् दिशामेवाम्बरत्वात् शवारूढा दिगम्बरा, श्मशानालयवासिनीति संज्ञा विशिनष्टि। प्रलये च स्वविजयोल्लासाद्धसन्मुखी तदानीं भयङ्कराकारान्महाभीमा घोरदंष्ट्रा च। भक्तानां कल्याणहेतवे खड्गादिधारिणी जगन्निदानभूतबीजस्वरूपमुण्डमालाधारिणी, केचन वर्णरूपमुण्डमालाधारिणीति वदन्ति। महाकाशस्य चतस्रो भुजा एव तस्या भुजास्ताभिर्युता। इत्थं कालीस्वरूपं बहुधा विवृतं तत्त्वज्ञैर्विस्तरेण बहुषु पुस्तकेषु। एकैकविशेषणपदानां विस्तरेण बहुप्रकारेण गूढार्थः प्रकाशितः। विषयेऽस्मिन् आगमतत्त्वविलासादिग्रन्थोऽवलोकनीयः।

## कालिकावैशिष्ट्यम्

या लोके विश्रुता महामहाब्रह्मविद्या सा कालिकाविद्यैव[1]। अस्या विद्याया उपासका ब्रह्मविष्णुशिवेन्द्रादय आसन्। अस्या विद्यायाः प्रभावेण सर्वे स्वस्वकार्यं कुर्वन्ति।

अस्य विश्वस्योत्पत्तिस्थितिलयात्मकक्रियाणां सञ्चालनं ब्रह्मस्वरूपिणी महाशक्तिः करोति सा च दशभावेषु विभक्ता दशमहाविद्याख्यायते। तत्र नव महाविद्याः क्रियात्मिकाः, एका च क्रियाधारभूता। इयमेव क्रियाधारिणी महाशक्तिः कालिकेति।

---

१. यो० त० २।४।

अस्येदं तात्पर्यम्—उत्पत्तिस्थितिलयेषु प्रत्येकक्रियासु त्रयो भागा आदिमध्यान्तरूपेण। एवं नवभागात्मिकाः क्रिया भवन्ति। उत्पत्तिस्तु रजोगुणात्मिका, स्थितिस्तु सत्त्वगुणात्मिका, लयक्रिया तमोगुणात्मिका। एवं नवानां क्रियाणां सञ्चालिका नव महाविद्याः सन्ति। आसां समासाम् अधिष्ठात्री कालिका महाविद्या।

## काली-आराधनायाः कालक्रमः

वैदिकवाङ्मये शक्त्युल्लेखादवगम्यते यदियं शक्त्युपासना वेदसमकालिकी अथवा आदिकालभवा। नैतादृश्युक्तिरत्युक्तिमधिरोहति। यद्यपि वेदोक्तः शक्तिशब्द एकवचनान्तो बहुवचनान्तो वा परमात्मसम्बन्धिनीं शक्तिमेव बोधयति, कदाचित् स्थलविशेषानुरोधेन शक्तिशब्दोऽन्यार्थेषु कवि-पुरोहित-यजमानाद्यर्थेषु प्रयुक्तो दृश्यते, तथापि नैकान्तत इदमेव निर्णेतुं शक्यत एतावता; अपि तु तदितरस्मिन्नर्थेऽपि प्रतीयते। यतो हि वेदे क्वचन शक्तिस्थाने मायाशब्दः शचीशब्दो वा दृश्यते तथा एतच्छब्दसम्बद्धा विषयाः सृष्टि-रक्षा-शौर्यौदार्यात्मिकाः प्राप्यन्ते। सैषा शक्तिर्यथा परमात्मसम्बद्धा तथाऽन्यदेवतासम्बद्धापि स्वतन्त्रा च दृश्यते। वेदे यथा इन्द्रस्य वाऽन्यस्य शक्तिर्जविषी, इन्द्राणी, वरुणानी, अग्नायी इत्यादि, वाक्शक्तिः स्वतन्त्ररूपेण स्तुता वेदे। एतासामुपासनापि तत्र निर्दिष्टा। एता देव्यो देवानां पत्नीत्वेनापि व्याहृताः।

केनोपनिषदि देव्या उमायाश्चर्चा श्वेताश्वतरेऽपि शक्तेश्चर्चा स्पष्टा वर्तते। नारायणोपनिषदि दुर्गास्तुतिरपि लभ्यते। शांखायनगृह्यसूत्रे भद्रकाल्या नामास्ति। एतेनेदमवगम्यते यत् संहितोपनिषत्सूत्रकाले येन केन रूपेण शक्त्युपासनाऽऽसीत्। महाभारते विराट्पर्वणि दुर्गास्तवः प्राप्यते। एवं बृहत्संहिता-वृद्धहारीतस्मृति-विष्णुपुराणेषु दुर्गामातृवेदगर्भादिशब्दानामुल्लेखोऽस्ति। एतेन सिध्यति महाभारतप्रभृतिकालेऽपि शक्त्यादिदेवीनामुपासनाऽऽसीत्। ततः परवर्तिकाले पुराणतन्त्रागमादिसमये भूरिशोऽवलोक्यते विभिन्नदेवीनामुपासनापचित्याराधनासमर्चाविधिसङ्ग्रहः। एतावता सिद्धयतीदं यत् प्राचीनवैदिककालादारभ्य महाभारतकालपर्यन्तं बीजरूपेण

विद्यमानेयं शक्त्युपासना पुराणादिकाले पूर्णतामापन्ना तन्त्रागमकालेऽभितः प्रसृता विकसिता च। कालिदासबाणसाहित्यदर्शनेनाप्यवगम्यते यत्तदानीमासीदियमुपासना।

पाश्चात्त्या विवेचकाः फर्कुहरप्रभृतयः कथयन्ति यत्पुराणयुगानन्तरम् अर्थात् ख्रीष्टषष्ठशताब्द्यनन्तरं तान्त्रिकधारा प्रबलरूपेण प्रसृता। ५०० ईशवीयतः ९०० ई० पर्यन्तं कालं शाक्तयुगसंज्ञकं समाचख्यौ लोकः[1]। त इदमेव मन्यन्ते यदस्मिन्नेवान्तराले शाक्तग्रन्थानां निर्माणमभूत्, मन्त्रमाहात्म्यवृद्धिश्च; किन्तु कथनमिदं विरुणद्धि यद् बुद्धयुगेऽपि तन्त्रसाधना आसीत्। बुद्धयुगस्य विवरणमेतत्–शुद्धहीनयानमतस्थितिः ४५० ख्राष्टाब्दपूर्वतः ३५० ख्रीष्टाब्दपूर्वं यावत्। मिश्रितहीनयानमतस्थितिः २५० ख्रीष्टाब्दपूर्वतः १०० ख्रीष्टाब्दपूर्वं यावत्। महायानमतस्य प्रारम्भकालस्तथा तद्विकाससमयश्च १०० ख्रीष्टाब्दपूर्वतः ३०० ख्रीष्टाब्दं यावत्। अस्मिन्नेव समये बौद्धतान्त्रिकधाराऽऽविर्भूता, औण्ड्रप्रदेशादिषु विकसिता च। तदानीमेव प्रज्ञापारमितादिनिर्माणमभूत्। विद्याधरपिटक-मञ्जुश्रीमूलकल्पसद्धर्मपुण्डरीकामृतायुध्यानसूत्रकरणव्यूहसुखावतीव्यूहतथागतगुह्यसूत्रगुह्य - समाजप्रभृतयो ग्रन्था बौद्धतान्त्रिकसाधनाया मूलभूताः। एषां ग्रन्थानां रचना ईशापूर्वं पश्चाद् वा जाता।

एतदङ्गीकारे सति शाक्तयुगस्य प्रारम्भः पुराणकालादनन्तरं सप्तमशताब्द्यामासीदिति कथनं निकषोपलं न कषति। अपि च पुराणेष्वपि शाक्तशैववैष्णवादिसाधनास्वरूपं मन्त्रयन्त्रादिप्रयोगो विविधानुष्ठानञ्चेति प्राप्यते। अतस्तत्पश्चाद्भावित्वं न घटते। एवं बौद्धतन्त्रेष्वपि शैवादितन्त्राणां प्रभावः साक्षाल्लक्ष्यते तादृग्विधानमपि दृश्यते। अतो बौद्धतन्त्रपरवर्तित्वमेषामित्यपि वक्तुं नोचितम्। भारतीया अपि विद्वांसः डॉ० बी० भट्टाचार्याः साधनमालाया भूमिकायां तथा अभयङ्करगुप्तकृतनिष्पन्नयोगावली-ग्रन्थस्य भूमिकायां 'बौद्धतन्त्रसाधना हिन्दूतन्त्रसाधनापेक्षया श्रेष्ठा प्राचीना च', अपि च 'अभिचारक्रिया बौद्धैराविष्कृता तत एव हिन्दूतन्त्रैर्गृहीता' इत्याद्यवोचन्। तत्र मया किमपि न वक्तव्यं तत्कथने तु बहवो

---

१. दि रिलीजन्स काम्ट आफ इण्डिया–जे० एन० फर्कुहर, पृ० १६७।

विवदन्ति । मया त्वत्रैतदेवोच्यते यद् द्रष्टव्यमेवाथर्ववेद-मैत्रायण्युपनिषदादि । पी० बी० काणे-महोदयोऽपि हिन्दूतन्त्रपूर्ववर्तित्वं न मन्यते बौद्धतन्त्राणाम् । भट्टाचार्य एव तत्परो दृश्यते बौद्धतन्त्राणां महत्त्वाङ्गीकारे । उभयोस्तन्त्रयोर्व्यतिकरं सर्वं आमनन्ति ।

श्रीदेवीप्रसादचट्टोपाध्यायस्तु मन्यते यत् तान्त्रिकधारा कृषिव्यवस्थया सह सम्बद्धेति । एवं सति विचारणीयोऽयं विषयो यत्कृषिव्यवस्थैव कदाविर्भूता ? रुद्राष्टाध्याय्यामनेकान्ननामगणना वर्तते । यदि तदानीमन्नोत्पत्तिर्नाभविष्यत्तर्हि नामानि कुत आयान्ति स्म । एवं वेनीकान्तकाकती-[1] महोदयः कथयत्येवं यत्— शाक्तपूजा किरातेभ्यो गृहीता तत्र प्रमाणरूपेण योगिनीतन्त्रमुपस्थापयति । एवं त्रिपुरासम्प्रदायोऽपि दाक्षिणात्यः,तथा वैष्णवैरपि पाञ्चरात्रे साधारणजनेभ्यः शाक्तपूजा गृहीता । यथा आर्यैर्द्रविडधर्म आत्मसात्कृतः, तथैव शाक्तपूजापि सामान्येनोपनीतेति । एतादृशमेव कथयन्ति डॉ० कौशाम्बीमहोदयोऽपि[2] ।

## काली-उपासनाया निर्देशः

चिरादेवाध्यात्मिकाभ्युदयाय ज्ञानकर्मोपासनाख्यास्त्रयः पन्थानः शास्त्रैर्महाजनैश्च निर्दिष्टा आसेविताश्च भारतीयैः सद्भिर्जनैः सातत्येन प्रचलन्तो वर्तन्ते । तेषु त्रिषूपासनायाः सारल्येन सर्वाधिकृतत्वेन चैषा सर्वत्र व्याप्ता विराजते, वर्णिता च श्रुतिस्मृतिपुराणागमादिषु विस्तरेण । सा चोपासना देवभेदाद् बहुविधा । उपासकाश्चापि भिन्न-भिन्न-देवोपासनया विभिन्न-सम्प्रदायेषु दीक्षिता विभक्ता बहवः सन्ति । यथा—वैष्णवाः, शैवाः, शाक्ताः, सौराः, गाणपता इत्यादयः । एते सर्वेऽपि सम्प्रदायिनो यथारुचि श्रुतिं पुराणम् आगमं साम्प्रदायिकग्रन्थं पद्धतिश्चाश्रित्य यथाविधि समुपासते ।

---

१. 'दि मदर गुड्स आफ कामाख्या'—वेनीकान्त काकती, गोहाटी, १९४८, पृ० ४० ।

२. डी० डी० कौशाम्बी : इन इन्टरडक्शन आफ दी स्तूप आफ इण्डियन हिस्टोरी, बंबई, १९५६, पृ० २३-४८ ।

माता कारुण्यमयी भवति, आशु तुष्यति, कदापि न रुष्यति, अपराधञ्च क्षमते, इत्यादिहेतोर्जनानां स्वाभाविकी प्रवृत्तिः शक्त्युपासनायां विद्यते। इयञ्च शक्त्युपासना श्रौती, स्मार्ती, आगमिकी त्रिविधा प्रवर्तते। तासु युगानुसारेणागमिकी शीघ्रफलप्रदा। तदुक्तं महानिर्वाणतन्त्रे—

**कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः।**
**आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः॥**
**न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः॥** इति।

अपि च—

**कृते श्रुत्युक्तमार्गः स्यात् त्रेतायां स्मृतिसम्मतः।**
**द्वापरे तु पुराणोक्तं कलावागमसम्मतः॥**

तन्त्रसारेऽपि—

**अशुद्धाः शूद्रकर्माणो ब्राह्मणाः कलिसम्भवाः।**
**तेषामागममार्गेण सिद्धिर्न श्रौतवर्त्मना॥** इति।

शक्तेर्विविधभेदात् सैषोपासनापि विविधा बहुरूपा च। तत्र काल्युपासना तन्त्रज्ञापिता कलौ हितकारिणी सर्वापेक्षया—

**काली काली कलौ काली नान्यदेवाः कलौ युगे।**
**कलौ जागर्ति गोपालः कलौ जागर्ति कालिका॥**

अन्यत्रापि तन्त्रे कङ्कालमालिन्याम्—

**कालिका भैरवी देवी जागर्ति हि सदा कलौ।**
**तारा चैव महाविद्या तथा त्रिपुरसुन्दरी॥**
**धनदा छिन्नमस्ता च मातङ्गी बगलामुखी।**
**त्वरिता ह्यन्नपूर्णा च तथा वाग्वादिनी प्रिये॥**

महिषघ्नी विशालाक्षी तारिणी भुवनेशिका ।
धूमावती भैरवी च तथा प्रत्यङ्गिरादिका ॥
दुर्गा शाकम्भरी चैव कलिकाले तु निद्रिता ।
एतासां जपमात्रेण निद्राभङ्गोऽभिजायते ॥

क्वचनैतच्छ्रूयते यदन्या देव्यो देवैर्महर्षिभिर्वा शप्ता स्वकार्यं साधयितुं न शक्ता यावच्छापविमोचनम्, केवलं कालो शापरहिता कलौ शक्ता शक्तिप्रदर्शने । यथा चोक्तं विद्यार्णवतन्त्रे तन्त्रसारे भैरवतन्त्रे च—

अथ वक्ष्ये महाविद्याः कालिकायाः सुदुर्लभाः ।
यासां विज्ञानमात्रेण जीवन्मुक्तो भवेन्नरः ॥ १ ॥

नात्र चित्तादिशुद्धिः स्यान्नारिमित्रादिलक्षणम् ।
न वा प्रयासबाहुल्यं समयासमयादिकम् ॥ २ ॥

न वित्तव्ययबाहुल्यं कायक्लेशकरं न च ।
य एनां चिन्तयेन्मन्त्री सर्वकार्यसमृद्धिदाम् ॥ ३ ॥

तस्य हस्ते सदैवास्ति सर्वसिद्धिर्न संशयः ।
गद्यपद्यमयी वाणी सभायां तस्य जायते ॥ ४ ॥

इत्यादि ।

कालीपूजनोपासनाया माहात्म्यमन्यत्रापि वर्णितम्, यथा पुरश्चर्यार्णव-ग्रन्थे (तारायन्त्रालयः, वाराणसी, संवत् १९५७) प्रथमतरङ्गे १२ पृष्ठे षडाम्नायान्तर्गत-उत्तराम्नायपोठस्थदेवतासु काल्या विशेषरूपेण चर्चाऽस्ति । तदुक्तं वाडवानलीयतन्त्रे—

सिद्धिर्लक्ष्मी गुह्यकाली महाभीमसरस्वती ।
धूम्रा कामकलाकाली महाकाली कपालिनी ॥

**महाश्मशानकाली च कालसंकर्षिणी तथा ।**
**प्रत्यङ्गिरा महारात्रिर्योगेशी सिद्धभैरवी ।।**

**एता बहुविद्यायुक्ताः सर्वविद्योत्तमोत्तमाः ।**
**उत्तराम्नायपीठस्थाश्चतुर्वर्गफलप्रदाः ।।**

एतदतिरिक्ताम्नायेष्वपि काल्याश्चर्चाऽस्ति; किन्त्वत्र विशेषतः । मुख्यत्वञ्चास्या यद् दशमहाविद्यासु प्रथमा कालीति गण्यते । अस्या भैरवो महाकाल इति । दशमहाविद्यास्वपि तिस्रो विशिष्यन्ते–काली, तारा, सुन्दरीति । तत्र काली नवधा, तत्रापि गुह्यकाली विशिष्यते । एतादृशी अन्यविद्या नास्ति । तदुक्तं महाकालसंहितायां मनुस्मृतिप्रकरणे—

**अनया सदृशी विद्या नास्ति ब्रह्माण्डगोलके ।**
**विद्याराज्ञी गुह्यकाली भिद्यते न कदाचन ।।**

कालिकामाहात्म्यं शक्तिसंगमेऽपि वर्णितम्—

**चतुर्युगानां राज्ञी वै कालिका परिकीर्तिता ।**
**विद्याराज्ञी सिद्धिविद्या कलौ शीघ्रफलप्रदा ।।**

देवीभागवतेऽपि कालिकाया वैशिष्ट्यं साधु वर्णितम्—

**रुष्टा क्षणेन संहर्तुं शक्ता विश्वं महेश्वरी ।**
**प्रधानांशस्वरूपा सा काली कमललोचना ।।**

**दुर्गाललाटसम्भूता रणे शुम्भनिशुम्भयोः ।**
**दुर्गार्धांशस्वरूपा (च) गुणेन तेजसा समा ।।**(दे०भा०९।१।८७-८८)

पूजनस्य च माहात्म्यं तत्रोक्तम्—

**कालिकां शत्रुनाशार्थं पूजयेद् भक्तिपूर्वकम् ।**
**ऐश्वर्यधनकामश्च चण्डिकां परिपूजयेत् ।।** (तत्रैव–३।२६।४८)

**पराम्बाभजनमेव कलौ उद्धारकारकम् ।** (दे०भा० ६।११)

कारणत्वञ्चात्र निर्दिष्टम्—

**काली कलयते सर्वं ब्रह्माण्डं सचराचरम् ।**
**कल्पान्तसमये या तां कालिकां पूजयाम्यहम् ॥** (तत्रैव–६।२६।५७)

**चण्डिकां चण्डरूपां च चण्डमुण्डविनाशिनीम् ।**
**तां चण्डपापहारिणीं च चण्डिकां पूजयाम्यहम् ॥**(तत्रैव–३।२६।२८)

**पुराऽष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।**
**प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ॥**

**अतोऽष्टम्यां विशेषेण कर्तव्यं पूजनं सदा ।**
**नानाविधोपहारैश्च गन्धमाल्यानुलेपनैः ॥** (तत्रैव–३।२७।९-१०)

किं बहुना पुरा कालो बहुभिर्देवैः समुपासिता । कुमारीतन्त्रे—

**तस्या उपासकाश्चैव ब्रह्मविष्णुशिवादयः ।**
**इन्द्रः सूर्यश्च वरुणः कुबेरोऽग्निस्तथापरः ॥**
**दुर्वासा च वसिष्ठश्च दत्तात्रेयो बृहस्पतिः ।**
**बहुना किमिहोक्तेन सर्वे देवा उपासकाः ॥**

कालिकाया माहात्म्यस्थानादिविषये स्कन्दपुराणान्तर्गतमानसखण्डे ९७ अध्याये वर्णितमित्थम्—

आधुनिकपिथौरागढजनपदान्तर्गतशैलनामकपर्वते महाकाल्याः स्थानमासीत् । नात्र शैलपदं पर्वतवाचकमपि तु संज्ञापदमिति स्पष्टीभवति तत्रत्यचतुर्दशश्लोकनिरीक्षणेन । एतदेव क्षेत्रं काल्याः, कदाचिद् विन्ध्येऽपि समासीत्; किन्तु शुम्भनिशुम्भवधाय देवैः प्रार्थिताऽत्रागता । शुम्भनिशुम्भयोरपि स्थानमाहोस्विदुपद्रवस्थानं विशेषरूपेण हिमालयक्षेत्रेष्वेवासी-

दिति सुस्पष्टं प्रतीयतेऽस्य पुराणस्य पठनात्। मार्कण्डेयपुराणान्तर्गतदुर्गा-सप्तशत्या एकादशेऽध्याये कथितम्—

**वैवस्वतेऽन्तरे प्राप्ते अष्टाविंशतिमे युगे।**
**शुम्भो निशुम्भश्चैवान्यावुत्पत्स्येते महासुरौ ॥ ४१ ॥**

**नन्दगोपगृहे जाता यशोदागर्भसम्भवा।**
**ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी ॥ ४२ ॥**

एतेनेदमायाति यत् शुम्भादिघातिन्या देव्याः स्थानं विन्ध्याचल एव, तथा तयोरसुरयोरपि। अस्य कथनस्य समायोजनं कल्पभेदेन कार्यम्। अथवा देवप्रार्थनावशाद् देव्या गमनं शैलप्रदेशे जातम्, इत्यपि वितर्क्य समाधेयम्। अत्रैव पञ्चमाध्यायावलोकनेन—

**कालिकेति समाख्याता हिमाचलकृताश्रया।** (५।८८)
**स दृष्ट्वा तां ततो देवीं तुहिनाचलसंस्थिताम् ॥** (५।८)
**स तत्र गत्वा यत्रास्ते शैलोद्देशेऽतिशोभने।** (५।१०४)

ज्ञायते यद् हिमालयान्तर्गतशैलप्रदेश एव काल्याः स्थानं तयोश्चापि।

**स्नातुमभ्याययौ तोये जाह्नव्या नृपनन्दन।** (५।८४)

अत्र जाह्नवीपदेन न गङ्गा गृह्यते; अपि तु शैलपर्वतस्य समीपे जाह्नवीनामकमेकं स्रोतो वर्तते।

शिवपुराणे उमासंहितायां २८-४५ अध्यायोपवर्णितकथायां मधुकैटभ-वधप्रसङ्गे निगदितं यत्—मधुकैटभवधार्थं ब्रह्मणा कृतायां स्तुतौ नारायण-जागरणहेतवे च सर्वविद्याधिष्ठात्री जगज्जननी फाल्गुनशुक्लद्वादश्यां त्रैलो-क्यमोहनशक्तिरूपेण प्रादुर्भूय महाकाली-नाम्ना ख्याता। आकाशवाण्या ब्रह्माणमाश्वास्य महामाया हरिनेत्रमुखाद्यङ्गान्निर्गत्य पद्मयोनेः सम्मुखे स्थिता विष्णुश्च जजागार।

# काली-उपासना

भावं भावनां वा विनोपासना स्थातुं नार्हति, उपासनाया मूलभित्तिः सैव, भावनानुकूलैव सिद्धिर्जायते, देवत्वेऽपि सैवाधारशिला, प्रसिद्धैवात्र भणितिः—**'यादृशी भावना यस्य सिद्धिर्भवति तादृशी, तस्माद् भावो हि दैवतम्'**। सामान्यरूपेण भावो द्विविधः प्रथमकल्पे। तत्र प्रथमो भावः—उपास्यदेवं प्रत्याराधकस्य सेव्यसेवकभावः, अर्थाद् उपास्यदेवं स्वामिनं मत्वाऽऽत्मानं सेवकं मत्वा समाराधना करणीया। द्वितीयो भावस्तु पितृमित्रभ्रातृस्वरूपः। तत्र प्रथमे मातरं कालीं विष्णुरूपेण समाराधयन्ति, द्वितीये तु मातृभगिन्यादिरूपेण दक्षिणकालीं नीलकालीं रक्तकालीं समाराधयन्ति। ईदृशी चर्चा परातन्त्रादावस्ति।

**बहूनि भेदरूपाणि कालिकाया महेश्वरि।**
**आज्ञासिद्धिप्रदा नित्या कौलमार्गप्रवर्तिका॥**

**महाकुलालिका या सा विष्णुः कालित्वमागताः॥**
(परात० ४।४४–४५)

मुण्डमालातन्त्रे—

**कृष्णस्तु कालिका साक्षाद् राममूर्तिश्च तारिणी।** इत्यादि।

तोडलतन्त्रे दशमपटले—

**तारादेवी मीनरूपा कमला कूर्ममूर्तिका।**
**धूमावती वराहः स्यात् छिन्नमस्ता नृसिंहिका॥ ८॥**
**भुवनेशी वामनः स्यान्मातङ्गी राममूर्तिका।**
**त्रिपुरा जामदग्न्यः स्याद् बलभद्रस्तु भैरवी॥ ९॥**
**महालक्ष्मीर्भवेद् बुद्धो दुर्गा स्यात् कल्किरूपिणी।**
**स्वयं भगवती काली कृष्णमूर्तिसमुद्भवा॥ १०॥**

इति ते कथितं देव्यवतारं दशमेव हि ।
एतासां पूजनाद्देवि महादेवसमो भवेत् ।। ११ ।।

परातन्त्रेऽप्यन्यत्र बहुरूपावतारत्वं विस्तरेण प्रतिपादितमस्ति । दक्षिणाम्नायविषये वडवानलतन्त्रे लिखितम्—

निशेशी दक्षिणाकाली वगला छिन्नमस्तका ।
भद्रा तारा च मातङ्गी दक्षिणाम्नायदेवता ।।

परातन्त्रे द्वितीयपटले—

जम्भिनी स्तम्भिनी तारा मोहिनी अन्धिनी शिवा ।
मृत्युञ्जया चर्चिका च सिंही दक्षिणकालिका ।।
प्रचण्डा उग्रचण्डा च उग्रतारा कपालिनी ।
त्वरिता छिन्नशीर्षा च वगला वाक्प्रदायिनी ।।
नीला सरस्वती भीमा त्रैलोक्यडामरेश्वरी ।
त्रैलोक्यविजया चण्डी रक्तचामुण्डभैरवी ।।
दक्षिणाम्नायदेवेशी नानाभेदविहारिणी ।।

बृहद्वडवानलतन्त्रे क्रमदीक्षापटले—

आद्या श्यामा दक्षिणा च दक्षिणाम्नायवर्त्मनि ।

निशेश्या ध्यानम्—

चतुर्वेदासना देवी महाफूत्कारसंस्थिता ।
प्रज्वलन्ती चितामध्ये दक्षिणे दक्षदा परा ।।
अलातचक्रवद् यस्या भ्रमन्तीं शिरमालिका ।
प्रपञ्चदक्षा ह्रस्वाङ्गी चास्थिचर्मविशेषिता ।।
व्याघ्रचर्मकटिवृता नरचर्मोत्तरीयका ।
सहस्रादित्यसंकाशा तप्तकाञ्चनसम्प्रभा ।।

पञ्चवक्त्रा चातिभीमा त्रिपञ्चनयनैर्वृता ।
ईषद्धास्या ललज्जिह्वा निम्ननाभिः कृशोदरी ॥
विकरालासने संस्था चक्रासनसंस्थिता ।
रौद्री भयापहा घोरा चन्द्रार्धकृतकेतना ॥
वर्वरोर्ध्वमुक्तकेशी नागराजविराजिता ।
कबन्धोष्णीषसंयुक्ता ब्रह्मशीर्षशिखामणिः ॥
सद्यश्छिन्नगलद्रक्तशिरोमालाविभूषिता ।
भुजषोडशसंयुक्ता गजकञ्चुकिकिङ्किणी ॥
पाशाङ्कुशकपालं च खट्वाङ्गं मुण्डडिण्डिमम् ।
खड्गखेटकबाणधनुश्चक्रदण्डकमण्डलुः ॥
अभयं वरदं चैव तर्जनीं च धृता करैः ।
मुदिता सिद्धमधुना शक्तिभिः परिवारिता ॥
हूं हूं हूंकारनादेन त्रासयन्ती सुरासुरान् ।
ऋग्यजुःसामाथर्वाख्यवेदस्योपरि संस्थिता ॥
शवरूपमहादेवहृदयोपरि संस्थिता ।
निशेशी सा महोग्रा च दक्षिणाचारवर्जिता ॥

अस्या मन्त्रान्तरं बहुशो वर्तते । निशेश्या भैरवो महाकालः, आद्या श्यामा दक्षिणेति तिसृणामेव भैरवो महाकालः, ध्यानं त्वेकमेव । आद्याकाल्या भैरवस्य महाकालस्य मन्त्रः सप्ताक्षरः, श्यामाया भैरवस्य महाकालस्य मन्त्रः षोडशाक्षरः । दक्षिणाकालिकाया भैरवस्य महाकालस्य मन्त्र एकविंशत्यक्षरात्मकः ।

महाकालस्य ध्यानम्—

कोटिकालानलाभासं चतुर्बाहुं त्रिलोचनम् ।
श्मशानाष्टकमध्यस्थं मुण्डाष्टकविभूषितम् ॥

**पञ्चप्रेतस्थितं देवं त्रिशूलं डमरुं तथा ।**
**खड्गं च खर्परं चैव वामदक्षिणयोगतः ॥**
**बिभ्रतं सुन्दरं देहं श्मशानभूतिविभूषितम् ।**
**नानाशवैः क्रीडमानं कालिकां हृदयस्थिताम् ॥**
**लालयन्तं रतासक्तं घोरचुम्बनतत्परम् ।**
**गृध्रगोमायुसंयुक्तं फेरवीगणसंयुतम् ॥**
**जटापटलशोभाढ्यं सर्वशून्यालये स्थितम् ।**
**सर्वशून्यं मुण्डभूषं प्रसन्नवदनं शिवम् ॥**

दक्षिणकाली दक्षिणाम्नायात्मिका, अतः कृष्णोऽपि दक्षिणाम्नायात्मकः । तदुक्तं कालीकृष्णयोरैक्यम् । गुह्यकाली तु उत्तराम्नायात्मिका तथा रक्तकाली (महात्रिपुरसुन्दरी) ऊर्ध्वाम्नायात्मिका, अत एवोक्तम्—

**'काली तु द्विविधा प्रोक्ता रक्ता श्यामा···' ।**

ललिताकृष्णयोरपि ऐक्यरूपं शास्त्रे निरूपितम्; परन्तु उर्ध्वाम्नायात्मिका पञ्चदशी त्रिपुरसुन्दरीरूपा ललिता एवात्र गृहीता, न तु पूर्वाम्नायात्मिका ललिता-भुवनेश्वरी ।

शक्तिसङ्गमतन्त्रे—

**कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा ।**
**लोकसंमोहनार्थाय स्वरूपं बिभ्रती परम् ॥**
**वेणुनादसमारम्भ-सर्वसम्मोहनक्षमम् ।**

महाकालसंहितायाम्—

**स्त्रीणां त्रैलोक्यजातानां कामोन्मादैकहेतवे ।**
**वंशीधरः कृष्णदेवः प्रकृतिर्विष्णुरुच्यते ॥**
**उभयोर्मेलनाद्देवि शिवशक्तिर्हि गीयते ॥**

दक्षिणकाल्या विपरीतरतातुरावस्थायां कामकलात्मकरूपेण शिव-शक्त्यात्मकरूपेण सत्त्वात् श्रीकृष्णस्य वंशीधरावस्थायां मन्त्रध्यानादि सर्वं दक्षिणाम्नायात्मकमस्ति । ध्यानं यथा—

**वृन्दारण्यगकल्पपादपतले सद्रत्नपीठेऽम्बुजे**
**शोणाभे वसुपुत्रके स्थितमजं पीताम्बरालङ्कृतम् ।**
**जीमूताभमनेकभूषणयुतं गोगोपगोपीवृतम् ।**
**गोविन्दं स्मरसुन्दरं मुनियुतं वेणुं रणन्तं स्मरेत् ॥**

रामतारयोस्तथा ताराकाल्योरैक्यं तारासुन्दर्योरैक्यं वर्तते ।

शक्तिसङ्गमतन्त्रे—

**कदाचिदाद्या श्रीकाली सैव ताराऽस्ति पार्वती ।**
**कदाचिदाद्या श्रीतारा पुं-रूपा राम-विग्रहा ॥**
**रावणस्य वधार्थाय देवानां स्थापनाय च ।**
**दैत्य-संहरणार्थाय पुं-रूपं बिभ्रती परम् ॥**
**आद्या तारा महाशक्तिः सैव काली महेश्वरी ।**
**या महा-वैष्णवा माया सा महा-सुन्दरी मता ॥**
**नैव स्त्री न पुमानेषा नैव चापि नपुंसकम् ।**
**यद्यच्छरीरमाधत्ते पूज्यते तेन तेन सा ॥**
**ब्राह्मी रौद्री वैष्णवीति शक्तयस्तिस्र एव हि ।**
**पुरं शरीरं यस्या सा त्रिपुरेति प्रकीर्तिता ॥**
**शवोपरि समासीनां रक्ताम्बर-परिच्छदाम् ।**
**रक्तालङ्कारसंयुक्तां गुञ्जा-हार-विभूषिताम् ॥**
**षोडशाब्दां च युवतीं पीनोन्नत-पयोधराम् ।**
**कपाल-कर्त्रिका-हस्तां परं ज्योतिःस्वरूपिणीम् ॥**

काली अनेकरूपा, अनेकनाम्नी शास्त्रोपवर्णिता विविधोपासनामयी। तोडलतन्त्रे काल्या अष्टविधत्वं प्रोक्तं यथा—

**दक्षिणा कालिका सिद्धकालिका गुह्यकालिका।**
**श्रीकालिका भद्रकाली चामुण्डा कालिका परा॥**
**श्मशानकालिका देवि महाकालीति चाष्टधा॥** (३।१७-१८)

वस्तुतस्तु काल्या उपासना योगगम्या योगमार्गेणैवाश्रयणीया तत एव वास्तविकी सिद्धिः। यतो हि अस्या स्थानं मूलाधारः कुण्डलिनी वा ये षट्चक्राणि,तद्भेदनम्, कुण्डलिनीम्, तदुद्बोधनम्, इडापिङ्गलासुषुम्णादि-नाडीस्वरूपम्, तत्कार्यम्, आसनानि, मुद्राः, परापश्यन्त्यादिवाचः, सम्यग् न जानन्ति, नापि अनुतिष्ठन्ति, ते कथमपि सिद्धिं न लभन्ते, इति ज्ञायते तन्त्रागमाद्यध्ययनेन। बाह्याचारोपासनादिभिर्भवतु काचिल्लौ-किकी सिद्धिरल्पाऽस्थायिनी च; किन्तु दुर्लभा स्यादात्यन्तिकी ऐकान्तिकी च। तदर्थं महान् साधकः सुयोग्योऽपेक्षितः। अन्यथा योगमार्गमारो-ढुमशक्तो भवेत्। तादृशीं साधकयोग्यतामवाप्तुं प्रथमतः सिद्धस्तत्त्वज्ञः साधनानिरतः सुयोग्यो गुरुरपेक्ष्यते यस्य मार्गदर्शने क्रियाप्रक्रियाया क्रमशो नाडीकुण्डलिनीचक्रादिज्ञानपूर्वकमुद्बोधनभेदनद्वारा धारणाध्यान-समाधिभिः, शक्तिपातेन वा उपास्यसाक्षात्कारः सिद्धिर्वा स्यात्। नैषा क्रिया गुरुं विना अध्ययनेन, उपदेशेन वा लाभकरी प्रत्युत हानिकरी एव। अत एव यावत्सु तन्त्रागमेषु दीक्षाया मुख्यं स्थानम्।

क्वचन केचन साधका अनुभवितारो वेत्थं वदन्ति यत् केवलाज्जपादपि नैष्ठिकगुणत्वमापन्ने सति स्वत एव सर्पिणीसमुद्बोधः शनैः शनैश्चक्र-भेदश्च जायते। एवमपि कथयन्ति केचित् परमनिष्ठायां जातायां साधना-रतस्य समुद्धरणाय साक्षादाशुतोष एव दीक्षयति। भवतु, किन्तु सुकरो मार्गो गुरुरेव। स शक्तिपातेन कुण्डलिन्युद्बोधने चक्राणां भेदे च प्रक्रिया-बोधनेन विघ्नानां निवारणेन महत् साहाय्यं करोति।

**दीक्षाग्निकर्मदग्धासौ मायाविच्छिन्नबन्धने।**
**गतो गतः कर्मबन्धो निर्जीवस्तु शिवो भवेत्॥**

# काल्युत्पत्तिकथा

कालिकापुराणे एकषष्टितमेऽध्याये वर्णितं यद् अन्धकसुतयोः शुम्भनिशुम्भासुरयोर्वधार्थं देवैर्हिमाचले स्तुता देवी मातङ्गवनितामूर्तिरूपेणाविर्भूय देवानपृच्छत् स्तुतिकारणम्। देवद्वारा स्वकष्टनिवेदनानन्तरं मातङ्गाश्रमे तस्या देव्याः कायकोशत एका देवी निःसृता या कृष्णासीत्; किन्तु सद्य एव सा गौरी जाता, सैव मातङ्गी कालिकाऽभवत् तथा हिमाचलमधिष्ठिता। एनां कालिकाम् ऋषयो वदन्त्युग्रतारामिति। उग्राद् भयात् त्राति देवानिति उग्रतारा। अस्या अपरं नाम एकजटापि। एषा चतुर्भुजा कृष्णवर्णा मुण्डमालाविभूषिता दक्षिणपाणिभ्यां खड्गं चामरं तत्रोर्ध्वेन खड्गमधस्तनेन चामरं तथा वामेनोर्ध्वेन करेण कर्त्रीमधस्तनेन वामेन करेण खर्परं दधती एकजटा, तया एकया जटया द्यां लिखन्ती शिरसि ग्रीवायाञ्च मुण्डमालां वक्षसा नागहारं बिभ्रती रक्तनेत्रा कृष्णवस्त्रा कट्यां व्याघ्राजिनं दधाना वामपादं शवहृदये दक्षिणपादं सिंहपृष्ठे विन्यस्य शवं लेलिहाना साट्टहासा महाघोरा घोररावा अतिभीषणा ताराऽऽसीत्। अस्या अष्टौ योगिन्यः—महाकाली, रुद्राणी, उग्रा, भीमा, घोरा, भ्रामरी, महारात्रिः, भैरवी च।

या च कालिकाकायकोशान्निःसृता सा कौशिकीनाम्ना ख्याता। एषा च कौशिकी चारुरूपा धम्मिल्लसंयतकेशा विविधभूषणभूषिता पद्ममाला रत्नकेयूरं दधाना पीतवस्त्रा दशभुजा वामैः करैरूर्ध्वादिक्रमेण शूलं वज्रं बाणं खड्गं शक्तिं च तथा दक्षिणैः करैरूर्ध्वादिक्रमेण गदां घण्टां चापं चर्म शङ्खं च दधाना सिंहाधिष्ठिता व्याघ्रचर्माम्बरा अतुल्यरूपा। अस्या योगिन्यः — ब्रह्माणी, माहेश्वरी, कौमारी, वाराही, वैष्णवी, नारसिंही, ऐन्द्री, शिवदूती च।

जगदम्बिकायाः (कौशिक्याः) ललाटाद् या काली निःसृता तस्याः स्वरूपम्—नीलकमलसदृशश्यामा चतुर्बाहुयुता दक्षिणोर्ध्वकरेण खट्वाङ्गं दक्षिणाधःकरेण खड्गं वामोर्ध्वकरेण चर्म वामाधःकरेण पाशं दधती मुण्डमालाविभूषिता व्याघ्रचर्मपरीधाना कृशाङ्गी दीर्घदंष्ट्रा अत्यन्तभीषणा

३

कोटराक्षी रक्तनयना नादभैरवा कबन्धवाहना विस्तृतकर्णा विस्तृतानना। एनां तारां चामुण्डां च कथयन्ति। अस्या योगिन्यः—त्रिपुरा, भीषणा, चण्डी, कर्त्री, हर्त्री, विधायिनी, कराला, शूलिनी च।

कौशिक्या हृदयान्निःसृता देवी शिवदूतीनाम्ना ख्याता। शुम्भपार्श्वे शिवं दूतरूपेणैषा प्रेषयामास तस्माच्छिवदूतीत्यभिहिता। अस्याः स्वरूपम्–चतुर्भुजा महाकाया सिन्दूरसदृशद्युतिः, रक्तदन्ता, मुण्डमालाधरा, जटाजूटार्धचन्द्रधृक्, नागकुण्डलहाराभ्यां शोभिता, व्याघ्रचर्मपरीधाना, दक्षिणाभ्यां भुजाभ्यां शूलं खड्गं तथा वामाभ्यां कराभ्यां पाशं चर्म च दधाना स्थूलवदना, पीनोष्ठौ, तुङ्गमूर्तिः, भयङ्करा, दक्षिणपादं शवोपरि वामपादं शृगालोपरि निःक्षिप्य तिष्ठन्ती शृगालशतैर्वृता। अस्या द्वादशयोगिन्यः—क्षेमकरी, शान्ता, वेदमाता, महोदरी, कराला, कामदा, भगास्या, भगमालिनी, भगोदरी, भगारोहा, भगजिह्वा, भगा इति।

अन्यत्र कालिकापुराणे (४१ अध्यायतः ४४ अध्यायं यावत् तथा २७९-३११ पृष्ठं यावत्, चौखम्बाप्रकाशनम्, १९७२) या पार्वत्याः कथा वर्णिता तत्र बहुषु स्थलेषु प्रायः सर्वत्रैव पार्वती कालीनाम्नैवाभिहिता। अत्रोदाहरणमुखेन कानिचिद् वाक्यान्युद्ध्रियन्ते—.

**कथं गिरिसुता काली बभूव जगतां प्रसूः।**
**दाक्षायणी त्यक्ततनुः कथमाप हरं पतिम्॥** (४१।१)
**ततः सा कालिकादेवी योगनिद्रा जगन्मयी॥** (४१।३९)
**तां तु नीलोत्पलदलश्यामां हिमवतः सुताम्।**
**कालीति नाम्ना हिमवानाजुहाव कृतोदने॥**
**बान्धवैस्तु समस्तैस्तन्नाम्ना सा पार्वतीति च।**
**कालीति च तथा नाम्ना कीर्तिता गिरिनन्दिनी॥**
(४१।४७-४८)

एतदध्यायोक्तकथया निश्चितमिदं यत् पार्वती जन्मना कृष्णवर्णत्वात् कालीति नाम्नैव गृहग्रामनगरजनपददेशेषु प्रथिताऽभूत्। पश्चात्

शिवेन सह विवाहानन्तरं कैलासे रममाणा सा कालीदेवी उर्वश्याद्यप्सरसां सविधे वार्ताप्रसङ्गे भगवता शङ्करेण **'काली भिन्नाञ्जनश्यामा'**इति वाक्येनाधिक्षिप्ता गौरत्वमाप्तुं पुनस्तपश्चक्रे। तेन तपसा सन्तुष्टो हरो गगनगङ्गाजले कालीं स्नापयित्वा गौरीमकरोत्। एतत् सर्वं ४५ अध्याये विस्तारेण वर्तते, विशेषतो जिज्ञासुभिस्तत्रैवावधेयम्। अनन्तरमस्मिन्नेवाध्याये भगवतः शम्भोः कायार्धदानमपि पार्वत्यै वर्णितं वैशद्येन, इदमपि ततो ज्ञेयम्।

**काली भूत्वा स्वर्णगौरी शरीरार्धं च शङ्करम्।**
**प्राप्तामोदा तदात्मानं सन्तुष्टा च जगन्मयी॥**

(का० पु० ४५।१६२)

अत्रोक्तकथयेदमवगम्यते यत् पार्वती जन्मना कृष्णवर्णाऽऽसीत्, पश्चात् तपसा गौरी जाता, अर्थात् तत्तपसा सन्तुष्टो विधाता वरप्रदानद्वारा तद्रूपपरिवर्तनं कृतवान्। अत्र किञ्चित्तत्रत्यं वाक्यमुद्ध्रियते—

**स मां श्यामलवर्णेति बहुशः प्रोक्तवान् भवः।**
**स्यामहं काञ्चनाकारा वाल्लभ्येन संयुता॥** (२९।४२)

शर्व उवाच—

**शरीरे मम तन्वङ्गी सिते भास्यसितद्युतिः।**
**भुजङ्गीवासिता शुभ्रे संश्लिष्टा चन्दने तरौ॥**
**चन्द्रज्योत्स्नाभिसंपृक्ता तामसी रजनी यथा।**
**रजनीवासिते पक्षे दृष्टिदोषं ददासि मे॥** (२७।६०-६१)

## भद्रकालीवृत्तम्

### (कालिकापुराणे ६० अध्याये)

कालिकापुराणे षष्टितमेऽध्याये वर्णितं यन्महिषासुरो रात्रौ स्वप्नं दृष्टवान्—'महामायया भद्रकाल्या मम शिरः खड्गेन छित्वा रक्तानि पीतानि' इति। प्रातरुत्थाय तेन सा देवी समाराधिता, तत्समाराधनया

तत्सम्मुखे प्रादुर्भूता महामाया भद्रकाली षोडशभुजैर्युता। आदिसृष्टौ महिषासुर उग्रचण्डारूपेण देव्या हतो द्वितीयसृष्टौ भद्रकालीरूपेण तृतीयसृष्टौ दुर्गारूपेण। देव्या मूर्तिद्वयमुग्रचण्डा भद्रकाली च प्रथमाष्टादशभुजा द्वितीया षोडशभुजा। उग्रचण्डा आश्विनकृष्णनवम्यां कोटियोगिनीभिः सह प्रादुर्भूता। सती एव दक्षयज्ञे पत्युः शिवस्य यज्ञे भागाभावं दृष्ट्वा रोषसमायुक्ता स्वदेहं परित्यज्य चण्डमूर्तिर्जाता तथा योगिनीभिः शिवगणैश्च सह पितृयज्ञं बभञ्ज। व्यतीते च क्रोधे देवा विविधोपचारैः सम्पूज्यातोषयन्। ततः शारदीये नवरात्रे तत्पूजाविधानं च प्रचलति लोके। अनयोरुभयोर्देव्योः पूजनं दुर्गातन्त्रेणैव कर्तव्यम्। एतत् सर्वमेकषष्टितमेऽध्यायेऽस्ति। मन्त्रः पूजाप्रकारश्च तत्रैव। गौर्या अपि स्वरूपं मन्त्रं पूजाविधानं च तत्रास्ति।

योगिनीतन्त्रस्य द्वितीयपटले भगवता शिवेन निर्दिष्टं यन्महामहाब्रह्मविद्या कालिकाविद्याऽस्ति तथा काली तारा छिन्नमस्ता चैकरूपैव। योगमायापि काल्या अपरा संज्ञैव।

**अथ देवीभागवतानुसारेण कालीवृत्तम्—**

देवीभागवतपुराणानुशीलनेन ज्ञायते यत् काली गौर्याः (पार्वत्याः) अपरा संज्ञा नान्या काचन। एतदर्थं किञ्चित् तत्रत्यं वाक्यमुद्ध्रियते—

**गृहाण हर! गौरीं त्वं महाकालीं मनोहराम्।**
**कैलासं कारयित्वा च विहरस्व यथासुखम्॥** (दे० भा० ३।६।६५)

पुनस्तत्रैव—

**विष्णवेऽथ महालक्ष्मीं महाकालीं शिवाय च।** (३।६।८१)

एतदपरथा वक्ष्यमाणेन भद्रकालीवृत्तेनापि स्पष्टं भविष्यति। यथा नवमस्कन्धे शङ्खचूडवधोपाख्याने एकविंशाध्याये। एतद्वर्णनानुशीलनेन प्रतिभाति यत् काली भद्रकाली वा पार्वत्या अपरा संज्ञैव। यथा—

**वामतो भद्रकालीञ्च स्कन्दञ्च तत्पुरः स्थितम्।** (९।२१।२८)
**आशिषञ्च ददौ तस्मै काली स्कन्दश्च शङ्करः।** (९।२१।२९)

एवम्—

**असुरान् पातयामास काली कमललोचना ।** (९।२२।१७)

**दृष्ट्वा कालीं शङ्खचूडः शीघ्रमाजौ समाययौ ।** (९।२२।४७)

**काली चिक्षेप वह्निं च प्रलयाग्निशिखोपमम् ।** (९।२२।४८)

**इत्याकर्ण्य भद्रकाली··· ··· ··· ।** (९।२२।५९)

**वेगेन मुष्टिना काली··· ··· ··· ।** (९।२२।६३)

**··· ··· ···प्रणम्य भद्रकालिका ।** (९।२२।६९)

**पीत्वा भुक्त्वा भद्रकाली जगाम शङ्करान्तिकम् ।** (९।२२।७१)

देवीभागवते सप्तमस्कन्धेऽष्टाविंशेऽध्याये दुर्गमाख्यदैत्येन सह युध्यमानायाः शताक्ष्याः शाकम्भर्याख्याया देव्याः शरीरान्निर्गतासु तीव्रशक्तिषु कालिका-तारिणी-बाला-त्रिपुरा-भैरवी-रमा-बगला–मातङ्गी–त्रिपुरसुन्दरी–कामाक्षी-तुलजा-जम्भिनी-मोहिनी-छिन्नमस्ता-गुह्यकाली-दशसाहस्रबाहुका–दिषु कालिका गुह्यकालिनाम्नी वर्तते ।

अस्मिन्नेव स्कन्धे त्रिंशेऽध्याये वर्णितं यत् कस्मिन्नपि काले दक्षगेहे शाक्तं महोऽवतीर्णं यत् सतीनाम्ना ख्यातमभवत् । तत्र पितुः शिवद्वेषवशात् सती योगाग्निना निजशरीरमदहत् । पुनश्च हिमवतो गेहे प्रादुरभूत् । दक्षगेहे सतीदेहत्यागानन्तरं तद्वृत्तान्तश्रवणसञ्जातशिवकोपाग्निना वीरभद्रो भद्रकालीगणान्वितः समुत्पन्नः ।

देवीभागवते पञ्चमस्कन्धे एकविंशाध्यायमारभ्यैकत्रिंशाध्यायं यावद् या कथाऽस्ति तत्र देवीद्वारा शुम्भ-निशुम्भ-धूम्रलोचन-चण्डमुण्ड-रक्तबीजादीनां प्रसिद्धानामत्यन्तबलशालिनां दानवानां विनाशो वर्णितस्तत्र त्रयोविंशेऽध्याये कालिकायाः प्राकट्यं वर्णितम्, तदित्थम्—

महाबलाभ्यां शुम्भनिशुम्भाभ्यामसुराभ्यां पराजिताः पीडिताश्च त्रस्ता देवा गुरुणा बृहस्पतिनोपदिष्टा तुहिनाचलं गत्वाऽस्तुवन् जगदम्बां भगवतीं तया स्तुत्या प्रसन्ना वरदा भगवती प्रादुर्भूय गङ्गायां स्नातुकामा गिरिगह्वरान्निर्गत्य देवानपृच्छत् 'किमर्थमहं स्तुता किमिच्छथ' ? देवास्तु महि-

षासुरवधसमये 'आपत्तिकाले स्मरणीया भवद्भिः' भवत्योक्तम्, इत्युक्त्वा साम्प्रतिकीं शुम्भादीनां बाधामवर्णयन्। इत्थं देवदुःखश्रवणसमनन्तरं सा देवी स्वशरीरादेवापरं रूपं प्रकटयामास। पार्वत्याः शरीरान्निःसृता याऽपरा देवी सा कौशिकीति नाम्ना ख्याता यदष्टादशभुजेति २६ अध्याये निर्दिष्टा। एषा कौशिकी सरस्वत्येव नान्या, इति पुराणान्तरकथया स्पष्टीभविष्यति, सा च कथा वाक्यञ्च यथावसरं निवेदयिष्यते। निर्गतायां कौशिक्यां सा पार्वती शरीरस्य क्षैण्यात् कृष्णरूपाऽभवत् तथा कालिकानाम्ना विख्याता। मसीवर्णाकारत्वाद् भयङ्करा कालरात्रिरिति च प्रोक्ता। अस्या नैसर्गिको गुणो भक्तमनोरथपूर्णकर आसीत्। काली-कालरात्रीति संज्ञया प्रसिद्धेयं देवी कौशिक्या सहैवोवास।

अनया काल्यैव धूम्रलोचन-चण्ड-मुण्ड-शुम्भादयोऽसुरा हता रणे[1]।

पूर्वोक्तकथानिरूपणस्य प्रमाणत्वे कतिपयवचनान्यत्रोद्ध्रियन्ते—

**एवं स्तुता तदा देवी दैवतैः शत्रुतापितैः।**
**स्वशरीरात् परं रूपं प्रादुर्भूतं चकार ह॥**

**पार्वत्यास्तु शरीराद् वै निःसृता चाम्बिका यदा।**
**कौशिकीति समस्तेषु ततो लोकेषु पठ्यते॥**

**निःसृतायां तु तस्यां सा पार्वती तनुव्यत्ययात्।**
**कृष्णरूपाऽथ संजाता कालिका सा प्रकीर्तिता॥**

(दे० भा० ५।२३।१–३)

---

१ बलं च पातितं सर्वं निहतो धूम्रलोचनः।
कृत कालिकया कर्म रणभूमावमानुषम्॥ (५।२५।३२)

अपि च—

भ्रातः कालिकयाऽद्यैव निहतो धूम्रलोचनः। (५।२५।४७)
चकर्त तरसा काली पपौ च रुधिरं मुदा। (५।२६।६४)

तदानीमम्बिकया तस्याश्चण्डिकेति नाम ख्यापितम्।

अस्मिन्नेव स्कन्धे षड्विंशेऽध्याये प्रोक्तं यच्चण्डमुण्डयुद्धसमये चण्ड-मुण्डबाणजालं दृष्ट्वा क्रुद्धाम्बिका कौशिकी समभवत्, तदानीमतिकोपेन तस्या वदनं कृष्णं नेत्रे रक्ते भ्रुकुटी कुटिलाऽभवत्, तदैव तस्या ललाटफल-काद् द्रुतं काली निष्क्रान्ता[1] या व्याघ्रचर्मपरीधाना, क्रूरा, गजचर्मोत्तरी-यका, मुण्डमालाधरा, घोरा, शुष्कवापीसमानोदरा, खड्गपाशखट्वाङ्ग-धारिणी, अभयदा, अतिभीषणा,रौद्रा, अपरा कालरात्रिरिव विस्तीर्णवदना, बारम्बारं जिह्वां चालयन्ती (लोलजिह्वा) विपुलजघना समासीत्। इय-मेव ललाटनिर्गता काली चण्डमुण्डौ बद्ध्वा कौशिकीसमीपे समानयत् तथा खड्गेन तयोः शिरसी चकर्त। दृष्ट्वैतत्कार्यं प्रीतया जगदम्बया कौशिक्या वरप्रदानरूपेण काल्याश्चामुण्डेति संज्ञा विहिता। एवं काल्याः चामुण्डा-गौरी-तामसी-कालिका-शिवदूती-संज्ञाः सन्ति। इदं सर्वं षड्विंशाध्यायोक्त-कथावलोकनेन स्पष्टं भवति।

अत्राष्टाविंशेऽध्याये रक्तबीजसंग्रामे कौशिकी (अम्बिका), कालिका (प्रथमकाली या पार्वतीशरीरात्मिका) चामुण्डा,(द्वितीयकाली या कौशिकी-ललाटनिर्गता) तथा विष्ण्वादिदेवानां शक्तयः सर्वास्तत्तद्देवानुकूलरूप-वस्त्राभूषणवाहनायुधयुतास्तत्रागत्य समवेताः, तदानीं भगवान् भवोऽपि तत्रोपेत्योत्साहं वर्धितवान् योद्धुम्। भगवति शङ्करे विद्यमाने तत्रैव चण्डिकायाः (कौशिक्याः) शरीरादेकाऽद्भुता शक्तिर्निर्गता या भीषणाऽति-प्रचण्डा घोररूपा शिवाशतनिनादिनी चासीत्, सा भगवन्तं शङ्करं प्राह– भगवन्! शुम्भनिशुम्भाभ्यासेऽधुना दूतरूपेण गच्छ, इत्यादिष्टः शिवस्तत्र गतः। दानवान् प्रति शङ्करोऽनया देव्या दूतरूपेण प्रेषितस्तस्मादियं देवी शिवदूतीनाम्ना ख्याता।

एवं पार्वतीशरीरान्निर्गतायां कौशिक्यां पार्वतीशरीरं कालिकारूपेणाऽ-भवत्। पुनः कौशिकीललाटफलकान्निःसृता या काली सैव चामुण्डा-नाम्ना ख्याता। पुनः कौशिकीशरीरान्निर्गता सा देवी शिवदूतीनाम्ना प्रसिद्धा। एतास्तिस्रो देव्यः कौशिक्या सह रक्तबीजसंग्रामे सङ्गता आसन्।

---

१ निष्क्रान्ता च तथा काली ललाटफलकाद् द्रुतम्। (दे० भा० ५।२६।३९)

**श्रुत्वा जहास चामुण्डा कालिका चाम्बिका तथा ।**

(दे० भा० ६।२६।६३)

**शिवदूती साट्टहासैः पातयामास भूतले ।**

**तांश्चखादाऽथ चामुण्डा कालिका च त्वरान्विता ।।**

(तत्रैव–५।२८।१२)

षड्विंशेऽध्यायेऽपरापि कथा यत् शुम्भसेनासम्मुखे जगदम्बया कौशिक्या कृताद् धनुष्टङ्कारात् शङ्खध्वनेश्च प्रादुर्भूताऽपरा विशालवदना कालिकेति ।

एवं सप्तमस्कन्धे २८-२९ अध्याययोर्भगवत्या जगदम्बिकायाः शरीराद् विनिर्गतासु द्वात्रिंशच्छक्तिषु कालिकाया गुह्यकाल्याश्च नाम्नी परिसंख्याते स्तः ।

नवमस्कन्धे प्रथमाध्याये प्रकृतेर्नानास्वरूपवर्णनप्रसङ्गे काल्या अपि पृथग् गणनाऽस्ति—

**रुष्टा क्षणेन संहर्तुं शक्ता विश्वं महेश्वरी ।**

**प्रधानांशस्वरूपा सा काली कमललोचना ।।**

**दुर्गाललाटसम्भूता रणे शुम्भनिशुम्भयोः ।**

**दुर्गार्धांशस्वरूपा सा गुणेन तेजसा समा ।।** (दे०भा० ९।१।८७-८८)

महाकाल्या उत्पत्तिविषये देवीभागवते दशमस्कन्धे एकादशाध्याये मधुकैटभवधोपाख्याने वर्णितं यद् मधुकैटभवधार्थं विष्णोर्निद्रामपहर्तुं ब्रह्मणा कृतायां स्तुतौ महाकाली आविर्भूता । तदुक्तम्—

**एवं देवी समुत्पन्ना ब्रह्मणा संस्तुता नृप ।**

**महाकाली महाराज सर्वयोगेश्वरेश्वरी ।।** (१०।११।३३–३४)

एषा महाकाली दशभुजा, दशपादा, दशानना, त्रिनेत्रा, नीलाभाऽस्ति । तदुक्तम्—

**खड्गचक्रगदाबाणचापानि परिघं तथा ।**

**शूलं भुशुण्डीं च शिरः शङ्खं सन्दधतीं करैः ।।**

**महाकालीं त्रिनयनां नानाभूषणभूषिताम् ।**
**नीलाञ्जनसमप्रख्यां दशपादाननां भजे ॥**
**मधुकैटभनाशार्थं यां तुष्टावाम्बुजासनः ।**
**एवं ध्यायेन्महाकालीं कामबीजस्वरूपिणीम् ॥**

(दे० भा० ९।५०।६५-६७)

एवं प्रथमस्कन्धेऽपि ६-९ अध्यायेषु मधुकैटभवृत्तप्रसङ्गे सप्तमाध्याये ब्रह्मणा कृतायां तामस्याः (कालिकायाः) स्तुतौ महाकाल्या आविर्भावो निरूपितः।

नवमस्कन्धे द्वाविंशेऽध्याये शङ्खचूडेन सह काल्याः (भद्रकाल्याः) युद्धमपि निरूपितम् ।

एवं दशमस्कन्धे महिषासुरवधार्थं देवैः स्तुतस्य विष्णोर्मुखान्निःसृतं यत्तेजस्तथानुक्रमतः शम्भुविधिशक्रादिदेवानां शरीरेभ्यो निर्गतानि यानि तेजांसि, तेभ्यस्तेजोभ्यः प्रादुर्भूता या महिषमर्दिनी देवी सा महालक्ष्मी-रिति । साऽष्टादशभुजा । तदुक्तम्—

**एवं लक्ष्मीः समुत्पन्ना महिषासुरमर्दिनी ।** (१०।१२।३५)

पञ्चमस्कन्धेऽप्येवमेव कथा । तत्राप्युक्तम्—

**पश्यतां तत्र देवानां तेजःपुञ्जसमुद्भवा ।**
**बभूवातिवरा नारी सुन्दरी विस्मयप्रदा ॥**
**त्रिगुणा सा महालक्ष्मीः सर्वदेवशरीरजा ।**
**अष्टादशभुजा रम्या त्रिवर्णा विश्वमोहिनी ॥**

(दे० भा० ५।८।४३-४४)

शिवपुराणे उमासंहितायामप्येषा कथा समायाति । योगिनीतन्त्रे तु महिषासुरघातिनी भद्रकालीति निरूपितम् । देवीपुराणे काली पार्वत्यभिन्ना तत्तनुरिति निगदितम्—

**मङ्गला शाकम्भरी काली देव्या या त्रिविधा तनुः ।**

(५१।२)

अनयैवावृतः शङ्करोऽस्तोति कालाग्निरुद्रमाहात्म्येऽभिहितम्—

**एते रुद्रा महात्मानः कालिकाशक्तिबृंहिताः ।**

**संहरन्ति समस्तेदं ब्रह्माद्यं सचराचरम् ।।** (१।११)

एवं देवीभागवते दशमस्कन्धे द्वादशाध्याये वर्णितं यत् शुम्भनिशुम्भाभ्यां पीडितैर्देवैस्तुहिनाचलाभ्यासे संस्तुता गिरिजा प्रकटीभूय वरं दातुं समुद्यता तदानीं तद्देहकोशात् समुत्पन्ना कौशिकी देवी । एषैव सरस्वती समाख्याता । अनयैव शुम्भादयो दानवा हताः ।

स्पष्टञ्चैतदुपक्रमोपसंहारवाक्याभ्याम्—

**राजञ्छृणु सरस्वत्याः प्रादुर्भावो यथाऽभवत् ।**

**विबुधैः संस्तुता तद्वत् साक्षाद् वागीश्वरी परा ।।**

**एवं ते वर्णितो राजन् प्रादुर्भावोऽतिरम्यकः ।**

**काल्याश्चैव महालक्ष्म्याः सरस्वत्याः क्रमेण च ।।**

**परा परेश्वरी देवी जगत्सर्गं करोति च ।**

**पालनं चैव संहारं सैव देवी दधाति हि ।।**

(१०।१२।३५, ८१-८२)

नारदपुराणे ८५ अध्याये वाग्देवतायाः सरस्वत्या अपरोऽवतार एव काली, इति । एतेनेदमवगम्यते यत्काली सरस्वतीरूपा नान्या । अत एवेयं विद्याधिष्ठात्रीति कथ्यते । दशमहाविद्यास्वपि विद्याप्रदत्वेन काली मह्यते । अस्य नारदपुराणोक्तवचनस्य सप्तशत्या उत्तमचरितकथानकेन सामञ्जस्यं विचारणीयं विद्वद्भिः—

नारद उवाच—

**वाग्देवतावतारोऽन्यः कालिकेति प्रकीर्तिता ।**

(ना० पु० ८५।१)

स्कन्दपुराणे माहेश्वरखण्डान्तर्गतकेदारखण्डे तृतीयाध्याये भगवतः शङ्करस्य जटातः काल्या उत्पत्तिर्वर्णिता—

**ताडनाच्च समुद्भूतो वीरभद्रो महायशाः ।**

**तथा काली समुत्पन्ना भूतकोटिभिरावृता ।। ३४ ।।**

वस्तुतस्तु अत्र भद्रकाल्या उत्पत्तिरेवाभीष्टेति कथया परिज्ञायते।
अत्रैषा कथा वर्त्तते यद् दक्षयज्ञे सतीदेहत्यागानन्तरं स्वगणेभ्यः सतीवृत्तमाकर्ण्यापि स्मरणमात्रेण समागतनारदमुखात् सकलं वृत्तं सत्यं विश्वासयोग्यं पुनर्निशम्य संजातातिक्रोधाभिभूतो भगवान् शङ्करः स्वशिरस एकां जटां समुत्पाट्य रोषेण पर्वतोपरि आस्फालयामास यतः सा जटा भागद्वये विभक्ता तत्रैकभागाद् वीरभद्रः समुद्भूतः। अपरभागान्महाकाली समुत्पन्ना।

**महाकाली समुत्पन्ना तज्जटापरभागतः।**
**महाभयंङ्करा तात भूतकोटिभिरावृता॥**

(शि० पु० रु० सं० २।३२।२५)

भगवता शङ्करेणादिष्टे सगणे वीरभद्रे दक्षयज्ञं विनाशयितुं गते तदेव कर्तुं महाकाल्यपि काली-कात्यायनी-ईशानी-चामुण्डा-मुण्डमर्दिनी-भद्रकाली-भद्रा-त्वरिता-वैष्णवीति नवदुर्गाभिर्भूतगणैश्च सह गता।

अस्मिन्नध्याये या कथा वर्णिता सा कथा प्रायः दुर्गासप्तशतीप्रथमाध्यायोक्तकथाकल्पाऽस्ति। विशेषस्त्वियानेवात्र यद् ब्रह्मणा कृतायाः स्तुतेरनन्तरं महाकाली प्रादुर्भूता।

शि० पु० वा० सं० १७-२७ अध्यायेषु पार्वत्याः कालीरूपेण प्रकटनमिति वर्णितम्। कुमारखण्डे—शङ्करशङ्खचूडयोर्युद्धोपाख्याने तस्मिन्नाहवे भद्रकाली शिवपक्षतोऽयुध्यत। ४४-४६ अध्यायेषु शिवस्य अन्धकेन सह संग्रामे जाते विष्णुना कालीरूपं धृतमिति कथापि निरूपिता वर्त्तते।

वायवीयसंहितायाम् (१६-२४ अध्यायेषु) अत्रत्यया कथयाऽवगम्यते यत् पार्वती स्वरूपतः काल्येवासीत्। अत्र काली गौरीति विषये चर्चाऽस्ति। तदित्थम्—

चतुराननद्वारा प्राप्तवराभ्यां शुम्भनिशुम्भाभ्यां पीडितैर्देवैः प्रार्थितः कमलयोनिरुभयोरसुरयोर्विनाशायाशुतोषाभ्यासमागत्य प्रार्थनामकरोत्—'भगवन्! रहसि देव्याः कृष्णत्वं विनिन्द्य कोपयतु यतस्तच्छरीरजाताऽयोनिजा कन्या तौ हनिष्यतीति।' इति विनिवेद्य पितामहो निवृत्तः। भगवान्

धूर्जटिर्ब्रह्मणा प्रेरित एकान्ते देवीमधिक्षिप्तवान् कालीतिशब्देन। तेन रुष्टा देवी कृष्णत्वं त्यक्तुं गौरत्वमाप्तुं तपसे कृतनिश्चया पूर्वतपःस्थल्यां पत्या वार्यमाणा जगाम। तद्घोरतपश्चर्यया प्रसन्नो विधिर्देवैः सह तत्रागत्य तपःकारणमपृच्छत्। संकोचवशाद् रहस्यमयीं दम्पत्योर्वार्तां पूर्णतयाऽनिवेद्यैव केवलं कृष्णवर्णहायनगौरवर्णप्रापणमेव न्यवेदयद् देवी। तदनन्तरं ब्रह्मणोक्तमेतावन्मात्रप्रयोजनायेदृशकठोरतपसा किम्? एतत्तु स्वेच्छामात्रेणैव भविष्यति। भवतु भवदीया लीला लोकहितायैव, भगवति! मत्तो वरं प्राप्य शुम्भनिशुम्भौ मत्तौ जातौ तयोर्वधं त्वद्गात्रजा कन्यैव करिष्यति, इति प्रार्थितवान् विधिः। भगवती च स्वकीयं कृष्णवर्णावरणं परित्यज्य गौरवर्णा जाता। त्यक्तकृष्णवर्णत्वक्कोष एव कौशिकी प्राभवत्। सा कृष्णमेघाभा कृष्णवर्णा कन्या योगनिद्रेति गीयते। साऽष्टभुजा, त्रिरूपा, सौम्या, घोरा, मिश्रा च त्रिनेत्रा, अर्धचन्द्रमुकुटधारिणी। देवी तां कन्यां स्वकार्यं साधयितुं ब्रह्मणे ददौ। ब्रह्मा च तस्यै वाहनाय सिंहं निवासाय विन्ध्याद्रिमदात्। एषैव विन्ध्यपर्वतं प्राप्य ताववधीत्।

अनया कथया स्पष्टमेवास्ति यत् पार्वती जन्मना काली तपसा गौरी च जाता। कौशिक्यपि वर्णेन कृष्णैवास्ति।

## मार्कण्डेयपुराणे काल्युत्पत्तिकथा

मार्कण्डेयपुराणान्तर्गतदुर्गासप्तशत्यां कालिकायाः कथा वर्तते, तत्र प्रथमाध्याये—विष्णुकर्णमलोद्भूतौ मधुकैटभसंज्ञकौ दैत्यौ विष्णुनाभिकमलस्थं ब्रह्माणं हन्तुमुद्यतौ दृष्ट्वा भयभीतः पद्मयोनिर्विष्णोर्विबोधनार्थं योगनिद्रामस्तौषीत्। स्तवानन्तरे विष्णुनेत्रमुखनासिकाबाहुहृदयवक्षोभ्यो निर्गत्य ब्रह्मसम्मुखे प्रकटिता। सा तामसी कालीपदवाच्या। यद्यपि नामसङ्केतोऽस्याः कुत्रचिन्नोल्लिखितः, तथापि तामसी काल्येवेति स्फुटीभवति।

तत्रैव पञ्चमाध्यायमारभ्य दशमाध्यायं यावत् किञ्चिद्भेदपूर्वकं देवीभागवतोक्तं कथानकमेवास्ति। तत्र पञ्चमाध्याये यथा—

**शरीरकोशाद् यत्तस्याः पार्वत्या निःसृताम्बिका।**
**कौशिकीति समस्तेषु ततो लोकेषु गीयते॥**

**तस्यां विनिर्गतायान्तु कृष्णाऽभूत् साऽपि पार्वती ।**
**कालिकेति समाख्याता हिमाचलकृताश्रया ।।**

एतेनेदमायाति यत् पार्वतीदेहान्निःसृता सा कौशिकीनाम्ना ख्याता, या च पार्वती सा कालिकेति संज्ञयाऽभिहिता । कौशिकी च सरस्वत्येव । सप्तमेऽध्याये त्वित्थम्—

महत्या सेनया सह चण्डमुण्डौ दृष्ट्वा सा कोपाविष्टा जातः । कोपेन तन्मुखं कृष्णं जातं भ्रुकुटी कुटिलाऽभूत् । ततो ललाटफलकान्निर्गता काली, या करालवदना खड्गपाशखट्वाङ्गधारिणी नरमुण्डमालाविभूषिता व्याघ्र-चर्मवसना शुष्कमांसा अत्यन्तभयकराकारा विस्तृतमुखी जिह्वाललन-भीषणा रक्तनयना महानादकरी समभवत् । एषा काली चण्डमुण्डविनाश-करत्वेन चामुण्डेति ख्याता—

**उवाच कालीं कल्याणीं ललितं चण्डिका वचः ।**
**यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता ।।**
**चामुण्डेति ततो लोके ख्याता देवि भविष्यसि ।।**

अष्टमाध्याये त्वेवं प्रतिपादितम्—

देवीशरीरादेकाऽतिभीषणाऽत्युग्रा चण्डिकाशक्तिर्निर्गता याऽपराजिता शिवाशतनिनादिनी चासीत् । इतः पूर्वं चण्डिकां शङ्करः प्रोक्तवान्–'हन्य-न्तामसुराः शीघ्रम्', अनन्तरम्—

**ततो देवीशरीरात्तु विनिष्क्रान्तातिभीषणा ।**
**चण्डिकाशक्तिरत्युग्रा शिवाशतनिनादिनी ।।** इति ।

उभयत्र चण्डिकाशब्दप्रयोगः । मन्ये, प्रथमचण्डिकाशब्देन जगदम्बा पार्वती गृह्यते, द्वितीयचण्डिकाशब्देन काचिदपरा, अथवा काली गृह्यते । एषैव च शम्भुमाज्ञापितवती दौत्याय । यतः शिवदूतीति ख्याता । किम· त्रैषा शक्तिश्चण्डिका काल्येव ततो भिन्ना वेति विचारणीयम् । अष्टमा-ध्याये रक्तबीजस्य विनाशिनी जगदम्बैव, तथैव नवमदशमाध्याययोः

शुम्भनिशुम्भयोरपीति निरूपितम्। देवीभागवते तु शुम्भविनाशिनी कालीति।

देवीभागवते २६ अध्याये शुम्भनिशुम्भसेनाभिमुखं जगदम्बया कृताद् धनुष्टङ्काराच्छङ्खध्वनेश्च प्रादुर्भूता विशालवदनाऽपरा कालिकेति।

प्राधानिके रहस्ये तु महालक्ष्मीरेव शून्यमखिलं लोकं विलोक्य केवलेन तमोगुणेन द्वितीयं रूपं दधौ या अञ्जनसदृशवर्णा दीर्घदन्ता दीर्घवदना विशाललोचना क्षीणकटिर्नारी अभूत्। सा नारी चतुर्भुजा भुजैश्च खड्गं पात्रं खेटं च दधाना मुण्डमालाविभूषिता तामसी-देवीति। अस्यास्तामस्या महामाया, महाकाली, महामारी, क्षुधा, तृषा, निद्रा, तृष्णा, एकवीरा, कालरात्रिः, दुरत्यया इति नामानि सन्ति। एतन्नामानुसारीणि कर्माणि चास्याः सन्ति (श्लो० ७–१३)।

महालक्ष्मीप्रेरणया महाकाली नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरं पुरुषं तथा श्वेतवर्णां स्त्रियं मिथुनं च ससर्ज। अत्र पुरुषः शङ्करः, स्त्री सरस्वतीति ज्ञेयम्। उत्पाद्य च सद्यः सा पुरुषत्वमाप यज्ज्ञानिनो जानन्ति नेतरे।

वैकृतिके रहस्ये तु—हरेर्या योगनिद्रा सैव तमोगुणा महाकालीति कथ्यते। सैव मधुकैटभनाशार्थं ब्रह्मणा संस्तुता। सा दशवदना दशभुजा दशपादा त्रिंशत्संख्याकनेत्रा कृष्णवर्णा भीमरूपा स्फुरद्दंष्ट्रा रूपसौभाग्य-कान्तिमहासम्पदामाश्रया स्वभुजैः खड्गं बाणं गदां शूलं चक्रं शङ्खं भुशुण्डि परिघं चापं स्रवद्रक्तं शिरश्च दधानाऽस्ति। एषा विष्णोर्दुस्तरा माया महाकाली आराधनया भक्तवशगा चराचरं जगत् स्वभक्तवशगं कर्तुं समर्था।

मूर्तिरहस्ये—अत्र रक्तदन्तिकाया स्वरूपं वर्णितम्। सा रक्तदन्तिका रक्तचामुण्डा योगेश्वरी चाभिधयाऽभिहिता। अत्र विचारणीयं यत् चामुण्डा योगेश्वरीत्युभे महाकाल्या अपि संज्ञे स्तः। एवं सति तत्र किं रक्तदन्तिकया साक्षात् कालीं गृहीतुं शक्यते, अथवा काल्या एव एषाऽपरा मूर्तिः।

मूर्तिरहस्ये शाकम्भर्याः स्वरूपमपि निरूपितम्। एषा देवी नीलवर्णा,

नीलकमलसदृशनेत्रा, गम्भीरनाभिः, त्रिवलीविभूषिततनूदरी, उत्तुङ्गस्तनी, चतुर्भुजैर्बाणकमलशाकचापान् दधती शताक्षी वर्तते । एतस्या नामानि— दुर्गा, उमा, गौरी, सती, चण्डी, कालिका, पार्वती च सन्ति । एतेनेदमायाति यत् शाकम्भर्यपि कालिकाया अपरा मूर्तिः ।

देवीभागवते स्थलद्वये मधुकैटभवृत्तं वर्णितमस्ति तस्मादुभयत्र ब्रह्मकृतस्तुत्यनन्तरं कालिकाया आविर्भावोऽपि निरूपितोऽस्ति । प्रथमं प्रथमस्कन्धे द्वितीयं दशमस्कन्धे निरूपणम् ।

देवीभागवतस्य पञ्चमस्कन्धेऽष्टमाध्याये विष्ण्वादीनां देवानां शरीरेभ्यो निर्गततेजोराशिभ्यः समुद्भूता त्रिगुणा महालक्ष्मीरिति वर्णनमवर्तत । सा महालक्ष्मी रम्याऽष्टादशभुजाऽद्भुतरूपा (५।१०।२) । तत्रैव विरूपाक्षवाष्कलदुर्मुखचिक्षुरविडालासिलोममहिषासुरादयो हताः ।

कालिकापुराणे ६२ अध्याये मधुकैटभवृत्तम्, ब्रह्मस्तुतिः, देव्याश्चरितं कामाख्या-कथा चेत्यादि वर्णितम् । अत्र यद् वर्णनं तद् दुर्गासप्तशत्युक्तवृत्तादंशतो भिन्नम् । अत्र ७६ अध्याये वेतालभैरवकृता महामायास्तुतिः, तथा ७९ अध्याये उग्रतारायाः स्वरूपनिरूपणञ्च स्तः ।

ब्रह्मपुराणे विष्णुर्योगनिद्रामादिदेश यत् पातालसंश्रयान् षड्गर्भान् देवकीजठरे संस्थाप्यानन्तरं यशोदागर्भात् स्वयं भाद्रपदकृष्णाष्टम्यां मदुत्पत्त्यनन्तरं नवम्यामुत्पद्यस्व । लोकास्त्वामनेकशः स्तुत्वा वाञ्छितं लप्स्यन्ते । तत्रैव विद्यत एष श्लोकः —

**ये त्वामार्येति दुर्गेति वेदगर्भेऽम्बिकेति च ।**
**भद्रेति भद्रकालीति क्षेम्या क्षेमङ्करीति च ॥** (८१।५०)

ब्रह्माण्डपुराणे ललितोपाख्याने सप्तमेऽध्याये—

**लक्ष्मीः सरस्वती गौरी चण्डिका त्रिपुराम्बिका ।**
**भैरवो भैरवी काली महाशास्त्री च मातरः ॥** (७२)

ब्रह्मवैवर्ते १७–२१ अध्यायेषु शङ्करशङ्खचूडयोर्युद्धोपाख्याने शङ्करस्य

पक्षे सगणाया युद्धरताया भद्रकाल्या वर्णनं वर्तते। तत्र भद्रकाली शिवपत्नीत्वेन स्कन्दमातृरूपेण चोक्ता।

ब्रह्मवैवर्ते प्रकृतिखण्डे प्रथमेऽध्याये प्रकृतेः प्रधानांशस्वरूपा काली—

प्रधानांशस्वरूपा च काली कमललोचना ॥
दुर्गाललाटसम्भूता रणे शुम्भनिशुम्भयोः।
दुर्गार्धांशस्वरूपा स्याद् गुणैः सा तेजसा समा ॥

कोटिसूर्यप्रभाजुष्टदिव्यसुन्दरविग्रहा।
प्रधाना सर्वशक्तीनां वरा बलवती परा ॥

सर्वसिद्धिप्रदा परमा सिद्धियोगिनी।
कृष्णभक्ता कृष्णतुल्या तेजसा त्रिविक्रमैर्गुणैः ॥

कृष्णभावनया शश्वत्कृष्णवर्णा सनातनी।
ब्रह्माण्डे सकलं हतु शक्ता निःश्वासमात्रतः ॥

रणं दैत्यैः समं तस्याः क्रीडया लोकरक्षया ॥
धर्मार्थकाममोक्षांश्च दातुं शक्ता सुपूजिता।
ब्रह्मादिभिः स्तूयमाना मुनिभिर्मनुभिर्नरैः ॥ (९१-९६)

ब्रह्मवैवर्ते प्रकृतिखण्डे ६१ अध्याये ब्रह्मणा वर्णितं कालीस्वरूपम्—

भद्रकाली जगन्माता खड्गखर्परधारिणी।
तया दुर्धर्षया सार्धं को वा युद्धं करिष्यति ॥

सा सहस्रभुजा देवी मुण्डमालाविभूषिता।
योजनायतवक्त्रा च दशयोजनविस्तृता ॥

सप्ततालप्रमाणाश्च यस्या दन्ता भयानकाः।
क्रोशप्रमाणजिह्वा च महालोला भयङ्करी ॥ (४१-४३)

ब्रह्मवैवर्ते प्रकृतिखण्डे ६७ अध्याये प्रकृतिकवचमाहात्म्ये प्रोक्तम्—

**जघान रक्तबीजं तं यद्धृत्वा भद्रकालिका ।**
**यद्धृत्वा तु महेन्द्रश्च सम्प्राप कमलालयाम् ॥ ५ ॥**

## भद्रकालीवृत्तम्

शाक्तानन्दतरङ्गिण्यां वर्णितं यत् परायाः शक्तेरेव उमा, शक्तिः, लक्ष्मीः, भारती, गिरिजा, अम्बिका, दुर्गा, भद्रकाली, चण्डी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, ऐन्द्री, ब्राह्मी, विद्या, अविद्या, माया, प्रकृतिः, अपरा इति नामानि । तद्यथा—

**उमा केचिदाहुस्तां शक्तिर्लक्ष्मीति चापरे ।**
**भारतीत्यपरे चैनां गिरिजेत्यम्बिकेति च ॥**

**दुर्गेति भद्रकालीति चण्डी माहेश्वरी तथा ।**
**कौमारी वैष्णवी चैव वाराह्यैन्द्रीति चापरे ॥**

**ब्राह्मीति विद्याविद्येति मायेति च तथापरे ।**
**प्रकृतीत्यपरा चैव वदन्ति परमर्षयः ॥** (शा० त० ३)

भागवतेऽपि श्रीदुर्गादेव्या नामगणनायां भद्रकाल्या नामापि समुल्लिखितम् । यथा—

**अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम् ।**
**धूपोपहारबलिभिः सर्वकामवरप्रदाम् ॥**

**नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि ।**
**दुर्गेति भद्रकाली विजया वैष्णवीति च ॥**

**कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च ।**
**माया नारायणीशानी शारदेत्यम्बिकेति च ॥**(१०।२।१०-१२)

योगवासिष्ठे ब्रह्मणोऽनन्तशक्तिष्वेका शक्तिः स्पन्दशक्तिः, यया शक्त्या, जगद्रचना सम्पद्यते—

**सा राम प्रकृतिः प्रोक्ता शिवेच्छा पारमेश्वरी ।**
**जगन्मायेति विख्याता स्पन्दशक्तिरकृत्रिमा ।।** (६(२)८५।१४)

अस्या एव नामानि—

शुष्का, चण्डिका, उत्पला, जया, सिद्धा, जयन्ती, विजया, अपराजिता, दुर्गा, उमा, गायत्री, सावित्री, सरस्वती, गौरी, भवानी, कालीति ।
(६ (२) ८४।९-१४)

एषैव काली जगदुत्पाद्यात्मन्यात्मना दधात्यवयवरूपेण कमलिनी पुष्पलक्ष्मीमिव । तदुक्तम्—

**सा हि क्रिया भगवती परिस्पन्दैकरूपिणी ।**
**चितिशक्तिरनाद्यन्ता तथा भात्यात्मनात्मनि ।।**

**देव्यास्तस्या हि याः काल्या नानाभिनयनर्तनाः ।**
**ता इमा ब्रह्मणः सर्गजरामरणरीतयः ।।**

**क्रियाऽसौ ग्रामनगरद्वीपमण्डलमालिकाः ।**
**स्पन्दान् करोति धत्तेऽन्तः कल्पितावयवात्मिका ।।**

**काली कमलिनी काली क्रिया ब्रह्माण्डकालिका ।**
**धत्ते स्वावयवीभूतां दृश्यलक्ष्मीमिमां हृदि ।।**

(योगवासिष्ठे—६ (२) ८४।१७-२२)

तात्पर्यमिदम्—ब्रह्मणः शिवस्य वा अनन्ताः शक्तयः सन्ति, यथा—ज्ञानशक्तिः, क्रियाशक्तिः, कर्तृत्वशक्तिः, अकर्तृत्वशक्तिः, इति । अत्र तत्त्वद्वयं कल्पनीयं यद् ब्रह्म शिवो वा अन्यत् तत्त्वम्, शक्तिस्ततो भिन्ना तत्त्वान्तरम्; अपि तु परमतत्त्वमेकमेव, यद् अत्र भेदेनावलोक्यते । तस्यैव चिच्छक्तिः शरीरेषु, स्पन्दशक्तिर्वायौ, जडशक्तिः पर्वते, द्रवशक्तिर्जले, तेजःशक्तिरग्नौ, तेजःशक्तिरेव दाहिका-प्रकाशिका शक्तिरपि कथ्यते ।

शब्दशक्तिराकाशे, भावशक्तिर्जगत्स्थितौ, सर्वसाधारणशक्तिर्दशसु दिक्षु, नाशशक्तिर्विनाशे, शोकशक्तिः शोकिषु, आनन्दशक्तिर्मुदितेषु, वीर्यशक्तिर्भटे, सर्गशक्तिः सृष्टौ, सर्वशक्तिः कल्पान्ते, इत्यादि । आसु अनन्तासु शक्तिषु स्पन्दशक्तिर्विशेषशक्तिः, अनयैव संसाररचना भवति । यथोक्तम्—

**स्पन्दशक्तिस्तथेच्छेदं दृश्याभासं तनोति सा ।**
**साकारस्य नरस्येच्छा यथा वै कल्पनापुरम् ।।**

(यो० वा० ६ (२) ८४।६८)

एषैव स्पन्दशक्तिः, प्रकृतिः, शिवेच्छा, पारमेश्वरी, जगन्माया, जगन्माता वा अकृत्रिमेत्यभिधीयते । सृष्टेः कारणत्वेन प्रकृतिः, दृश्याभासानुभूतानां कारणात् क्रियेत्युच्यते । एनामेव महाशक्ति शुष्का-चण्डिकोत्पला-जया-सिद्धा--जयन्ती-विजयाऽपराजिता -दुर्गोमा-गायत्री-सावित्री--सरस्वती--गौरी-भवानी-कालीप्रभृतिसंज्ञाभिरपि कथयन्ति तज्ज्ञाः ।

(यो० वा० ६ (२)८४।९-१४)

सैव चित्स्पन्दरूपा शक्तिः कालीति सञ्ज्ञयाऽभिहितोपरितनेषु श्लोकेषु, तथा तत्प्रकृतिरपि विस्तरेण तत्र प्रतिपादिता । एतेनेदमायाति यच्छिवस्य स्पन्दनशक्तिः काली आद्यन्तरहिता शिवस्वरूपा ब्रह्मरूपा वा । तज्ज्ञाने शिवज्ञानं शिवज्ञाने च मोक्षः । विस्तरेणावगन्तुं द्रष्टव्यं योगवासिष्ठे । अग्रे सांख्यप्रक्रिया एव तत्र गृहीता संसारबन्धमोक्षाय ।

प्रसङ्गेऽस्मिन् निर्वाणतन्त्रस्य केचन श्लोका अत्रोद्ध्रियन्ते—

**सूक्ष्मयोनेरुद्बभूवुर्विष्णुर्ब्रह्मा शिवस्तथा ।**
**तस्यामेव विलीनाश्च भवन्त्येव न संशयः ।।**

**तस्माद् विष्णुश्च ब्रह्मा च शिवश्चैव महेश्वरि ।**
**शक्तेरेवोद्गताः सर्वे शाक्तास्तस्मात् प्रकीर्तिताः ।।**

**तस्माच्छक्तिमयं सर्वं जगदेतद् विचिन्तयेत् ।**
**यतः शक्तिमयं देवि जगदेतच्चराचरम् ।।**

**स्त्रियः स्वशक्तयः ख्याता यतस्त्रिविधसर्गकम् ।**
**अत एव महेशानि न स्त्रियं निन्दयेत् क्वचित् ॥**
**शुनीदेहे स्थितां योनिं कालीबुद्ध्या नमेत् सदा ।**
**एवं यः प्रणमेद् देवीं योनिं सर्वत्र सुन्दरि ॥**
**मातुर्गर्भं विशेन्नैव सत्यं सत्यं महेश्वरि ॥**

अत्रेदं विचारणीयं यद् आदौ सूक्ष्मयोनेर्ब्रह्मादीनामुत्पत्तिर्वर्णिता तथा तत्रैव सूक्ष्मयोनौ तेषां विलीनता चापि निरूपिता । अत्र सूक्ष्मयोनिपदेन किं गृह्यते ? अन्ते च शून्या अपि योनिः कालीबुद्ध्या नम्या, इत्यपि वर्णितम् । उपक्रमोपसंहाराभ्यां मयेदं विचार्यते यत् सूक्ष्मयोनिपदेन काल्येवाभिप्रेताऽत्र । सा च सूक्ष्मयोनिरर्थात् प्रकृतिरेव । प्रकृतिरेव सर्वेषां सूक्ष्मयोनिरादौ । अनन्तरं मैथुनसृष्ट्यारम्भे योनिरियं सर्वेषां निदानं तस्मात् प्रकृतिरूपा सूक्ष्मयोनिरूपा काली सर्वजननी अजा अत्र विवक्षिता ।

## कालरात्रिस्वरूपं मूर्तिरहस्ये

कालरात्रिर्भयङ्कररूपा नीलवर्णा दंष्ट्रादशनभासुरा विशालनेत्रा वृत्तपीनस्तना चतुर्भिर्भुजैः करवालं डमरुं शिरःपात्रं दधाना एकवीरा कामदा नारी । इयमपि काली एव अथवा तस्या अपरा मूर्त्तिः ।

### महामारीस्वरूपं मूर्तिरहस्ये

या लोके शास्त्रे च भ्रामरीति नाम्ना ख्याता सैव महामारी गीयते । एषा विचित्रकान्तिधारिणी विचित्रानुलेपना विचित्राभरणभूषिता चित्रभ्रमरकराऽस्ति ।

चामुण्डाया स्वरूपं शक्त्यङ्के । एतदेव ध्यानं तस्याः —

**चामुण्डा प्रेतगा कृष्णा विकृता चाहिभूषणा ।**
**दंष्ट्राली क्षीणदेहा च गर्ताक्षी कामरूपिणी ॥**

**दिग्बाहुः क्षामकुक्षिश्च मुसलं चक्रचामरे ।**
**अंकुशं बिभ्रती खड्गं दक्षिणे चाथ वामके ।।**
**खेटं पाशं धनुर्दण्डं कुठारं चापि बिभ्रती ।।**

चामुण्डा दशभुजा, वामैर्भुजैः खेटं पाशं धनुर्दण्डं कुठारं तथा दक्षिणैर्भुजैर्मुसलं चक्रं चामरमङ्कुशं खड्गं दधाना विकरालरूपा कृष्णवर्णा प्रेतासना दुर्बलशरीरा कोटराक्षी सर्पभूषणा विशालदंष्ट्रा स्वेच्छानुसाररूपधारिणी क्षीणोदराऽस्ति ।

देवीपुराणे रुरुवधोपाख्याने कालरात्र्या आविर्भाव उक्तोऽस्ति ।
(८५।२१-२४)

काश्मीरशैवमते—सृष्टिकाली, रक्तकाली, स्थिति-नाशकाली, यमकाला, संहारकाली, मार्तण्डकाली, रुद्रकाली, महाकाली, परमार्ककाली, कालाग्निरुद्रकाली, इत्यादिबह्व्यः संज्ञा निर्दिष्टाः ।

अस्मिन् दर्शने अनाख्यतत्त्वस्य (परात्परब्रह्मणः) चिच्छक्तिरेव पराशक्तिः कथ्यते । एतस्याः पराशक्तेरेव विविधरूपाणि भिन्न-भिन्नदेवीदेवानां रूपाणि सन्ति । देवीदेवेषु लिङ्गभेदस्तु साधनायाः प्रपञ्चमात्रम्, वस्तुतस्तु पराशक्तिः लिङ्गादिभेदरहिता । अत एव काश्मीरशैवमते देव्या उपासना त्रिपुरारहस्यादिवर्णितैव स्वीकृता । शाक्तमतस्य काश्मीरशैवमतेन सह नैकट्यसम्बन्धः । एतदेव च काश्मीरशैवमतस्य वैशिष्ट्यम् । अत्रत्याः शैवाः पराशक्तेः (त्रिपुराभैरव्यादीनाम्) उपासकाः सन्ति । अत एवात्र प्रथमा उपास्या पराशक्तिरेव । अस्या द्वादश कलाः सन्ति, साधनार्थमासां कलानां ज्ञानमावश्यकम् । तद्यथा—पारमार्थिकसंवित् सृष्टिस्थितिसंहारानाख्यैश्चतुर्भिस्तत्त्वैः सह प्रमातृप्रमाणप्रमेयरूपेषु आभासते, एता एव द्वादश कलाः । संविदोऽमुं विकासं ज्ञात्वैव साधना कार्या । एवं प्रत्येकतत्त्वेषु इमा द्वादश कला व्यक्ता भवन्ति । तथैव प्रत्येकेन्द्रियेष्वपि द्वादश कलाः । इत्थमादित्या मासाः कलाः सर्वेऽपि पदार्था द्वादश सन्ति । एवं पराशक्तेर्व्यापकता सर्वत्र सिद्ध्यति ।

आद्याशक्तिर्यदा स्वाभासनाय उद्यता भवति सैवावस्था कालसङ्कर्षिणी कथ्यते। तत्र या शक्तिर्बहिःसृष्टिमासूत्रयति (विस्तारयति) सा सृष्टि-काली कथ्यते। कालस्य कलनात् काली। कालमाकर्षयति विस्तारयति या शक्तिः सा काल्यस्ति। इयं देवी यदा सृष्टिं वितनुते तदेन्द्रियाणि स्वस्वकार्याणि कुर्वन्ति, तदानीं भेदस्याभासो भवति।

विषयो विषयी च संविदो रूपे, अतो मूलतो भेदाभावेऽपि ग्राह्यग्राहक-भावावुच्छूनस्तः, प्रमाता स्वयमेव प्रमाणरूपेण बहिर्मुखो भूत्वा विस्तृतो भवति। अतो विषयाणां स्थितिर्विषयिसत्तातोऽस्ति, विषयाभावेऽपि विष-यिणः सत्ता अस्त्येव, तस्माद् विषय्येव मुख्यः; परन्तु बहिर्मुखतायां विष-यित्वे प्रमेयप्रमाणयोरासक्तिर्भवति तथा विषयी प्रमेयप्रमाणे स्वस्माद् भिन्नतया मन्यते। संविदः स्वरूपमेतद् रक्तकाल्यस्ति। इयं देवी नेन्द्रियग्राह्या, निर्गुणस्य निराकारस्य च तत्त्वस्यैव नामैतत्। उक्तञ्चैतत् तन्त्रालोके—

**तथाभासितवस्त्वंशः रञ्जनां सा बहिर्मुखी।**
**स्ववृत्तिचक्रेण समं ततोऽपि कलयन्त्यलम्॥**
**स्थितिरेषैव भावस्य ··· ··· ··· ···।**

(तन्त्रालोके—४, पृ० १५९-१६०)

**न चैषा चक्षुषा ग्राह्या न च सर्वेन्द्रियस्थिता।**
**निर्गुणा निरहङ्कारा रञ्जयेद् विश्वमण्डलम्॥**
**सा कला तु यदुत्पन्ना सा ज्ञेया रक्तकालिका॥**

(तत्रैव, पृ० १५५)

**यमरूपस्वरूपस्था रूपातीतस्वरूपगा।**
**सा कला लीयते यस्यां यमकालीं तु सा स्मृता॥**

शक्तिपूजायामनेका देव्यः सन्ति यत्र दशमहाविद्याः, नवदुर्गाः, सप्त-मातृकाः प्रभृतयो मुख्याः।

तत्र दशमहाविद्यासु महाकाली, तारा, षोडशी, भुवनेश्वरी,[ छिन्न-

मस्ता, भैरवी, बगलामुखी, मातङ्गी, कमला, धूमावती, इत्येता दश गण्यन्ते। इमाः सर्वाः क्रमशो महाकालस्य, अक्षोभ्यस्य, पञ्चमुखशिवस्य, त्र्यम्बकशिवस्य, कबन्धशिवस्य, दक्षिणामूर्तिकालभैरवस्य, एकमुखमहारुद्रस्य, मतङ्गशिवस्य, सदाशिवपुरुषस्य च शक्तयः सन्ति। आसु दशसु धूमावती पुरुषशून्याऽस्ति, अत एव सा विधवेति कथ्यते।

तोडलतन्त्रे आसां दशमहाविद्यानां मध्ये नवानां क्रमशो नव भैरवा निर्दिष्टाः—महाकालः, अक्षोभ्यः, शिवः (त्रिनेत्रः पञ्चमुखश्च), त्र्यम्बकः, दक्षिणामूर्तिः, कबन्धः, एकवक्त्राः, मातङ्गशिवः, विष्णुरथवा सदाशिवः। धूमावत्या भैरवस्योल्लेखो नास्ति।

दशमहाविद्यासु षोडश्या नामानि—श्रीविद्या-ललिता-महात्रिपुरसुन्दरी-बाला-प्रभृतीनि सन्ति।

षोडश्या रूपाणि सन्ति—कुमारी, त्रिरूपा, गौरी, रमा, भारती, काली, चण्डिका, दुर्गा, ललिता चेति।

आसामुपासनाविधयः सम्प्रदायाश्च भिन्नाः।

नवदुर्गा यथा—शैलपुत्री, ब्रह्मचारिणी, चन्द्रघण्टा, कूष्माण्डा, स्कन्दमाता, कात्यायनी, कालरात्रिः, महागौरी, सिद्धिदात्री। आसां पूजाक्रमेऽवस्थाक्रमोऽपि विवक्ष्यते।

सप्तमातृकाः—ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, ऐन्द्राणी, चामुण्डा चेति।

एतेन विवरणेनेदं ज्ञायते यत्काली दशमहाविद्यासु तथा नवदुर्गासु षोडशीरूपेषु चान्यतमा देवी, या प्राचीनकालादेव पूजिता समाराधिता च वर्तते।

## काल्या नाम्नां गणनास्थानानि

चतुःषष्टियोगिनीषु कालरात्रि-कंकाली-उग्रचण्डा-नामानि गणितानि सन्ति। तत्र कंकालीति नाम्नो वारद्वयात्मिका गणनाऽस्ति। मन्येऽत्र भगवत्याः कालिकाया एव इमानि विविधरूपाणि।

देवीपुराणे देव्या द्वादशनामसु काल्या अपि नाम निर्दिष्टम्—

**गौरी काली उमा भद्रा दुर्गा कान्तिः सरस्वती ।**
**मङ्गला वैष्णवी लक्ष्मीः शिवा नारायणी क्रमात् ॥** (७९।१)

एतासां द्वादशदेवीनां पूजा मार्गतृतीयामारभ्य कार्या, इत्यप्युपदिष्टं तत्रैव ।

देवीस्तवप्रसङ्गेऽपि काल्या नामाऽस्ति—

**त्वं काली कालरात्री च कृतान्ती च सुदारुणा ।**
**त्वं भीषणी महारौद्री महाकाली नमोऽस्तु ते ॥**
**दक्षयज्ञविघाती च त्वं यमशीर्षनिकृन्तनी ।**
**त्वं देवी वीरमाता च उग्रकाली नमोऽस्तु ते ॥**
(८३।१०५-१०६)

अत्र 'उग्रकाली' इत्यस्य स्थाने रुद्रकाली, भद्रकाली इत्यपि पाठः ।

रुद्रयामलोत्तरतन्त्रावलोकनेनेदं विज्ञापितं यदस्य तन्त्रस्य भैरवः प्रष्टा महाकाली वक्तेति। अस्मिन् तन्त्रेऽपि कालीविद्यासाधन-कालिकासाधन-कालीपटल-भद्रकालीसाधन-श्मशानकालिकासाधन-गुह्यकालीसाधन-कुलजा-कालिका-उग्रकालीसाधन—कालिनीसाधनानि विभिन्नसाधनवत् प्रथमपटले नाम्नाऽङ्कितानि ।

एतदपि तत्र निर्दिष्टं यत् कालिकातारापूजने हरचक्रं निर्मायैव तयोः पूजनं करणीयम् ।

**कालिकायाश्च ताराया हरचक्रं शुभं भवेत् ।** (२।१३८)

गुह्यकालीसाधने देवचक्रमिति (२।१५५) । ताराकालीमन्त्रप्रयोगे बहु-विचारस्य नास्त्यावश्यकता ।

**कालीतारादिमन्त्रस्य सिद्धादीन्नैव शोधयेत् ।** (३।७)

कालिका चतुर्वर्षीयाऽत्र निगदिता—**चतुर्वर्षा च कालिका** । (६।९७)

# देवी सर्वोत्तमा

यद्यपि सर्वे देवाः साधकैरुपास्याः समर्चनीयाः सेव्याः समाश्रयणीयाः, ते च समर्था मनोरथान् पूरयितुं नात्र कश्चन सन्देहः। तेषु ब्रह्मविष्णुहराणां प्राधान्यं वर्तते। तत्र विष्णोः स्थानं विशेषतया मह्यते, तथापि सर्वापेक्षया शक्तेः स्थानं महत्। विष्णुनेत्थं प्रतिपादितम्—

**तस्मान्नाहं स्वतन्त्रोऽस्मि शक्त्यधीनोऽस्मि सर्वथा।**

(दे० भा० १।४।६१)

पराशक्तिरेवाद्याशक्तिर्गीयते तत् प्रसादादेवान्ये महत्त्वं भेजुः। तदुक्तम्—

**पराशक्तिप्रसादेन महत्त्वं प्रतिपेदिरे।** (दे० भा० ७।२९।२)

भगवत्पूज्यपादेन सौन्दर्यलहर्यां शक्तेः प्रभावोऽगाद्येवम्—

**शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं**<br>
**न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि॥**

दुर्गासप्तशत्याम्—

**यस्याः प्रभावमतुलं भगवाननन्तो**<br>
**ब्रह्मा हरश्च न हि वक्तुमलं बलं च।**

अत्र विचारणीयं त्वेतद् यद्देवी कथं सर्वोत्तमा—देवाः स्वाधिकारानुकूलकर्मकरणपरायणाः सन्तः पूज्यन्ते। न हीमेऽनधिकृतकर्मकरणे समर्थाः। देवी तु सर्वं करोति, सर्वत्रैवास्याधिकारः, इयम् उद्भवस्थितिसंहारकारिणी नृसिंहतापनीये—एषा नारसिंही सर्वमिदं सृजति, सर्वमिदं रक्षति, सर्वमिदं संहरति, इयमेव भगवती सच्चिदानन्दरूपिणी, सर्वाधिष्ठानरूपा, सदाकारा, सदानन्दा, चिदेकरसरूपिणी, ब्रह्मस्वरूपा, नित्या, सनातनी। (अहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगत्। शून्यं चाशून्यं च।)

एनामेव विभिन्नदृष्टिभिर्विभिन्नाकारां वर्णयन्ति दर्शनकाराः—

**केचित् तां तप इत्याहुस्तमः केचिज्जडं परे।**<br>
**ज्ञानं मायां प्रधानं च प्रकृतिं शक्तिमप्यजाम्॥**

**विमर्श इति तां प्राहुः शैवशास्त्रविशारदाः ।**
**अविद्यामितरे प्राहुर्वेदतत्त्वार्थचिन्तकाः ।।** (देवीभागवते)

उत्तमत्वञ्चास्या मातृत्वात्–'पितुः शतगुणा माता गौरवेणातिरिच्यते'। गौरवादेव पार्वतीपरमेश्वर–उमामहेश्वर–राधाकृष्ण–सीताराम–लक्ष्मी-नारायण-शचीपुरन्दरादिशब्देषु 'अभ्यर्हितं च' इति पूर्वनिपाते जाते देव्याः प्राथम्यम् । श्रुतावपि त्वं स्त्री त्वं पुमानित्यादौ स्त्रियाः प्राथम्यम् । एक-मात्मानं द्विधा समपातयत्, इति समुत्पादनेऽपि प्रथमार्धस्य स्त्रीरूपत्वे प्राथम्यं तस्या एव । किं बहुना, निर्गुणे सृष्ट्यादियोगो नास्ति किन्तु मायाशबलिते सगुणे सृष्ट्यादिसामर्थ्यं स्वयमेव समायाति । अतः सर्वोत्तमा देवीति कथनं कथमपि व्यतिक्रमतां नाधत्ते ।

देवीभागवते यद्यपि देव्याः स्थानं सर्वत्रैवास्ति तथापि शक्तिपीठेषु सिद्धपीठेषु च भगवत्याः काल्या विशेषरूपेण स्थानं कालञ्जरे––'**रुद्राणी रुद्रकोटचां तु काली कालञ्जरे तथा**' (दे० भा० ७।३०।६२) । अस्मिन्नेव स्कन्धे ३८ अध्यायेऽपि काल्याः स्थानं तदेव निर्दिष्टमस्ति । गुह्यकाल्याः स्थानं नेपाले निर्दिष्टम् । यथा—

**गुह्यकाल्या महास्थानं नेपाले यत् प्रतिष्ठितम् ।**
(दे० भा० ७।३८।११)

देवीपुराणे—

**कालिकाख्या तथा तारा उमा सर्वनगेषु च ।**
**रुद्राणी च कुशालम्बे भद्रकाली जलन्धरे ।।**
**महालक्ष्मीस्तु कोलाख्ये कालरात्री च सज्यगा ।**
**महाकालीति विख्याता वैदेहे भद्रकालिका ।।**
**एता इन्द्रावताराख्या महादेव्यः सुरारिहाः ।।** (३८।६-९)

त्रिपुरारहस्ये ४८ अध्याये ७२-७३ श्लोकानुसारेण कालिकाया मालवे गुह्यकाल्यास्तु नेपाले स्थानं निरूपितम् ।

देवीभागवते नैमिषेऽपि काल्याः पूजनमुपदिष्टम् --७७।१३-१४ श्लोकयोः। अन्यदपि तत्र निर्दिष्टम्—

**जामदग्न्येन लंकाद्रौ कालिकेति तथा पुरा।**
**पूजिता विजया नाम शाकद्वीपे महोदया॥** (३९।१८)

अत्र स्थानप्रशंसाप्रसङ्गे भिन्न-भिन्नस्थानेषु विविधदेवीनां कीर्तनमित्थं वर्णितम्—

**वैदिशे मध्यगा देवीं सिंहयाने व्यवस्थिता।**
**ऊर्ध्वं जयावहा देवी महाकालीति विश्रुता॥**
**परा जम्बुकनाथस्य वह्निभागगता मुने।**
**भद्रकालीति विख्याता महालक्ष्मीर्गिरौ स्थिता॥**

(४२।११-१२)

संवत्सरभेदे देवीनां पूजाप्रकारे काल्याः पूजनविधिरपि निर्दिष्टः—

**काली प्लवङ्गवर्षे तु दण्डपाशोद्यता भवेत्।**
**कृष्णगन्धोपहारेण पूजिता शुभदायिका॥** (५०।१८८)

एवमत्र रौद्र्याः कपालिन्या अपरासां च पूजा विहिता। अपरत्र—

**ईशाद्यैः कालिकाद्यास्तु यष्टव्या विधिना मुने।** (४५।१८)

कालिकासम्बन्धे कथाद्वयमप्यत्र वर्तते। तद्यथा—

भगवतो वृषभवाहनान्नन्दिना पदमालानाम्नी अपराजिता विद्याऽवाप्ता। ततो रामेणावाप्य जप्ता सा विद्या। तत्प्रभावेण कालिका अभयं नामासुरं शशाप।

**शशाप कालिका क्रुद्धा विप्रेशस्य वधैषिणम्।** (४३।७)

भगवान् रामः पृथिवीं विजित्य द्विजदेवेषु विन्यस्य सागरान्तिके महार्णवे देवीपुरं निर्माय तदनन्तरं तत्रस्थां कालनाशिनीं कालिकां समानीय अयोध्यामागतः।

# कालिकायाः स्थानानि

त्रिपुरारहस्ये कालिकास्थानं मालवप्रदेशे निर्दिष्टम्। तद्यथा—

**करवीरे महालक्ष्मीः कालिका मालवेषु सा।**

(त्रि० र० मा० खं० ४८।७२)

अत्र स्थानविशेषो नोक्तः। मालवस्तु देशविशेषः।

देवीभागवते सप्तमस्कन्धे ३८ अध्याये काल्याः स्थानं कालञ्जरे गिरावुक्तम्। तद्यथा—

**काली कालञ्जरे पुनः।** (३८।२८)

पुनश्च तत्रैव सप्तमस्कन्धे ३० अध्याये तथा मत्स्यपुराणे १३ अध्याये च—

**रुद्रकोटच्यां च रुद्राणी काली कालञ्जरे गिरौ।** (६१।३२)

उभयोर्वचनयोः सामञ्जस्यस्थापने प्रतिभातीदं यत्–आधुनिके 'मैहर' इत्याख्यस्थाने यच्छारदास्थानं तदेवात्राभिप्रेतम्। केचन कालञ्जरदुर्गे कथयन्ति। तथा गुह्यकाल्याः स्थानं नेपालदेशे चोक्तम्। तद्यथा—

**गुह्यकाल्या महास्थानं नेपाले यत् प्रतिष्ठितम्।** (७।३८।१८)

तन्त्रचूडामणौ—एकपञ्चाशत्पीठगणनाप्रसङ्गे कालीपीठे काल्याः स्थानं निर्दिष्टम्। कालीपीठन्तु 'नन्दूलाल डे'—मतानुसारं कलकत्तायां कालीघाटनाम्ना ख्यातं स्थानमेव। (द्र० डे०, पृ० ८४-८५)

तथा हि—

**नकुलीशः कालिपीठे दक्षपादाङ्गुली च मे।**
**सर्वसिद्धिकरी देवी कालिका तत्र देवता॥**

एतत्स्थानं शक्तिपीठनाम्ना ख्यातमत्र नकुलीशो भैरवः, तथाऽत्र सतीदेव्या दक्षपादाङ्गुलीनां पातः। शिवचरितेऽपि कालीपीठस्य स्थाने कालीघट्टमित्येव विलक्षणं लिखितम्, शेषन्तु पूर्ववदेव ज्ञेयम्। प्राणतोषिणीतन्त्रे चतुर्थकाण्डे द्वितीयपरिच्छेदे विविधपीठनिरूपणप्रसङ्गे निगदितम्—

**श्रीरहं श्रीगिरौ चैव काली कालोदके तथा।**

(२३७ पृ०, कलकत्ता, १२९१ सं०)

अपि च—

**महाभद्रा भद्रकाली हरतीर्थे गवीश्वरी ।**
**स्वर्गोच्छेदे महारात्रिः प्रबला च महावने ॥**
**भद्रा च भद्रकाली च भद्रेश्वरीश्वरप्रिया ।**
**भद्रेश्वरे रमा विष्णुप्रिया विष्णुपदे तथा ॥**
**कालिघट्टे गुह्यकाली किरीटे च महेश्वरी ।**
**महाकाले महाकालो महाकाली महेश्वरी ॥**
**कालञ्जरे नीलकण्ठो हरकाली शिवा मता ।**

तन्त्रचूडामणौ—

**नितम्बः कालमाधवे ... ... ... ... ।**
**भैरवश्चासिताङ्गश्च देवी काली सुसिद्धिदा ॥**

अपि च—

**नलाहाट्यां नलापातः योगीशो भैरवस्तथा ।**
**तत्र सा कालिका देवी सर्वसिद्धिप्रदायिका ॥**

## श्रीविद्या

शाक्ततन्त्रे विशेषेणोपास्या दशमहाविद्याः सन्ति, यतो विष्णोर्दशावतारा मुख्याः प्रादुर्भूताः । ताश्च क्रमशः काली, तारा, षोडशी, भुवनेश्वरी, भैरवी, छिन्नमस्ता, बगला, मातङ्गी, कमला च । अत्र केचन मन्यन्ते यत् काली, तारा, षोडशी, भुवनेश्वरी, एताश्चतस्रो महाविद्याः । भैरवी, छिन्नमस्ता, धूमावती, एतास्तिस्रो विद्याः । बगला, मातङ्गी, कमला, इमास्तिस्रः सिद्धविद्या इति । आसां समासामुभयकुले विभाजनपरम्परा वर्तते—कालीकुलं श्रीकुलञ्च । तत्र प्रथमकुले काली, तारा, भुवनेश्वरी, छिन्नमस्ता वर्तन्ते, द्वितीयकुले षोडशी, भैरवी, बगला, कमला, धमावती,

मातङ्गी च सन्ति। शाक्तसाधकः कस्यचिदेकस्य कुलस्यानुसारं साधनायां प्रवृत्तो भवति। यावदासु कयाप्येकया मन्त्रदीक्षया दीक्षितो न भवति तावत्स साधको वास्तविकरूपेण शाक्तो न मन्यते। एतत्कुलद्वयमेव कालीक्रम-श्रीक्रमाभिधयाप्याख्यायते। आसां महाविद्यानां तावत्संख्याकाः शिवा महाकाल-अक्षोभ्य-कामेश्वर-त्र्यम्बक-दक्षिणामूर्ति-एकवक्त्र-मातङ्ग-सदाशिवनामानो दक्षिणपार्श्वे पूज्यन्ते, विहाय धूमावतीं यत इयं विधवारूपिणी।

दशमहाविद्यासु तृतीया महाविद्या षोडशी, अत इयं तृतीयेत्यभिधीयते। आदिशक्तेरादिरूपं कालीति, तस्या एव विकसितं रूपं षोडशीति, तस्मात् रक्तकालीनाम्नाऽपीयं स्मर्यते।

**सा काली द्विविधा प्रोक्ता श्यामा-रक्ताप्रभेदतः।**
**श्यामा तु दक्षिणा प्रोक्ता रक्ता श्रीः सुन्दरी मता॥**

यद्यप्यहं सम्प्रति कालीविषये किञ्चिल्लिखितुं प्रवृत्तस्तस्माच्छ्रीविद्याविषये किमप्यधिकं न वक्तुकामः संक्षेपेण तत्परिचयं प्रदर्शयाम्यत्र—

शाक्तागमे समुपास्यासु दशमहाविद्यासु तिसृणां कालीताराषोडशीनां प्राधान्यं तत्रापि षोडश्याः प्रामुख्यं वरीवर्ति। आसां क्रमदीक्षापि प्रचलति। शाक्ततान्त्रिकाणां मतद्वयं कौलमतं समयाचारमतं च। कौला उपासनां त्रिकोणे कुर्वन्ति, समयाचारमतानुयायिनः सहस्रारे। समयाचारस्त्वन्तःपूजा, द्वितीयो बाह्यपूजेति।

एतत्तु निर्विवादं यद्दशमहाविद्यासु प्रधानास्पदभूता ब्रह्मविद्यास्वरूपा च श्रीविद्यैव—

**यत्रास्ति भोगो न च तत्र मोक्षो**
**यत्रास्ति मोक्षो न च तत्र भोगः।**
**श्रीसुन्दरीसेवनतत्पराणां**
**भोगश्च मोक्षश्च करस्थ एव॥**

अत्र श्रीविद्यामाहात्म्ये त्वेतावदुक्त्वा किञ्चिदन्यदुल्लिख्य पुनर्वक्ष्यामि।

श्रीविद्यासम्प्रदाये सूत्रं भाष्यं दर्शनादि वर्तन्ते । केवलमत्रोपासनैव गृह्यते, अत्र सम्प्रदायत्रयं वर्तते—कादि, हादि, सादीति । कामराजोपासिता कादि-विद्या, लोपामुद्रोपासिता हादिविद्या, इति सम्प्रदायद्वयं तु प्रसिद्ध-मत्यन्तम् । कादिविद्यादेरिदं तात्पर्यं यत्पञ्चदशीमन्त्रे कूटत्रयं वर्तते—प्रथमकूटं ककारादि, द्वितीयं हकारादि, तृतीयं सकारादि । तत्र या पञ्चदशी ककारात् प्रारभ्यते सा कादिविद्या, या हकारात् प्रारभ्यते सा हादिविद्या, या सकारात् प्रारभ्यते सा सादिविद्या, इति विद्यात्रयं प्राचीनैरुपासकैरा-श्रितम् । त्रिपुरोपनिषद्भावनोपनिषत्कौलोपनिषदः कादिविद्यायां प्रख्याताः-त्रिपुरतापिन्युपनिषच्च हादिविद्यायाम् । श्रीविद्यासाहित्यं बहुविस्तृतं वर्तते । ब्रह्माण्डपुराणे त्रिपुरारहस्ये च ललितोपाख्यानं विस्तरेण वर्णितम् । श्रीविद्या-रत्नसूत्रम्, सुभगोदयः, प्रपञ्चसारः, योगिनीहृदयम्, कामकलाविलासः, परशुरामकल्पसूत्रम्, काव्यकलाविलासः, वरिवस्यारहस्यम्, यौवनोल्लासः, नित्याषोडशिकार्णवः, विद्यार्णवः, दक्षिणामूर्तिसंहिता, ज्ञानार्णवः, इत्यादि ।

अस्याः प्राचीनाः प्रसिद्धा उपासका बहव आसन्—हयग्रीवागस्त्य-लोपामुद्रेन्द्रादिप्रभृतयः, अर्वाचीनेषु गौडपादशङ्करनित्यानन्दचैतन्यवल्ल-भादयः ।

द्वादशसम्प्रदायेषु कामराजविद्याया महत्त्वमासीत्पुरा काले—

**मनुश्चन्द्रः कुबेरश्च लोपामुद्रा च मन्मथः ।**
**अगस्तिरग्निः सूर्यश्च इन्द्रः स्कन्दः शिवस्तथा ।।**
**क्रोधभट्टारको देव्या द्वादशामी उपासकाः ।।**

क्रोधभट्टारकः—दुर्वासा इति । वर्तमानकाले सम्प्रदायद्वयमेव प्रचलति—लोपामुद्रायाः, मन्मथस्य (कामदेवस्य) च । अनयोरपि कामराजविद्याया एव व्यापकप्रचारः । एषा विद्या पञ्चदशवर्णात्मिका । अस्या एव नामान्तरं त्रिपुरा । त्रिमूर्तिभ्यः पुरातनी, गुणत्रयातीता, त्रिगुणनियन्त्री, अथवा इडादित्रिनाडीषु निवासिनी, ब्रह्मादित्रिमूर्तिजननी, वेदत्रयोमयी, ब्रह्मादि-मयी, ज्ञानक्रियेच्छामयो वा । त्रिपुरैवात्मशक्तिः सर्वं शाक्तमजीजनत् ।

तदुक्तं शक्तिमहिम्नःस्तोत्रे—

**तिसृभ्यो मूर्तिभ्यः पुरातनत्वात् त्रिपुरा ।**

त्रिपुरार्णवे च—

**नाडीत्रयं तु त्रिपुरा सुषुम्ना पिङ्गला त्विडा ।**
**मनो बुद्धिस्तथा चित्तं पुरत्रयमुदाहृतम् ।**
**तत्र तत्र वसत्येषा तस्मात्तु त्रिपुरा मता ॥**

देवीभागवते—

**शक्तिः करोति ब्रह्माण्डं सा वै पालयतेऽखिलम् ।**
**इच्छया संहरत्येषा जगदेतच्चराचरम् ॥** इत्यादि ।

इयं श्रीविद्याराजराजेश्वरी पञ्चप्रेतासनोपरि विराजमानाऽस्ति । तत्र पञ्चमहाप्रेताः–ब्रह्मा, विष्णुः, रुद्रः, ईश्वरः, सदाशिव इति । रहस्यमत्रै-तत्—निर्विशेषं ब्रह्म स्वशक्तिविलासद्वारा ब्रह्मादिपञ्चसमाख्यां समवाप्य वामादिशक्तिसान्निध्यात् सृष्टिस्थितिसंहारनिग्रहानुग्रहकृत्यानि साधयति । यदा ब्रह्मादयो वामादिशक्तिरहिताः सन्तः कार्येऽक्षमास्तदा ते प्रेतपदवाच्या भवन्ति । इत्थं श्रीविद्यायुधादिविषयेष्वपि रहस्यज्ञानस्यावश्यकताऽस्ति ।

शाक्तोपासनायां यद्यपि दशविद्यानामुपासना प्राधान्येन वर्तते, तथापि मुख्यत्वेन श्रीविद्याक्रमः कालीक्रमश्च लोके शास्त्रे च प्रसिध्यतः । तत्र श्रीविद्याया माहात्म्यं सर्वमतिशेते, साक्षान्मुक्तिप्रदा चैषा विद्या ।

श्रीविद्या सर्वश्रेष्ठा विद्या मन्त्रनायिकाऽस्ति, इयमेव कामराजविद्येति ख्यायते । इयमेव ब्रह्मविद्या ब्रह्ममयी, श्रौती श्रुतिसारभूता सर्वमूला ।

महाकालसंहितायाम्—

**अतः परतरा विद्या न भूता न भविष्यति ।**
**केनापि नैव शप्तेयं न च केनापि कीलिता ॥**

ज्ञानार्णवे—

वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ।
वर्णितुं नैव शक्येयं श्रीविद्या षोडशाक्षरी ॥

ब्रह्मविद्यास्वरूपा हि भुक्तिमुक्तिफलप्रदा ।
एकोच्चारेण देवेशि वाजपेयस्य कोटयः ॥

अश्वमेधसहस्राणि प्रादक्षिण्यं भुवस्तथा ।
काश्यादितीर्थयात्राः स्युः सार्धकोटित्रयान्विताः ॥

तुलां नायान्ति देवेशि नात्र कार्या विचारणा ।
एकोच्चारेण गिरिजे किं पुनर्ब्रह्म केवलम् ॥

षोडशार्णा महाविद्या न प्रकाश्या कदाचन ।
गोपितव्या त्वया भद्रे स्वयोनिरिव पार्वति ॥

अपि प्रियतमे देयं सुतदारधनादिकम् ।
राज्यं देयं शिरो देयं न देया षोडशाक्षरी ॥

सप्तलक्षं महाविद्यास्तन्त्रादौ कथिताः प्रिये ।
सारात् सारतरा चेयं महाविद्या सुगोपिता ॥

(पुरश्चर्यार्णवे, पृ० ७१७)

ब्रह्माण्डपुराणे ललितोपाख्याने—

इति मन्त्रेषु बहुधा विद्याया महिमोच्यते ।
मोक्षैकहेतुर्विद्या तु श्रीविद्या नात्र संशयः ॥

यस्य नो पश्चिमं जन्म यदि वा शङ्करः स्वयम् ।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥

इयमेव महाविद्या त्रिपुरसुन्दरी, त्रिपुरा, बाला, परा, ललिता,

परमभट्टारिका, षोडशी, राजराजेश्वरी, लोपामुद्रा, त्रिपुरेश्वरीत्यादिसंज्ञाभिरभिधीयते।

यद्यपीयं बहुविधा तन्त्रान्तरे निगदिता अस्या विद्याया अनुष्ठानकर्तारश्च प्राचीना महर्षयो देवाश्चाऽभवन्, तैश्च वैविध्येनानुष्ठिता विद्यैषा। तथापि मुख्यरूपेण पञ्चदशी षोडशी वा प्रसिद्धा।

पञ्चदश्याः स्वरूपं श्रीदेव्यथर्वशीर्षे यथा—

**कामो योनिः कमला वज्रपाणिर्गुहा हसौ मातरिश्वाभ्रमिन्द्रः।**
**पुनर्गुहा सकला मायया च पुरूच्यैषा विश्वमातादिविद्योम्॥१४॥**

कामः=कः, योनिः=ए, कमला=ईः, वज्रपाणिः=लः, गुहा=ह्रीं, हसौ वर्णौ द्वौ, मातरिश्वा=कः, अभ्रम्=हकारः, इन्द्रः=लः, गुहा=ह्रीं, सकलाः= त्रय इमे वर्णाः, माया= ह्रीं, इत्येवं कएईलह्रीं हसकहलह्रीं सकलह्रीमिति पञ्चदशी पञ्चदशाक्षरी वा विद्या। अस्मिन्मन्त्रे कूटत्रयं वर्तते— वाग्भवकूटं कामकूटं शक्तिकूटञ्च।

**प्रथमं वाग्भवं कूटं द्वितीयं कामकूटकम्।**
**तृतीयं शक्तिकूटं स्यात् कूटत्रयतनुर्मनुः॥**

इयमेव कामराजविद्याऽपि। यथा चन्द्रपीठे—

**स्मरो भगं बिन्दुमती लपरा वाग्भवं मतम्।**
**शिवो जीवः स्मरः शम्भुर्लपरा कामकूटकम्॥**
**भृगुः कामः क्षमा माया कामराजाभिधा मता॥**

लोपामुद्राविद्याऽपि ख्याता, यथा ज्ञानार्णवे—

**शृणु देवि प्रवक्ष्यामि लोपामुद्राभिधां पराम्**॥ इति॥

इयमेव कादिविद्या कथ्यते लोपामुद्राविद्या च। अस्मिन् विषये देव्यथर्वशीर्षे प्रोक्तम्—एषाऽऽत्मशक्तिः। एषा विश्वविमोहिनी। पाशाङ्कुशधनुर्बाणधरा। एषा श्रीमहाविद्या। य एवं वेद स शोकं तरति।

अस्य मन्त्रस्य बहवोऽर्था नित्याषोडशिकार्णवे वरिवस्यारहस्ये च दर्शिताः। गोपनीयोऽयं मन्त्रः। तदुक्तम्—

**अपरीक्षितशिष्याय तां न दद्यात् कदाचन।**
**यदुच्चारणमात्रेण पापसंघः प्रलीयते ॥** (म० म० ११।२)

षोडश्याः स्वरूपं तु मन्त्रमहोदधौ–

**तारं मायां च कमलामादौ बीजत्रयं पठेत्।**
**ब्रह्मझिण्टीशगोविन्दधरामायेति चादिमम् ॥**

**आकाशभृगुचक्रचभ्रमांसमाया द्वितीयकम्।**
**हंसधातृक्षमामाया तृतीयं बीजमीरितम् ॥**

**वाक्कामशक्तिसंज्ञं तु क्रमाद्बीजत्रयं भवेत्।**
**इयं षडर्णा श्रीमाया कामवाक्शक्तिसम्पुटा ॥**
**अनेकपुण्यसम्प्राप्या श्रीविद्या षोडशाक्षरी ॥** (११।३-६)

सङ्केतार्थस्तु—तारम्=ओम्, माया= ह्रीम्, कमला=श्रीम्, इति बीजत्रयम्। आद्यकूटं यथा—ब्रह्मा=कः, झिण्टोशः=एकारः, गोविन्दः=ईकारः, धरा-=लकारः, माया=ह्रीं इति। एवं कएईलह्रीमिति प्रथमकूटम्। द्वितीयकूटं यथा-आकाशः=हकारः, भृगुः=सकारः, चक्री=ककारः, अभ्रम्= हः, मांसम्=लः, माया=ह्रीं। एवं हसकहलह्रीमिति द्वितीयकूटम्। तृतीयकूटं यथा—हंसः=सः, धाता=कः, क्षमा=लः, माया=ह्रीं। एवं सकलह्रीमिति तृतीयकूटम्। प्रथमकूटस्य संज्ञा वाग्बीजम्। द्वितीयस्य कामबीजम्। तृतीयस्य शक्तिबीजमिति। श्रीः=बीजम्। माया=ह्रीं। कामः=क्लीं। वाक्= ऐं। शक्तिः=सौः। एतैः पञ्चबीजैः क्रमेण उत्क्रमेण च सम्पुटिता उपरिनिर्दिष्टा षडर्णा अर्थात् तारमायाकमलाबीजत्रयं तथा कूटत्रयं च षोडशाक्षरी भवति। अत्र प्रत्येककूटस्य गणना केवलैकवर्णपरत्वेन भवति न त्वनेकवर्णपरत्वेन। एवं मन्त्रस्वरूपं भवति—श्रीं ह्रीं क्लीं ऐं सौः, ओं ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं।

इयमेव षोडशी योगिनीतन्त्रे निरूपितेत्थम्—

श्रीबीजमायास्मरयोनिशक्ति-
स्तारं च माया कमलाऽथ विद्या ।
शक्त्यादिबीजैश्च विलोमतोक्त्या
श्रीषोडशीयं च शिवोपदिष्टा ॥

मायातन्त्रे—

लक्ष्मीः परा मदनयोनियुता च शक्ति-
स्तारः परा च कमलाप्यथ मूलविद्या ।
शक्त्यादिभिश्च विपरीततया प्रदिष्टा
श्रीमन्त्रराज उदितः परदेवतायाः ॥

अन्यत्रापि च—

श्रीबीजं शक्तिबीजं च कामबीजं च वाग्भवम् ।
बालान्तसंस्थितं बीजं प्रणवं च ततः परम् ॥
शक्तिबीजं रमां चैव विद्यां च परमेश्वरि ।
लोपां वा कामराजं वा त्रिकूटामथवा पराम् ॥
विन्यस्य प्रणवाद्यानि बीजानि पञ्च सुन्दरि ।
विपरीतक्रमेणैव विन्यसेत् षोडशीं पराम् ॥

सौभाग्यभास्करव्याख्यायाम्—

कामराजाख्यमन्त्रान्ते श्रीबीजेन समन्विता ।
षोडशाक्षरविद्येयं श्रीविद्येति प्रकीर्तिता ॥

अस्य मन्त्रस्य विनियोगस्त्वेवम्—अस्य त्रिपुरसुन्दरीमन्त्रस्य दक्षिणामूर्तिर्ऋषिः, पंक्तिश्छन्दः, श्रीमत्त्रिपुरसुन्दरीदेवता, ऐं बीजम्, सौः शक्तिः, क्लीं कीलकम्, ममाभीष्टसिद्ध्यर्थे जपे विनियोगः ।

अत्र ऋष्यादिन्यास-करन्यास-आसनन्यास-षडङ्गन्यास-जगद्वशीकरण-न्यास–संमोहनन्यास–अक्षरन्यास–वाग्देवतान्यास–सृष्टिन्यास-स्थितिन्यास-पञ्चावृतिन्यास-व्यापकन्यास-षोढान्यासाः क्रमशः करणीयाः। षोढान्यासाभ्यन्तरे षट् न्यासाः सन्ति, ते च गणेशमातृका-ग्रहमातृका-नक्षत्रमातृका-योगिनीमातृका-राशिमातृका-पीठमातृकान्यासाभिधाः।

एतेषां सर्वेषां न्यासानां प्रक्रियास्तु विभिन्नग्रन्थेषु नित्योत्सव-ज्ञानार्णव-विद्यार्णवतन्त्र-बृहत्तन्त्रसार-शाक्तप्रमोद-मन्त्रमहार्णव-मन्त्रमहोदधिनित्यार्णवागमतत्त्वविलासप्रभृतिषु द्रष्टव्याः।

एते सर्वे च न्यासाः सर्वत्रावश्यकत्वेन न वाञ्छिताः; अपि तु कार्यविशेषे साधकैः कार्याः। यथा—षोढान्यासादयो न्यासाः कार्याः सौभाग्यवाञ्छया। एवं जगद्वशीकरणसंमोहनादयोऽपि ज्ञेयाः। ऋषिकराङ्गन्यासास्तु आवश्यका एव। न्यासानां सकलमन्त्रेषु आदौ मायाश्रीबीजयोजनमावश्यकम्। तदुक्तम्—

**न्यासान् सर्वान् प्रकुर्वीत मायाश्रीबीजपूर्वकान्।** (म० म० ११।८)

न्यासान्ते ध्यानमप्यावश्यकम्, तच्चोक्तग्रन्थेभ्यो ज्ञेयम्।

अनन्तरं देवीप्रीत्यर्थं संक्षोभ-द्राविणी-आकर्षिणी-वश्य-उन्माद-महांकुशा-खेचरी-बीजयोनिमुद्राणां नवानां प्रदर्शनम्।

ततो ध्यानम्—

**बालार्कयुततेजसं त्रिनयनां रक्ताम्बरोल्लासिनीं**
**नानालङ्कृतिराजमानवपुषं बालोडुराट्शेखराम्।**
**हस्तैरिक्षुधनुःसृणिसुमशरं पाशं मुदा बिभ्रतीं**
**श्रीचक्रस्थितसुन्दरीं त्रिजगतामाधारभूतां स्मरेत्॥**

अपि च—

**बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम्।**
**पाशाङ्कुशधनुर्बाणं धारयन्तीं शिवां श्रये॥**

ततो जपः । लक्षसंख्याको जपो विहितोऽत्र । त्रिमधुरोपेतैः करवीर-पुष्पैर्दशांशहवनम् । वामकेश्वरतन्त्रे किंशुकैः कुसुम्भकुसुमैर्वा हवनं विहितम् । एतेन सिद्धमन्त्रो भवेत्, प्रयोगं च कर्तुमर्हति ।

श्रीविद्याया अनेके भेदाः सन्ति, तत्र केचन लिख्यन्तेऽवबोधनाय—

**कामराजविद्या**—क ए ई ल ह्रीं, ह स क ह ल ह्रीं, स क ल ह्रीं ।

**प्रथमलोपामुद्रा**—ह स क ल ह्रीं, ह स क ह ल ह्रीं, स क ल ह्रीं ।

**मनुपूजिता**-क ह ए ई ल ह्रीं, ह क ए ई ल ह्रीं, स क ए ई ल ह्रीं ।

**चन्द्रपूजिता**-स ह क ए ल ई ल ह्रीं, स ह क ह ई ल ह्रीं, स ह क ए ई ल ह्रीं ।

**कुबेरपूजिता**—ह स क ए ई ल ह्रीं, ह स क ह ए ई ल ह्रीं, ह स क ए ई ल ह्रीं ।

**द्वितीयलोपामुद्रा**—क ए ई ल ह्रीं, ह स क ह ल ह्रीं, स ह स क ल ह्रीं ।

**नन्दिपूजिता**—स ए ई ल ह्रीं, स ह क ह ल ह्रीं, स क ल ह्रीं ।

**इन्द्रपूजिता**—क ए ई ल ह्रीं, ह स क ह ल ह्रीं, स क ल ह्रीं ।

**सूर्यपूजिता**—क ए ई ल ह्रीं, स ह क ल ह्रीं, स ह क स क ल ह्रीं ।

**शङ्करपूजिता**—क ए ई ल ह्रीं, ह स क ल ह्रीं, क ए ई ल ह स ह क ल स क स क ल ह्रीं ।

**विष्णुपूजिता**—क ए ई ल ह्रीं, ह स क ल ह्रीं, स ह स क ल ह्रीं, स ए ई ल ह्रीं, स ह क ह ल ह्रीं, स क ल ह्रीं ।

**दुर्वासापूजिता**—क ए ई ल ह्रीं, ह स क ह ल ह्रीं, स क ल ह्रीं ।

इतोऽन्ये बहवो भेदा विद्यार्णवादितन्त्रेषु अवलोकनीयाः । कुबेरो-पासितभेदा द्वात्रिंशदात्मका मन्त्रमहोदधिटीकायां नौकायां द्रष्टव्याः । ज्ञानार्णवे रुद्रयामले तथागमेषु विद्याया भेदाः प्रदर्शिताः सन्ति, तत एवा-वगन्तव्याः । पारिभाषिकी-बीजावली-षोडशी-गुह्यषोडशी-महाषोडशी इत्यादिप्रकारा मन्त्रा ब्रह्मयामल-श्रीक्रमसंहिता-ज्ञानार्णव-कुब्जिकासिद्ध-यामलेपूद्धृताः, एते ततोऽवगन्तव्याः ।

अत्रेदमप्यवगन्तव्यं यद् भगवत्याः षोडश्या मुख्यरूपेण त्रीणि रूपाणि—१. श्रीबाला-त्रिपुरसुन्दरी, श्रीबाला-त्रिपुरा वा, २. श्रीललितात्रिपुरसुन्दरी, श्रीश्रीविद्या वा ३. श्रीषोडशी महात्रिपुरसुन्दरी।

तत्र श्रीबालायास्त्र्यक्षरो मन्त्रः (ऐं क्लीं सौः) पूजायन्त्रं नवयोन्यात्मकं तस्मात्सा त्रिपुरा त्र्यक्षरी वेति कथ्यते। श्रीललितायाः श्रीविद्याया वा मुख्यो मन्त्रः पञ्चदशाक्षरः। अतः पञ्चदशीयं कथ्यते। पूजायन्त्रमस्याः श्रीचक्रं श्रीयन्त्रं वा। श्रीषोडश्या महात्रिपुरसुन्दर्या वा मुख्यो मन्त्रः षोडशाक्षरः। तदनुरूपमेव तस्या नाम षोडशीति। पूजायन्त्रं श्रीयन्त्रमेव। इदं यन्त्रं पिण्डब्रह्माण्डरहस्यबोधकं चक्रराजेति नाम्नाख्यायते। भगवत्याः पञ्चदश्याः षोडश्याश्चोपासनायां स एवाधिकृतो यो विधिपूर्वकं श्रीबालामशिश्रियत्।

श्रीबालायास्त्र्यक्षरमन्त्रस्य मन्त्रोद्धारो मन्त्रकोष-ज्ञानार्णव-मन्त्रमहोदधि-मन्त्रमहार्णव--त्रिपुरासारसमुच्चय--विश्वसारतन्त्र--मेरुतन्त्र--महाकालसंहितासु वर्तते, विनियोगन्यासध्यानानि च तत्र सन्ति, विस्तरभयादत्र तत्सर्वं नोल्लिख्यते, पुरश्चरणसंख्याहवनसामग्र्योऽपि तत्र निर्दिष्टाः। कार्यवशात् त्र्यक्षरे विविधभेदाश्च यथाऽरिक्षोभहेतवे—ऐं सौः क्लीं, वशीकृतौ—क्लीं ऐं सौः, मुक्त्यै—क्लीं सौः ऐं।

श्रीबालामन्त्रोऽपि पञ्च-षड्-नव-दश-चतुर्दश--षोडश--सप्तदश--अष्टादश-विंशति-अष्टाविंशति-पञ्चत्रिंशदक्षरात्मको भवति। तेष्वप्यवान्तरबहुभेदः।

षोडश्या द्वितीयं रूपं श्रीललितात्रिपुरसुन्दरी। इयमेव श्रीललिता-श्रीविद्या-श्रीराजराजेश्वरीनामभिः प्रसिद्धा। अस्याः पञ्चदशाक्षरो मन्त्रोऽनेकभेदात्मकः पूर्वं प्रदर्शित एव। अत्रापि षोडश-सप्तदश-अष्टादश-एकोनविंशति-द्वाविंशति-त्रिंशदक्षरात्मकः त्रिकूटात्मकः कादिहादिसादिभेदात्मकोऽवान्तरविविधभेदयुतो मन्त्रोऽस्ति।

तृतीयं रूपं तु श्रीमहात्रिपुरसुन्दरीति। इयमेव श्रीषोडशी, श्रीपरा, श्रीमहाषोडशी, इति संज्ञाभिरप्युच्यते।

तस्या मन्त्रोद्धारः —

आद्यबीजद्वयं भद्रे विपरीतक्रमेण हि।
विलिख्य परमेशानि ततोऽन्यानि समुद्धरेत् ॥
अन्तर्मुखी वरारोहे कुमारी त्रिपुरेश्वरी।
एभिस्तु पञ्चसंख्यातैर्बीजैः संपुटितां यजेत् ॥
षट्कूटा परमेशानि विद्येयं षोडशाक्षरी।
त्रिकूटाः सकला भद्रे षोडशार्णा भवन्ति हि ॥
वैष्णव्येकोनविंशार्णा शैवी सप्तदशाक्षरी ॥

अस्यार्थः —आद्यबीजद्वयं मायारमात्मकं तस्य विपरीतक्रमः। आदौ रमा पश्चान्माया, अन्तर्मध्ये स्थितं कामबीजं मुखे आदौ यस्याः कुमार्याः। एभिस्तु पञ्चसंख्यातैर्बीजैः षट्कूटां सप्तकूटां नवकूटां वा संपुटितां सम्पुटवत्कृतां तेन अनुलोमविलोमतः पुटितामित्यर्थः।

रुद्रयामले-

श्रीमाया मादनी वाणी परा तारं शिवप्रिया।
हरिप्रिया त्रिकोटा सा परा वाणी मनोभवः ॥
माया लक्ष्मीर्महाविद्या श्रीबीजषोडशी परा ॥

श्रीकल्पद्रुमे—

तारं मायां च कमलामादौ बीजत्रयं पठेत्।
ब्रह्मझिण्टीशगोविन्दधरामायेति चादिमम् ॥
आकाशभृगुचक्रचभ्रमांसमाया द्वितीयकम्।
हंसधातृक्षमामाया तृतीयं बीजमीरितम् ॥
वाक्कामशक्तिसंज्ञं तु क्रमाद् बीजत्रयं भवेत्।
इयं षडर्णा श्रीमाया कामवाक्शक्तिसम्पुटा ॥

**अनेकपुण्यसम्प्राप्या श्रीविद्या षोडशाक्षरी ।**
**मुनिः स्याद् दक्षिणामूर्तिः पंक्तिश्छन्दः समीरितम् ॥**
**देवता जगतामादिः श्रीमहात्रिपुरसुन्दरी ।**
**बीजम् ऐं भृगुरौ शक्तिः कामबीजं तु कीलकम् ॥**

१. श्रीं ह्रीं क्लीं ऐं सौः, ओं ह्रीं श्रीं क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं सौः ऐं क्लीं ह्रीं श्रीं ।

अङ्गन्यासस्तु क्रमशः —१. श्रीं ह्रीं क्लीं ऐं सौः, २. ओं ह्रीं श्रीं, ३. क ए ई ल ह्रीं, ४. ह स क ह ल ह्रीं, ५. स क ल ह्रीं, ६. सौः ऐं क्लीं ह्रीं श्रीं । ध्यानं बालार्कतेजसमित्यादि ।

षोडश्याः कामेश्वरी, भगमालिनी, नित्यक्लिन्ना, भेरुण्डा, वह्निवासिनी, महावज्रेश्वरी, शिवदूती, त्वरिता, कुलसुन्दरी, नित्या, नीलपताका, विजया, सर्वमङ्गला, ज्वालामालिनी, विचित्रा, महात्रिपुरसुन्दरी इति षोडश नित्याः सन्ति, तासां सर्वासामनेके मन्त्राः पृथक्-पृथक् सन्ति । तेषां मन्त्राणां विनियोगन्यासध्यानहोमपुरश्चरणसंख्या अपि पृथक् तत्सर्वं नित्याषोडशिकार्णवाद्याकरग्रन्थेभ्योऽवगन्तव्यम् ।

अत्रेदमप्यवगन्तव्यं यत् त्रिपुरसुन्दर्याराधनायां बहूनां देवानां पूजनं विहितं यथा पञ्चानां लक्ष्मीणाम्, तत्र श्रीविद्यालक्ष्मी, लक्ष्मी, महालक्ष्मी, त्रिशक्तिलक्ष्मी, सर्वसाम्राज्यलक्ष्मी, इति पञ्च परिगणिताः । आसां मन्त्रादिकं पूजास्थानं पृथक्-पृथक् वर्णितमुपलभ्यते श्रीविद्यार्णवादिषु । एवं पञ्च कोशविद्या अपि सन्ति, यत्र श्रीविद्या—कोशेश्वरी, परंज्योतिःकोशेश्वरी, परनिष्कलदेवता-कोशेश्वरी, अजपा-कोशेश्वरी, मातृका-कोशेश्वरी, इति पञ्च सन्ति । आसामपि मन्त्रध्यानादिकं सर्वं पृथक्-पृथग् वर्तते । एवं पञ्च कल्पलताविद्या वर्तन्ते, यत्र श्रीविद्याकल्पलतेश्वरी, पारिजातेश्वरी, पञ्चबाणेश्वरी, पञ्चकामेश्वरी, कुमारी, इति पञ्च । एवं पञ्च कामदुघाः सन्ति, यत्र श्रीविद्या-कामदुघा, अमृतपीठेश्वरी, अमृतेश्वरी, अन्नपूर्णा, सुधाश्रीः, इति पञ्च वर्तन्ते । एवं पञ्च रत्नेश्वरीविद्या अपि सन्ति, यत्र श्रीविद्यारत्नेश्वरी, श्रीसिद्धलक्ष्मी-रत्नेश्वरी, मातङ्गी-रत्नेश्वरी, भुवनेश्वरी-रत्ने-

श्वरी,वाराही-रत्नेश्वरी इति पञ्च परिगणिताः । आसां सर्वासां मन्त्रध्यान-स्थानन्यासादिकं सर्वं श्रीविद्यार्णव-मन्त्रमहोदध्याद्याकरग्रन्थेभ्यो ज्ञातव्यम् । इतः परं षण्णां दर्शनानां शैव-शाक्त-ब्राह्म-वैष्णव-सौर-सौगतानां पूजनं विहितं तेषां मन्त्रादिविधयो निर्दिष्टा मन्त्रमहोदधि-श्रीविद्यार्णव-तन्त्रादिषु । ऊर्ध्वाम्नाये पञ्च समयाविद्या अपि कथितास्तत्र श्रीविद्या, श्रीबगला, श्रीकालरात्रिः, जयदुर्गा, छिन्नमस्ता च पञ्च संख्याताः । आसां मन्त्राद्यनुष्ठानं श्रीविद्यार्णवादिषु ।

श्रीविद्याप्रसङ्गेऽपरेऽपि मन्त्राः सन्ति, यथा नवाक्षरी रत्नेश्वरीविद्या, चक्रेश्वरी-गायत्री, त्रिपुरसुन्दरी-गायत्री, प्रासादपरा, बीजावली-षोडशी, गोपालसुन्दरी, कामेश्वर इति ।

प्रसङ्गादत्राधिकारिविषये किञ्चिच्चिन्त्यते—अदीक्षितः पुरुषः कथमपि नाधिकारी । तदुक्तं योगिनीहृदये—

**पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः ।**
**तेषां समयलोपेन विकुर्वन्ति मरीचयः ।।**
**नानामन्त्रक्रमेणैव पारम्पर्येण लभ्यते ।।**

अत एवात्र दीक्षा अवश्यमेव ग्राह्या । 'कुत्र देया विद्यैषा' इत्यस्मिन् विषये स्वयमेव वदत्यात्मपुराणे—

**ब्रह्मविद्यातिसंखिन्ना ब्रह्मिष्ठं ब्राह्मणं ययौ ।**
**वाराङ्गनासमां मां हि मा कृथा सर्वसेविताम् ।।**
**गोपाय मां सदैव त्वं कुलजामिव योषिताम् ।**
**शेवधिस्त्वक्षयस्तेऽहमिह लोके परत्र च ।।**
**निन्दा गुणवतां तद्वत् सर्वदार्जवशून्यता ।**
**इन्द्रियाधीनता नित्यं स्त्रीसङ्गश्चाविनीतता ।।**
**कर्मणा मनसा वाचा गुरौ भक्तिविवर्जनम् ।**
**एवमाद्या येषु दोषास्तेभ्यो वर्जय मां सदा ।।**

**एवं हि कुर्वतो नित्यं कामधेनुरिवास्मि ते ।**
**वन्ध्यान्यथा भविष्यामि त्वमेव फलवर्जिता ॥**

अपि च—विद्वान्, श्रद्धावान्, दृढाशयः, अलुब्धः, स्थिरगात्रः, प्रेक्ष्यकारी, जितेन्द्रियः, आस्तिकः, गुरुमन्त्रदेवेषु दृढभक्तिः, अनिन्दकः, निष्कामः, वर्णाश्रमोक्तनित्यकर्मनिरतः, अदाम्भिकः, षड्दोषरहितः, शान्तः, क्षान्तः, शुचिः, सेवापरायणः, अनलसः, आदि ।

तन्त्रानुसारेण श्रीविद्यायां वर्णविवक्षा नास्ति । यद्यपि पुरातनप्रक्रियायां द्विजा एवात्रोपात्तास्तथापि तन्त्रं वक्ति सर्वेषां कृते । योगिनीतन्त्रे—

**ब्रह्मक्षत्रविशः शूद्रा अर्चायां शुद्धबुद्धयः ।**
**गुरुदेवद्विजार्चासु रताः स्युरधिकारिणः ॥**

श्रीविद्यार्णवतन्त्रेऽपि—

**त्रिपुराद्याश्च ये मन्त्रा ये मन्त्रा वटुकादयः ।**
**सर्ववर्णेषु दातव्याः पुरन्ध्रीणां विशेषतः ॥**

नार्योऽप्यत्राधिकारिण्यः । एवं मन्त्रजपविधौ मालाऽतीवोपयोगिनी । अतो मालाविचार आवश्यकः । माला च बहुविधा भवति, तत्र वर्णमाला, करमाला, चरमाला इति । वर्णमाला सर्वश्रेष्ठा, इयमेवाक्षरमाला-मातृकामाला-रहस्यमाला-स्थिरमाला-संज्ञाभिरप्याख्यायते । द्वितीया करमाला तु अङ्गुलीनां पर्वभिर्भवति । तृतीया चरमाला, एषा मणिमालेति कथ्यते । इयं विविधाभिर्गुटिकाभिर्निर्मीयते । तत्र रुद्राक्षमाला चोत्तमा । कार्यविशेषे शङ्खस्फटिकपद्माक्षपुत्रजीवविद्रुममुक्तामालानां प्राशस्त्यम् । स्थानासनपुष्पौषधिफलादीनामपि विवेक उपासनायामावश्यकः ।

## षोडशीमाहात्म्यम्

चामुण्डातन्त्रे—

**काली तारा महाविद्या षोडशी भुवनेश्वरी ।**
**भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥**

बगला सिद्धविद्या च मातङ्गी कमलात्मिका ।
एता दश महाविद्याः सिद्धविद्याः प्रकीर्तिताः ॥

## महाविद्यामाहात्म्यम्

कुब्जिकातन्त्रे प्रथमपटले—

कलौ कृष्णत्वमासाद्य शुक्लापि नीलरूपिणी ।
लीलया वाक्प्रदा चेति तेन नीलसरस्वती ॥
तारकत्वात् सदा तारा तारिणी च प्रकीर्तिता ।
भुवनानां पालकत्वाच्च भुवनेशी प्रकीर्तिता ॥
सृष्टिस्थितिकरी देवी भुवनेशी प्रकीर्तिता ।
श्रीदात्री च सदा विद्या श्रीविद्या परिकीर्तिता ॥
निर्गुणा च महादेवी षोडशी परिकीर्तिता ॥ (इत्यादि)

## महाविद्याया भैरवनिरूपणम्

तोडलतन्त्रे प्रथमपटले केवलं षोडश्या एवोच्यते भैरवः—

महात्रिपुरसुन्दर्याः दक्षिणे पूजयेत् शिवम् ।
पञ्चवक्त्रं त्रिनेत्रं च प्रतिवक्त्रे सुरेश्वरि ॥
तेन सार्धं महादेवि सदा कामकुतूहला ।
अत एव महेशानि पञ्चमीति प्रकीर्तिता ॥

उपरितननिर्देशेन ज्ञायते यद् दशविद्यासु तृतीया षोडशी या विद्या सैव श्रीविद्या त्रिपुरसुन्दरी वा निगद्यते । अस्या विद्याया भैरवः पञ्च-वक्त्रः शिवः ।

षोडश्या माहात्म्यं नारदपञ्चरात्रे तृतीयरात्रे पञ्चमाध्याये—
ब्रह्मोवाच—

भूयः शृणु मुनिश्रेष्ठ ! रहस्यं परमाद्भुतम् ।
येन काली महामाया सुन्दरीत्वमुपागता ॥

कैलासशिखरे रम्ये वसमाने च शङ्करे ।
इन्द्रश्च प्रेषयामास सर्वाश्चाप्सरसो मुदा ।।

आगतास्ते महादेवं तुष्टुवुस्तं महेश्वरम् ।
इत्येवं वचनं श्रुत्वा तासां स वृषभध्वजः ।
आभाष्य श्लक्ष्णया वाचा करुणामृतया ततः ।।

ईश्वर उवाच—

पुरुषस्यातिथिर्ज्ञेयः पुरुषो नात्र संशयः ।
स्त्रीणां स्त्री चातिथिर्ज्ञेया तस्माद् गच्छत कालिकाम् ।।

इत्युक्त्वा तत्पुरं रम्यं विवेश परमेश्वरः ।
उवाच कालीं भगवानीश्वरीं परमेश्वरीम् ।।
ता अप्यावापुः परमां प्रीतिं परमदुर्लभाम् ।

षष्ठाध्याये—

ततो देवी महाकाली चिन्तयित्वा मुहुर्मुहुः ।
एतद् रूपमपहाय शुद्धगौरी भवाम्यहम् ।।

यस्मात् कालीति कालीति महादेवः समाह्वयेत् ।
इति सञ्चिन्त्य मनसा अन्तर्धानं गता परा ।।

महादेवोऽपि कालेन गतो ह्यन्तःपुरं शिवः ।
नापश्यच्च तदा कालीं तस्थौ तस्मिन् पुरे ततः ।।

अथ काले कदाचित्तु आगतस्तत्र नारदः ।
प्रणम्य शिरसा देवं महादेवं महेश्वरम् ।।

कृताञ्जलिपुटस्तस्थौ ततो देवाग्रतो मुनिः ।
महादेवोऽपि वामेन पाणिना मुनिसत्तमम् ।।

उपस्पृश्य समाश्वास्य चक्रे पुण्यवतीं कथाम् ।
कालेन कियता तत्र कथान्ते मुनिसत्तमः ।।
उवाच सादरं वाक्यं प्रणम्य जगदीश्वरम् ।

नारद उवाच—

क्व गता त्वां परित्यज्य काली कालविनाशिनी ।।
इत्युवाच महादेवस्तं मुनिं नारदं ततः ।
अन्तर्धानं गता देवी मां हित्वा मुनिसत्तम ।।

ब्रह्मोवाच—

इति श्रुत्वा वचस्तस्य नारदो हर्षमागतः ।
विवादसमयश्चायं महाकाल्याश्च शूलिनः ।।
इति संचिन्त्य मनसा ध्यानमाश्रित्य नारदः ।
ददर्श तां महाकालीं ध्यानचक्षुःसमाश्रितः ।।
सुमेरोरुत्तरे पार्श्वे स्थिता सा परमेश्वरी ।
प्रणम्य परया भक्त्या उपतस्थे जगन्मयीम् ।।

नारदस्तुत्यनन्तरं देव्युवाच—

विदूरेण मदीयेन किं करोति महेश्वरः ।
तस्यैव कुशलं सर्वं कथयस्व मुनीश्वर ।।

नारद उवाच—

उद्योगं परमं चक्रे विवाहार्थं महेश्वरः ।
देवदेवो गिरिसुते तं निवारय सुव्रते ।।

ब्रह्मोवाच—

इति श्रुत्वा वचस्तस्य सक्रोधा परमेश्वरी ।
जाज्वल्यमाना रक्ताक्षी रूपमन्यद् दधौ परा ।।

यन्नास्ति त्रिषु लोकेषु सौन्दर्यमपि कुत्रचित् ।
दधौ तद्रूपमतुलं सर्वेषामधिकं परम् ।
यत्रास्ते भगवान् देवो देवदेवो महेश्वरः ॥

समागता क्षणेनैव ततः सा परमेश्वरी ।
ददर्श हृदये शम्भोः स्वच्छायां परमेश्वरी ॥

उवाच सा महादेवं क्रोधेन महतावृता ।
कृतघ्नस्त्वं महादेव मया यः समयः कृतः ॥

तं त्वं लंघितवान् देव किमर्थं परमेश्वर ।
कृत्वा विवाहं हृदये स्थानं दत्तं मया शिव ॥

एतच्छ्रुत्वा वचस्तस्याः प्रहस्य परमेश्वरः ।
उवाच स प्रियां साध्वीं प्रेमगद्गदया गिरा ॥

ईश्वर उवाच—

नाहं कृतघ्नः कल्याणि नाहं समयलङ्घकः ।
हृदये मे त्वया दृष्टा स्वच्छाया नात्र संशयः ॥

ध्यानं कुरु महाभागे पश्य त्वं ज्ञानचक्षुषा ।
स्वच्छाया सैव देवेशि ततः सुस्था भवेत् परा ॥

उवाच परमेशानं देवदेवं महेश्वरम् ।
परेण प्रेमभावेन जगदीशं जगन्मयम् ॥
का छाया हृदि दृष्टा सा तन्मे ब्रूहि जगत्पते ॥

ब्रह्मोवाच—

इति श्रुत्वा महादेवः कालिकावचनं परम् ।
उवाच प्रेमभावेन देवदेवः सनातनः ॥

ईश्वर उवाच—

यस्मात् त्रिभुवने रूपं श्रेष्ठं कृतवती शिवे ।
तस्मात् स्वर्गे च मर्त्ये च पातालेऽन्यत्र पार्वति ॥

सुन्दरी पञ्चमी श्रीश्च ख्याता त्रिपुरसुन्दरी ।
सदा षोडशवर्षीया विख्याता षोडशी ततः ॥

यां छायां हृदये मेऽद्य दृष्टा भीता सुरेश्वरि ।
यस्मात् सा त्रिषु लोकेषु ख्याता त्रिपुरभैरवी ॥

याऽवस्था भगवत्याश्च सुस्थचित्ता कृपामयी ।
ततस्तां भुवनेशानीं राजराजेश्वरीं विदुः ॥

या चोग्रतारिणी प्रोक्ता या च दिक्करवासिनी ॥
सैषा ललितकान्ताख्या ख्याता मङ्गलचण्डिका ॥

कौशिकी देवदूती च याश्चान्या मूर्तयः स्मृताः ।
या ख्याता भुवनेशानी तस्या भेदा अनेकधा ॥

त्रिपुरा जयदुर्गा च वनदुर्गा त्रिकण्टकी ।
कात्यायनी महिषघ्नी दुर्गा च वनदेवता ॥

श्रीरामदेवता वज्रप्रस्तारिणी च शूलिनी ।
गृहदेवी गृहारूढा मेधा रोधा च कालिका ॥

कथिताश्च समासेन तासां भेदाश्च नारद ।
विस्तारेण तु केनैव शक्यते गदितुं मुने ॥

इति षोडशीमाहात्म्यं तद्भेदाश्च ।

अनयैव शक्त्या युक्ताः सर्वे देवाः स्वे स्वे कर्मणि प्रवृत्ताः, तदुक्तं देवी-भागवते—

न विष्णुर्न हरः शक्रो न ब्रह्मा न च पावकः ।
न सूर्यो वरुणः शक्तः स्वे स्वे कार्ये कथञ्चन ॥

तया युक्ता हि कुर्वन्ति स्वानि कार्याणि ते सुराः ।
कारणं सैव कार्येषु प्रत्यक्षेणावगम्यते ॥ इति ॥

श्रीविद्याया लीलाविग्रहेषु कुमारी, त्रिरूपा, गौरी, रमा, भारती, काली, चण्डिका, कात्यायनी, दुर्गा, ललिता इति मुख्यरूपेण परिगणितास्त्रिपुरारहस्ये ब्रह्माण्डोत्तरखण्डे ।

श्रीषोडशी-मातृका

कामेशी भगमाला च नित्या विलन्ना ततः परम् ।
भेरुण्डावह्निवासिन्यौ वज्रेशी तदनन्तरम् ॥ १ ॥
शिवदूती च त्वरिता ततश्च कुलसुन्दरी ।
नित्या नीलपताका च विजया सर्वमङ्गला ॥ २ ॥
ज्वालामालिनी चित्रा च महात्रिपुरसुन्दरी ।
षोडशीमातृकायाश्च सम्प्रोक्ताः स्वरशक्तयः ॥ ३ ॥
ग्रसिनीप्रियवादिन्यौ कराली च कपालिनी ।
शिवा घोषा च दंष्ट्रा च वीरोमा वाक्प्रदा तथा ॥ ४ ॥
नारायणी मोहिनी च प्रज्ञा च शिखिवाहिनी ।
भीषणा वायुवेगा च भीमा चैव विनायिका ॥ ५ ॥
पूर्णाशक्तिश्च कंकाली कुर्दिनी कालिका तथा ।
दीपनी च जयन्ती च पावनी लम्बिनी तथा ॥ ६ ॥
संहारिणी छागली च पूतना मोदिका तथा ।
परशक्तिस्तथाम्बा च इच्छाशक्तिस्ततः परम् ॥
महाकाली च सम्प्रोक्ता व्यञ्जनानां च शक्तयः ॥ ७ ॥

अस्याः साहित्यं विपुलं तत्र कतिपयस्तोत्राणां नामानि सूच्यन्ते जिज्ञासानिवृत्तय आगमतत्त्वविलासे पञ्चमपरिच्छेदे—१४४२ पृष्ठतः।

सिद्धयामलतः कुलानन्दसंहितातश्च महात्रिपुरसुन्दरीकवचे संगृहीते स्तः। षोडश्याः (श्रीविद्यायाः) बहूनि स्तोत्राणि सन्ति—षोडशीकल्याणीस्तोत्रं सिद्धयामले। षोडशीविद्याकवचं त्रिपुरसुन्दरीतन्त्रे। षोडशीहृदयम्, षोडश्युपनिषत्, षोडश्या अष्टोत्तरशतनामस्तोत्रं ब्रह्मयामले। वामकेश्वरतन्त्रे षोडश्याः सहस्रनामस्तोत्रम्, ललितासहस्रनाम, यत्र भास्कररायकृता बृहती-व्याख्या, त्रिशती, यत्र शङ्कराचार्यस्य भाष्यम्, खड्गमालास्तोत्रम्, त्रिपुरमहिमस्तोत्रम्, सौन्दर्यलहरी। अपि च-श्रीबालानित्यार्चनम्, श्रीबालास्तवमञ्जरी, श्रीविद्यानित्यार्चनम्, श्रीविद्यास्तवमञ्जरी, श्रीकल्पद्रुमः, श्रीचक्ररहस्यम्, इत्यादिग्रन्था अपि साधकैर्द्रष्टव्याः। एषु वाऽपरेषु स्तोत्रेषु ललितासहस्रनामस्तोत्रस्य, त्रिशत्याः, त्रिपुरामहिम्नश्च माहात्म्यं विशेषेण वर्तते।

## श्रीचक्रम्

श्रीविद्योपासनायां श्रीयन्त्रस्य प्रमुखस्थानम्, विनैतत्तत्र साफल्यं सुदुर्लभम्।

यद्यप्यत्र यन्त्रलेखनस्य नापि तद्विधानस्यावश्यकता न प्रतिभाति, सम्प्रति बहुषु पुस्तकेषु पत्रिकासु च बहुशो मुद्रितोपलभ्यमानत्वात् प्रस्तरस्फटिकरजतादिधातुषु उट्टङ्कितोपदृश्यमानत्वाच्च, तथापि प्रसङ्गवशात् किञ्चिल्लिख्यते। श्रीयन्त्रस्वरूपं यामले यथा—

**बिन्दुत्रिकोणवसुकोणदशारयुग्मं**
**मन्वस्रनागदलसंयुतषोडशारम्।**
**वृत्तत्रयं च धरणीसदनत्रयं च**
**श्रीचक्रराजमुदितं परदेवतायाः॥**

मन्त्रमहोदधौ—

बिन्दुगर्भं त्रिकोणं तु कृत्वा चाष्टारमुद्धरेत् ।
दशारद्वयमन्वस्राष्टारषोडशकोणकम् ॥
त्रिरेखात्मकभूगेहवेष्टितं यन्त्रमालिखेत् ।
चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ॥ (११।५३-५४)

चक्रस्वरूपमग्रे दास्यते । अस्मिन् यन्त्रे केशरा न कर्तव्याः—

योऽस्मिन् यन्त्रे महेशानि केशराणि प्रकल्पयेत् ।
योगिनीसहितास्तस्य हिंसां कुर्वन्ति भैरवाः ॥

अस्य यन्त्रस्य पूजने यत्फलं तत्तु वर्णनातीतम् । तद्दर्शने फलमेतत्—

सम्यक् शतक्रतून् कृत्वा यत्फलं समवाप्नुयात् ।
तत्फलं लभते भक्त्या कृत्वा श्रीचक्रदर्शनम् ॥
महाषोडशदानानि कृत्वा यल्लभते फलम् ।
तत्फलं समवाप्नोति कृत्वा श्रीचक्रदर्शनम् ॥
सार्धत्रिकोटितीर्थेषु स्नात्वा यत्फलमश्नुते ।
लभते तत्फलं भक्त्या कृत्वा श्रीचक्रदर्शनम् ॥

पूजने—

कोटिलिङ्गप्रतिष्ठायां यत्फलं समुदाहृतम् ।
तत्फलं लभते नूनं श्रीचक्रस्य च पूजनात् ॥

दाने—

श्रीचक्रं कारयित्वा तु यो दद्यात् साधकाय च ।
भूचक्रं तेन दत्तं हि सशैलवनसागरम् ॥

अस्य पादोदकस्य माहात्म्यमेतत्—

**गङ्गापुष्करनर्मदासयमुनागोदावरीगोमती-**
**गङ्गाद्वारगयाप्रयागबदरीवाराणसीसिन्धुषु ।**
**रेवासेतुसरस्वतीप्रभृतिषु ब्रह्माण्डभाण्डोदरे**
**तीर्थस्नानसहस्रकोटिगुणितं श्रीचक्रपादोदकम् ॥**

श्रीयन्त्रोद्धारप्रकारस्तु सविस्तरं पुरश्चर्यार्णवस्यैकादशतरङ्गे ११५३ पृष्ठे द्रष्टव्यम् ।

**श्रीयन्त्रपूजाप्रकारः—**

प्रथमं पात्रं संस्थाप्य नासिकास्वरानुसारं हस्तेनयन्त्रमालिख्य यन्त्रमध्ये 'ऐं क्लीं सौः' इति बालामन्त्रेण संपूज्यास्य प्रत्येकबीजेन त्रिकोणं पूजयेत् । अनन्तरमस्य मन्त्रस्य अनुलोमविलोमक्रमेण प्रत्येक बीजेन षट्कोणं पूजयेत् । ततः 'अस्त्राय फट्' इति मन्त्रेण प्रक्षालितं पात्राधारं यन्त्रोपरि विन्यस्य 'ओं रां रीं रुं म्ल्व्यूं रं अग्निमण्डलाय धर्मप्रददशकलात्मने ऐं कलशाधाराय नमः' इत्येकत्रिंशदक्षरात्मकमन्त्रेण आधारपात्रं पूजयेत् । अनन्तरमाधारपात्रस्योपरि प्रदक्षिणक्रमेणाग्नेर्दशसंख्याक-कलानां (धूम्रार्चिः, ऊष्मा, ज्वलिनी, ज्वालिनी, विस्फुलिङ्गिनी, सुश्रीः, कपिला, सुरूपा, हव्यवहा, कव्यवहा-नामधेयानां) क्रमशः 'यं धूम्रार्चिषे नमः, धूम्रार्चिःकलाश्रीपादुकां पूजयामि नमः, रं ऊष्मायै नमः,उष्माकलाश्रीपादुकां पूजयामि नमः, लं ज्वलिन्यै नमः, ज्वलिनीकलाश्रीपादुकां पूजयामि नमः, वं ज्वालिन्यै नमः,ज्वालिनीकलाश्रीपादुकां पूजयामि नमः,शं विस्फुलिङ्गिन्यै नमः, विस्फुलिङ्गिनीकलाश्रीपादुकां पूजयामि नमः, षं सुश्रियै नमः, सुश्रीः-कलाश्रीपादुकां पूजयामि नमः, सं सुरूपायै नमः, सुरूपाकलाश्रीपादुकां पूज्यामि नमः, हं कपिलायै नमः, कपिलाकलाश्रीपादुकां पूजयामि नमः, लं हव्यवाहायै नमः,हव्यवहाकलाश्रीपादुकां पूजयामि नमः, क्षं कव्यवाहायै नमः कव्यवहाकलाश्रीपादुकां पूजयामि नमः, इति मन्त्रैः पूजां कुर्यात् ।

अनन्तरं पात्राधारे कलानां प्राणप्रतिष्ठा कार्या । ततः 'अस्त्राय फट्' इति मन्त्रेण प्रक्षालितं स्वर्णादिनिर्मितं कलशं संस्थाप्य 'ओं ह्रां ह्रीं ह्रूं ह्म्ल्व्यूं हं सूर्यमण्डलाय वसुप्रदद्वादशकलात्मने क्लीं कलशाय नमः' इति मन्त्रेण

कलशस्य पूजा कार्या, अनन्तरं कलशोपरि सूर्यस्य द्वादशकलानाम्—तपिनी, तापिनी, धूम्रा, मरीचिः, ज्वालिनी, रुचिः, सुषुम्णा, भोगदा, विश्वा, बोधिनी, धारिणी, क्षमा इत्यासां क्रमशः—कं भं तपिन्यै नमः तपिनीकलाश्रीपादुकां पूजयामि नमः, खं बं तापिन्यै नमः तापिनीकलाश्रीपादुकां पूजयामि नमः, गं फं धूम्रायै नमः धूम्राकलाश्रीपादुकां पूजयामि नमः, घं पं मरीच्यै नमः, मरीचिकलाश्रीपादुकां पूजयामि नमः, ङं नं ज्वालिन्यै नमः ज्वालिनीकलाश्रीपादुकां पूजयामि नमः, चं धं रुच्यै नमः रुचिकलाश्रीपादुकां पूजयामि नमः, छं दं सुषुम्णायै नमः सुषुम्णाकलाश्रीपादुकां पूजयामि नमः, जं थं भोगदायै नमः भोगदाकलाश्रीपादुकां पूजयामि नमः, झं तं विश्वायै नमः विश्वाकलाश्रीपादुकां पूजयामि नमः, ञं णं बोधिन्यै नमः बोधिनीकलाश्रीपादुकां पूजयामि नमः, टं ढं धारिण्यै नमः धारिणीकलाश्रीपादुकां पूजयामि नमः, ठं डं क्षमायै नमः, क्षमाकलाश्रीपादुकां पूजयामि नमः, इत्येभिर्मन्त्रैः पूजनं कार्यम् ।

अनन्तरं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं, इति मातृकावर्णैस्तथा मूलमन्त्रेण कलशं जलेन प्रपूर्य 'ओं सां सीं सूं स्म्लव्यूँ सं सोममण्डलाय कामप्रदषोडशकलात्मने सौः कलशामृताय नमः' इति मन्त्रेण कलशोदकं समर्च्य पुनः कलशोदके चन्द्रमसः षोडशकलानां (अमृता, मानदा, पूषा, तुष्टिः, पुष्टिः, रतिः, धृतिः, शशिनी, चन्द्रिका, कान्तिः, ज्योत्स्ना, श्रीः, प्रीतिः, अङ्गदा, पूर्णा, पूर्णामृता आसां) अं अमृतायै नमः अमृताकलाश्रीपादुकां पूजयामि नमः, आं मानदायै नमः मानदाकलाश्रीपादुकां पूजयामि नमः, इं पूषायै नमः पूषाकलाश्रीपादुकां पूजयामि नमः, ईं तुष्ट्यै नमः तुष्टिकलाश्रीपादुकां पूजयामि नमः, उं पुष्ट्यै नमः पुष्टिकलाश्रीपादुकां पूजयामि नमः, ऊं रत्यै नमः रतिकलाश्रीपादुकां पूजयामि नमः, ऋं धृत्यै नमः धृतिकलाश्रीपादुकां पूजयामि नमः, ॠं शशिन्यै नमः शशिनीकलाश्रीपादुकां पूजयामि नमः, लृं चन्द्रिकायै नमः चन्द्रिकाकलाश्रीपादुकां पूजयामि नमः, लॄं कान्त्यै नमः कान्तिकलाश्रीपादुकां पूजयामि नमः, एं ज्योत्स्नायै नमः ज्योत्स्नाकलाश्रीपादुकां पूजयामि नमः, ऐं श्रियै नमः श्रीकलाश्रीपादुकां पूजयामि

नमः, ओं प्रीत्यै नमः प्रीतिकलाश्रीपादुकां पूजयामि नमः, औं अंगदायै नमः अंगदाकलाश्रीपादुकां पूजयामि नमः, अं पूर्णायै नमः पूर्णाकलाश्रीपादुकां पूजयामि नमः, अः पूर्णामृतायै नमः पूर्णामृताकलाश्रीपादुकां पूजयामि नमः, इत्येभिर्मन्त्रैः पूजनं कार्यम्। तत्पश्चात् तज्जले 'ह्स्क्ष्म्ल्व्लूँ आनन्दभैरवाय वौषट्' इति मन्त्रेण भैरवस्य 'स्ह्क्ष्म्ल्व्लूँ सुधादेव्यै वौषट्' इति मन्त्रेण सुधादेव्या अर्चना करणीया। तदनन्तरं मत्स्य-अस्त्र-कवच-धेनुमुद्राः प्रदर्श्य संरोधिनीमुद्रया संरोधनं कृत्वा मुसल-चक्र-महामुद्रा-योनिमुद्राणां प्रदर्शनं कार्यम्।

एवं कलशं संस्थाप्य तद्दक्षिणपार्श्वे शंखस्य विशेषार्घ्यस्य च पूर्वोक्तरीत्या स्थापनं कार्यम्। विशेषस्त्वत्रेयानेव यत् पूर्वोक्तमन्त्रेषु कलशपदस्थाने शंखपदस्य विशेषार्घ्यपदस्य च प्रयोगः कार्यः।

अनन्तरमर्घ्यपात्रे अकारादिषोडशस्वराक्षरैः ककारादिषोडशाक्षरैः थकारादिषोडशाक्षरैर्निर्मिताभिस्तिसृभी रेखाभिर्विरचितं त्रिकोणं हक्ष-वर्णविलसितमध्यं च ध्यात्वा तन्मध्ये 'ओं ह्रीं हं सः सौः हं स्वाहा' इति मन्त्रेण बालां पूजयेत्, तदुपरि त्रिवारं मूलमन्त्रजपं विधाय पूर्वोक्ता मत्स्यादिदशमुद्राः प्रदर्शयेत्।

एवं पात्राणां विधिवत् स्थापनं विधायार्घ्यपात्राज्जलमानीय तेन मूलमन्त्रजपपूर्वकं पूजासामग्रीं सिञ्चेत्। ततो बालार्कायुततेजसं त्रिनयनां रक्ताम्बरोल्लासिनीमित्यादिश्लोकवर्णितं देवीस्वरूपं ध्यात्वा निम्नलिखित-मन्त्रैर्देव्या मानसीं पूजां कुर्यात्।

ओं लं पृथिव्यात्मकं महादेव्यै गन्धं विलेपयामि नमः—अंगुष्ठकनिष्ठाभ्यां नमः। ओं हं आकाशात्मकं महादेव्यै पुष्पाणि समर्पयामि नमः—अंगुष्ठानामिकाभ्यां नमः। ओं यं वाय्वात्मकं महादेव्यै धूपम् आघ्रापयामि नमः—अंगुष्ठमध्यमाभ्यां नमः। ओं रं वह्न्यात्मकं महादेव्यै दीपं दर्शयामि नमः—अंगुष्ठतर्जनीभ्यां नमः। ओं वं अमृतात्मकं महादेव्यै नैवेद्यं निवेदयामि नमः—अंगुष्ठानामिकाभ्यां नमः। ततः **पीठपूजा**—

पूर्वोक्तप्रकारेण पात्रासादनं विधाय देवीं ध्यात्वा मानसोपचारैः संपूज्य यन्त्रराजस्य कर्णिकासु क्रमशः ओं मण्डूकाय नमः, ओं कालाग्नि-

रुद्राय नमः, ओं मूलप्रकृत्यै नमः, ओं आधारशक्तये नमः, ओं कूर्माय नमः, ओं शेषाय नमः, ओं वाराहाय नमः, ओं पृथिव्यै नमः, ओं सुधाम्बुधये नमः, ओं रत्नद्वीपाय नमः, ओ मेरवे नमः, ओं नन्दनवनाय नमः, ओं कल्पवृक्षाय नमः, एतैर्मन्त्रैर्मण्डूकं कालाग्निरुद्रं मूलप्रकृतिम् आधारशक्ति कूर्मं शेषं वाराहं पृथिवीं सुधाम्बुधिं रत्नद्वीपं मेरुं नन्दनवनं कल्पवृक्षञ्च पूजयेत् ।

कर्णिकामूले—ओं 'विचित्रानन्दभूम्यै नमः' इति मन्त्रेण विचित्रानन्दभूमिमर्चयेत् ।

कर्णिकोपरि—ओं श्रीरत्नमन्दिराय नमः, ओं रत्नवेदिकायै नमः, ओं धर्मवारणाय नमः, ओं रत्नसिंहासनाय नमः, इत्यनेन पूजयेत् ।

चतसृषु दिक्षु—ओं धर्माय नमः, ओं ज्ञानाय नमः, ओं वैराग्याय नमः, ओं ऐश्वर्याय नमः, ओं अधर्माय नमः, ओं अज्ञानाय नमः, ओं अवैराग्याय नमः, ओं अनैश्वर्याय नमः, एभिर्मन्त्रैः क्रमशो धर्मं ज्ञानं वैराग्यम् अधर्मम् अज्ञानम् अवैराग्यम् अनैश्वर्यं च पूजयेत् ।

पुनर्मध्ये–ओं आनन्दकन्दाय नमः, ओं संविन्नालाय नमः, ओं सर्वतत्त्वात्मकपद्माय नमः, ओं प्रकृतिमयपत्रेभ्यो नमः, ओं विकारमयकेसरेभ्यो नमः, ओं पञ्चाशद्बीजाढ्यकर्णिकायै नमः, ओं अं द्वादशकलात्मने सूर्यमण्डलाय नमः, ओं उं षोडशकलात्मने सोममण्डलाय नमः, ओं मं दशकलात्मने वह्निमण्डलाय नमः, ओं सं सत्त्वाय नमः, ओं रं रजसे नमः, ओं तं तमसे नमः, ओं अं आत्मने नमः, ओं उं अन्तरात्मने नमः, ओं मं परमात्मने नमः, ओं ह्रीं ज्ञानात्मने नमः, एभिर्मन्त्रैः पूजयेत् ।

तत्रैव—ओं मां मायातत्त्वाय नमः, ओं कं कलातत्त्वाय नमः, ओं विं विद्यातत्त्वाय नमः, ओं पं परतत्त्वाय नमः, एभिः समर्चयेत् ।

पुनस्तत्रैव—ओं वं ब्रह्मप्रेताय नमः, ओं विं विष्णुप्रेताय नमः, ओं हं रुद्रप्रेताय नमः, ओं ईं ईश्वरप्रेताय नमः, ओं सं सदाशिवप्रेताय नमः, एभिः पूजयेत् ।

पुनस्तत्रैव—ओं सुधावासनाय नमः, ओं प्रेताम्बुजासनाय नमः,

ओं दिव्यासनाय नमः, ओं चक्रासनाय नमः, ओं सर्वमन्त्रासनाय नमः, ओं साध्यसिद्धासनाय नमः, एभिः पूजयेत् ।

एवं चक्रराजं पूजयित्वा पूर्वादिदिक्षु मध्ये नवशक्तीः पूजयेत्—ओं इं इच्छायै नमः, ओं ज्ञां ज्ञानायै नमः, ओं क्रिं क्रियायै नमः, ओं कां कामिन्यै नमः, ओं कां कामदायिन्यै नमः, ओं रं रत्यै नमः, ओं रं रतिप्रियायै नमः, ओं नं नन्दायै नमः, मध्ये ओं मं मनोन्मन्यै नमः ।

एवं शक्तीः प्रपूज्यानन्तरं चक्रनायकं समर्चयेदनेन मन्त्रेण 'ऐं परायै अपरायै परापरायै ह्सौः सदाशिवमहाप्रेतपद्मासनाय नमः । इति ।

## श्रीविद्यापूजनम्

एवं पीठपूजां समाप्य 'ह्रीं श्रीं प्रकटगुप्तगुप्ततरसम्प्रदायकुलनिगर्भ-रहस्यातिरहस्यपरापररहस्यसंज्ञकश्रीचक्रगतयोगिनीपादुकाभ्यो नमः' इति मन्त्रेण पुष्पाञ्जलिं प्रदाय त्रिखण्डां मुद्रां बध्वा पुनः सपुष्पाञ्जलिर्देवीं ध्यायेत्—

**बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ।**
**पाशांकुशशरांश्चापं धारयन्तीं शिवां भजे ॥** इति ।

इत्थं ध्यात्वा दूर्वाक्षतरक्तचन्दनमिश्रिते लोहितवर्णे हस्तस्थपुष्पचये मातृकामन्त्रं भावयेत्, पुनश्च षट्चक्रभेदनपुरःसरं चैतन्यमयीं देवीं शिरः-स्थसहस्रदलकमलकर्णिकामध्यवर्तिनि शिवे संयोज्य सहस्रारस्थसुधासागरे विश्रामाय स्थापयेत् । अनन्तरम् अमृतलोलुपां चैतन्यमयीं देवीं प्रवहणशील-नासापुटद्वारा पूर्वकल्पिते पुष्पाञ्जलौ समादाय श्रीचक्रराजे आवाहयेत् स्थापयेच्च । तन्मन्त्रः —

**ओं चैतन्यं हृत्कमलतो नासिकारन्ध्रनिर्गतम् ।**
**ब्रह्मरन्ध्रस्य मार्गेण योजितं कुसुमाञ्जलौ ॥**

**महापद्मवनान्तस्थे कारणानन्दविग्रहे ।**
**सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥**

अनेन मन्त्रेण पुष्पाञ्जलौ देवीमावाह्य श्रीचक्रे पुष्पाञ्जलिं समर्प्य देवीं प्रार्थयेत्—

**ओं देवेशि भक्तिसुलभे सर्वावरणसंयुते ।**
**यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥**

पुनः 'ह्स्रैं ह्स्क्लरीं ह्स्रौः श्रीमत्त्रिपुरसुन्दरिचक्रेऽस्मिन् कुरु सान्निध्यं नमः' इति मन्त्रेण स्थापनीमुद्रया स्थापयेत् । ततो मूलमन्त्रमुच्चार्य—

**'ओं सर्वान्तर्यामिनि देवि सर्वबीजमयं शुभम् ।**
**स्वात्मस्थाप्यपरं शुद्धमासनं कल्पयाम्यहम् ॥**

**आसनं गृहाण नमः'** इति मन्त्रेणासनं दद्यात् । ततो मूलमन्त्रमुच्चार्य—

**'ओम् अस्मिन् वरासने देवि सुखासीनाक्षरात्मके ।**
**प्रतिष्ठिता भवेशि त्वं प्रसीद परमेश्वरि ॥**

**उपविष्टा भव नमः'** मन्त्रेणानेन प्रदत्तदिव्यासने देवीमुपवेशयेत् । एवं मूलमन्त्रमुक्त्वा—

**'ओम् अनन्यं तव देवेशि यन्त्रं शक्तिरिदं वरे ।**
**सान्निध्यं कुरु तस्मिन् त्वं भक्तानुग्रहतत्परे ॥**

**भगवति त्रिपुरसुन्दरि इह सन्निधेहि'** इति मन्त्रेण सन्निधानमुद्रया सन्निधिकरणं कार्यम् । अपि च मूलमन्त्रमुच्चार्य—

**'ओम् आज्ञया तव देवेशि कृपाम्बोधे गुणाम्बुधे ।**
**आत्मानन्दैकतृप्तां त्वां निरुणध्मि पितर्गुरो ॥**

**श्रीमत्त्रिपुरसुन्दरि सन्निरुध्यस्व'** इति मन्त्रेण सन्निरोधमुद्रया च सन्निरोधनं कार्यम् । ततो मूलमन्त्रं पठित्वा—

**'ओम् अज्ञानाद् दुर्मनस्ताद्वा वैकल्यात् साधनस्य च ।**
**यदा पूर्णं भवेत् कृत्यं तदप्यभिमुखीभव ॥**

**श्रीमत्त्रिपुरसुन्दरि इह संमुखीभव'** इति मन्त्रेण संमुखीमुद्रया च सम्मुखीकरणं विधेयम् । पुनर्देव्या अङ्गेषु न्यासं विदध्यात् । तद्यथा—श्रीं ह्रीं क्लीं ऐं सौः हृदयाय नमः, ओं ह्रीं श्रीं शिरसे स्वाहा, क ए ई ल ह्रीं शिखायै वषट्, ह स क ह ल ह्रीं कवचाय हुम्, सकलह्रीं नेत्रत्रयाय वौषट्, सौः ऐं क्लीं ह्रीं श्रीं अस्त्राय फट्, इदमेव सकलीकरणमुच्यते । तदनन्तरं मूलमन्त्रं प्रपठ्य—

**'ओम् अव्यक्तवाङ्मनश्चक्षुः श्रोत्रप्रज्वलितद्युते ।**
**स्वतेजःपुञ्जकेनाशु वेष्टिता भव सर्वतः ॥**

**श्रीमत्त्रिपुरसुन्दरि हुम्'** इति मन्त्रेण अवगुण्ठनमुद्रया अवगुण्ठनं कार्यं तथा छोटिकामुद्रया दिग्बन्धनं विधेयम् ।

अनन्तरं धेनुमुद्रया अमृतीकरणं महामुद्रया परमीकरणं विधाय तदुत्तरं मूलमन्त्रेण त्रिवारं देवीं समर्च्य स्वागतं कार्यम् । यथा—

**यस्या दर्शनमिच्छन्ति देवाः स्वाभीष्टसिद्धये ।**
**तस्यै ते परमेशायै स्वागतं स्वागतं च ते ॥**
**कृतार्थोऽनुगृहीतोऽस्मि सकलं जीवितं मम ।**
**आगता देवि देवेशि सुस्वागतमिदं पुनः ॥**

जले श्यामाकविष्णुक्रान्ताकमलदूर्वाः प्रक्षिप्य मूलमुच्चार्य 'एतत् पाद्यं श्रीमत्त्रिपुरसुन्दर्यै नमः' मन्त्रेण पाद्यं देयम् ।

अर्घ्यपात्रे दूर्वातिलदर्भाग्रसिद्धार्थयवपुष्पगन्धाक्षतादीनि विन्यस्य मूलपूर्वकं 'इदमर्घ्यं श्रीमत्त्रिपुरसुन्दर्यै स्वाहा' मन्त्रेणार्घ्यं दद्यात् ।

आचमनीये जले लवङ्गजातिफलकंकोलान् प्रक्षिप्य मूलपूर्वकं 'इदमाचमनीयं स्वधा' मन्त्रेणाचमनं कारयेत् ।

स्नानीये जले चन्दनागुरुसुगन्धिद्रव्याणि प्रक्षिप्य मूलपूर्वकं 'स्नानीयं निवेदयामि' अनेन स्नापयेत्, पुनः पञ्चामृतैः शुद्धोदकेन गन्धोदकेन स्नाप्य अनन्तरं सर्वाङ्गस्नानं कारयेत् । तदनन्तरमभिषेकः कार्यः । पुनराचमनं प्रदाय वस्त्रोत्तरीये समर्पयेत् । पुनराचमनप्रदानानन्तरमलङ्कारान् आभूषणानि च दद्यात् ।

अथ मूलमुच्चार्य 'एष गन्धो नमः' मन्त्रेण गन्धमुद्रया गन्धं लेपयेत्। ततो नानापरिमलद्रव्याणि, सौभाग्यद्रव्याणि, मिष्ठान्नं लड्डुकं फलमक्षतं पुष्पाणि ताम्बूलं सर्वमुपादेयं निवेद्यान्ते त्रिवारं पुष्पाञ्जलिं प्रार्थनां समर्प्याज्ञां गृह्णीयात्।

इतः परं श्रीविद्यायाः परिवारपूजनम्। परिवारपूजने कामेश्वर्यादि-षोडशनित्यानां पूजनं विहितम्। अनेन पूजनेन मनोरथाधिकफलप्राप्तिर्भवति, तच्चेत्थम्—त्रिकोणे वामावर्तक्रमेण पञ्चपञ्चनित्यानां तथा मध्येबिन्दौ षोडश्याः पूजनं करणीयम्। तासां नामानि—कामेश्वरी, भगमालिनी, नित्यक्लिन्ना, भेरुण्डा, वह्निवासिनी, महाविद्येश्वरी, शिवदूती, त्वरिता, कुलसुन्दरी, नित्या, नीलपताकिनी, विजया, सर्वमङ्गला, ज्वालामालिनी, विचित्रा षोडशी। अनन्तरं गुरूणां दिव्यौघ-सिद्धौघ-मानवौघानां पूजनं कार्यम्। अनन्तरं बिन्दोश्चतुर्दिक्षु आम्नायदेवताः पूज्याः। मध्ये च ततः पूर्वादिक्रमेण पञ्चपञ्चिकानां पूजनं कार्यम्। पञ्चपञ्चिकास्तु लक्ष्मीसंज्ञकाः, कोशसंज्ञकाः, कल्पलतासंज्ञकाः, कामधेनुसंज्ञकाः, रत्नसंज्ञकाः। अनन्तरं षड्दर्शनानां पूजनं विधेयम्। तदनन्तरं तर्पणम्।

नित्यापूजाविधौ ध्यातव्यमिदं यत् सिते पक्षे कामेश्वरीमारभ्य विचित्रापर्यन्तं तथा कृष्णे विचित्रामारभ्य कामेश्वरीपर्यन्तं पञ्चपञ्चक्रमेण वामावर्तेन प्रत्येककोणेषु पूजनं कार्यम्।

तत आवरणपूजा—भूपुरमारभ्य बिन्दुपर्यन्तं प्रतिलोमक्रमेण नवानाम् आवरणानां पूजनं कार्यम्। आग्नेयादिदिक्क्रमेण षडङ्गपूजां निर्वर्त्य भूपुर-प्रथमरेखायां पूर्वादिदिक्षु अणिमादिदशसिद्धीनां तथा द्वितीयरेखायां पश्चिमादिक्रमेण ब्राह्म्याद्यष्टमातृकापूजनं तृतीयरेखायां क्षोभणादिदश-मुद्राणां पूजनं कार्यम्।

द्वितीयावरणे—पुनः षोडशदलेषु पश्चिमतो विलोमक्रमेण कामाकर्ष-णिकादिषोडशशक्तीनां पूजनम्। तृतीयावरणे–अष्टदलेषु पूर्वाद्यनुलोमक्रमेण अनङ्गकुसुमाद्यष्टयोगिनीनां पूजा कार्या। चतुर्थावरणे–पश्चिमतो विलोम-क्रमेण सर्वसंक्षोभिण्यादिचतुर्दशशक्तीनां पूजनम्। पञ्चमावरणे—तेनैव क्रमेण सर्वसिद्धिप्रदादिदशकुलयोगिनीनां पूजनं कार्यम्। षष्ठावरणे—

पूर्वोक्तक्रमेण सर्वज्ञादिदशनिगर्भयोगिनीनां पूजनं कार्यम् । सप्तमावरणे—अष्टदलेषु वशिन्यादिदेवीनां पूजनं पश्चिमतो विलोमक्रमेण कार्यम् । अष्टमावरणे—पश्चिमाद्यनुलोमक्रमेण कामेश्वरादिबाणादिपूजनम् । नवमावरणे बिन्दौ त्रिपुरसुन्दरीपूजनम् । तर्पणं त्रिवारं पुनश्च विधिवत् पूजनम् । अन्ते हवनं बलिदानञ्च ।

संक्षिप्तोऽयं चक्रपूजाविधिः । परिवारपूजनविधौ न हि सर्वेषां पूज्यानां देवानामत्र सर्वे मन्त्रा निगदितास्ते तु आकरग्रन्थेभ्यो मन्त्रमहोदधिप्रभृतिभ्योऽवगन्तव्याः, पूजाविधिप्रकारोऽपि तत एवावधेयः । इदमत्रावधेयं यद् आवाहनध्यानादिप्रकारे षट्चक्रभेदनादिनिर्देशो वर्तते, स तु योगगम्यः, ये पुरुषास्तादृशं कर्तुं न शक्नुवन्ति ते तदर्थं यतमानाः केवलं भावनयैव तावद् देवीमाराधयन्तु कालेनाभ्यासवशाद् योग्यताऽऽगमिष्यत्येव ।

एतदप्यत्रावगन्तव्यम्—त्रिपुरसुन्दर्या आराधनायां श्री-उमानन्दनाथनिर्मितनित्योत्सवग्रन्थस्य तृतीयोल्लासः साधकैरवश्यमेव द्रष्टव्यः । श्रीक्रमे षोढान्यासस्य विशेषमाहात्म्यं वर्तते । अयं च षोढान्यासो द्विविधो यथा—लघुषोढान्यासः (अत्र गणेशग्रहनक्षत्रयोगिनीराशिपीठन्यासा गृह्यन्ते) एवं षडवयवको न्यासो भवति । द्वितीयो महाषोढान्यासः (तत्र अङ्ग-भुवन-मूर्ति-मन्त्र-देवता-मातृकान्यासा गृह्यन्ते) अङ्गन्यासस्तु अङ्गुलीदेहवक्त्रात्मकः । एते सर्वे न्यासास्तु नित्योत्सवस्य परिशिष्टे विस्तरेणोल्लिखितास्ते तत एव ग्राह्याः ।

महाषोढान्यासस्य फलमेतत् प्रदर्शितं कुलार्णवे—

एवं न्यासे कृते देवि साक्षात् परशिवो भवेत् ।
मन्त्री न चात्र सन्देहो निग्रहानुग्रहक्षमः ॥
महाषोढाह्वयं न्यासं यः करोति दिने दिने ।
देवाः सर्वे नमस्यन्ति तं नमामि न संशयः ॥
महाषोढाह्वयं न्यासं यत्र मन्त्री न्यसेत्ततः ।
दिव्यक्षेत्रं समुद्दिष्टं समन्ताद् दशयोजनम् ॥

कृत्वा न्यासमिमं देवि यत्र गच्छति मानवः ।
तत्र श्रीर्विजयो लाभः स मान्यः पुरुषः प्रिये ॥

महाषोढाकृतन्यासः त्वदीक्षायाभिवन्दिते ।
स मासान्मृत्युमाप्नोति यदि त्राता शिवः स्वयम् ॥

वज्रपञ्जरनामानमेवं न्यासं करोति यः ।
दिव्यान्तरिक्षभूशैलजलारण्यनिवासिनः ॥

उद्दण्डभूतवेतालदेवरक्षोग्रहादयः ।
भयग्रस्तेन मनसा नेक्षन्ते साधकं प्रिये ॥

महाषोढाह्वयं न्यासं ब्रह्मविष्णुशिवादयः ।
देवाः सर्वे प्रकुर्वन्ति ऋषयश्च मुनीश्वराः ॥

बहुनोक्तेन किं देवि सुशिष्याय प्रकाशयेत् ।
अक्षयां लभते सिद्धिं रहसि न्यासमाचरेत् ॥

अस्मात् परतरः साक्षाद् देवताभावसिद्धिदः ।
लोके नास्ति न सन्देहः सत्यं सत्यं न संशयः ॥

ऊर्ध्वाम्नायप्रवेशश्च पराप्रासादचिन्तनम् ।
महाषोढापरिज्ञानं नाल्पस्य तपसः फलम् ॥

एवमेव श्रीचक्रन्यासोऽपि नित्योत्सवस्य श्रीक्रमोल्लासाद् अवगन्तव्यः । तत्र श्रीचक्रन्यासः, त्रैलोक्यमोहनचक्रन्यासः, सर्वाशापरिपूरकचक्रन्यासः, सर्वसंक्षोभणचक्रन्यासः, सर्वसौभाग्यदायकचक्रन्यासः, सर्वार्थसाधकचक्रन्यासः, सर्वरक्षाकरचक्रन्यासः, सर्वरोगहरचक्रन्यासः, आयुधन्यासः, सर्वसिद्धिप्रदचक्रन्यासः, इमे सर्वे न्यासाः प्रदर्शिताः । तत्रैव परिशिष्टे संहारश्रीचक्रन्यासः, सृष्टिश्रीचक्रन्यासः, स्थितिश्रीचक्रन्यासः, इति त्रयो न्यासा विस्तरेण प्रदर्शिताः सन्ति, ते तत्रैव द्रष्टव्याः। श्रीचक्रन्यासफलं रुद्रयामले–

य एवं विन्यस्य देहे साधकः स्थिरमानसः ।
विमुच्य मानुषं भावं स सद्यः शिवतां व्रजेत् ॥

त्रिकालं धारयेद् यस्तु तस्य सर्वाङ्गसङ्गतम् ।
सततं भासते देवि समस्तयोगिनीपदम् ॥

भूतप्रेतपिशाचाद्यैर्बाधितुं नैव शक्यते ।
सिद्धवच्चरते लोके तापत्रयविवर्जितः ॥

यत्र योगीश्वरो न्यस्तस्तस्मादारभ्य सर्वतः ।
धरणी क्षेत्रतां याति यावद् द्वादशयोजनम् ॥

एतत्ते कथितं भद्रे न्यासं त्रैलोक्यदुर्लभम् ।
शिष्याय भक्तियुक्ताय साधकाय प्रदर्शयेत् ॥

भ्रष्टेभ्यः साधकेभ्यो वा बान्धवेभ्यो न दर्शयेत् ।
दत्तं चेत् सिद्धिहानिः स्यादित्याज्ञा शाङ्करी मता ॥

मन्त्राः पराङ्मुखा यान्ति क्रुद्धा भवति सुन्दरी ।
अशुभं च भवेत्तस्य तस्माद् यत्नेन गोपयेत् ॥

यन्त्रभेदेनार्चनकालावधिस्तु नित्योत्सवेऽमुना प्रकारेण प्रदर्शितः —

सौवर्णे यावज्जीवम्, रौप्ये द्वाविंशतिवत्सराः, ताम्रे द्वादश, भूर्जपत्रे लिखिते तु षट् । एतेषामुक्तकालातिक्रमे तु पुनः प्रतिष्ठा । स्फटिकादौ तु सकृदेव प्रतिष्ठापनं सर्वदा पुरुषपरम्परयाऽभ्यर्चनं चेति । यन्त्रस्य श्वचाण्डालाद्यस्पृश्यस्पर्शाद्युपस्थिते पुनः प्रतिष्ठापनम् । प्रमादादिना यन्त्रे दग्धे स्फुटिते नष्टे चोराद्यपहृते वा एकदिनोपवासम्, अयुतमूलमन्त्रजपम्, तद्दशांशं होमादिकं च कृत्वा पुनर्यन्त्रान्तरं प्रतिष्ठापयेत् । लुप्तचिह्नस्फुटितार्धदग्धादींस्तु तीर्थोदके निक्षिपेत् । इति ।

अत्र श्रीगुरुवन्दनमुद्राः, अर्घ्यस्थापनमुद्राः, अर्चनमुद्राः, संक्षोभिण्यादि-

मुद्राः, जपमुद्राश्चाख्यातास्तास्ततो ग्राह्याः। पूजायां मुद्राणामपि विशेष-माहात्म्यम्।

**प्रत्यूहोत्सारणाय संक्षिप्तोपायः**

**ऐं ह्रीं श्रीं—**

**अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥**

इति मन्त्रं सकृदुच्चार्य युगपद्वामपार्ष्णिभूतलाघातत्रयकरास्फोटत्रयक्रूर-दृष्ट्यवलोकनपूर्वं तालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नान् उत्सारयेत्। तालत्रयं नाम दक्षतर्जनीमध्यमाभ्यामधोमुखाभ्यां वामकरतले सशब्दम् उपर्युपरि त्रिरभिघातः।

अत्र ध्यातव्यमिदं यच्छ्रीचक्रस्य लेखनेऽथवोत्कीर्णे तत्प्रतिष्ठायां प्रक्रियाज्ञानमावश्यकं तत्र पूर्णाभिषिक्तः श्रीविद्योपासकोऽपेक्षितः। अस्मिन् चक्रे क्रमत्रयं संहारस्थितिसृष्टिक्रमभेदाद्वर्तते। कामनानुसारं लेखन-द्रव्याणां लेखनीविशेषाणां कालस्य स्थानस्य पात्राणां ज्ञानमावश्यकम्। तदर्थं श्रीकल्पद्रुम-तन्त्रसार-विद्यार्णवादिग्रन्था अवलोकनीयाः, विस्तर-भयान्नात्र लिख्यते, इति दिङ्मात्रं निर्दिश्य विरम्यतेऽगाधो दुस्तरोऽयं मार्गः, साधका एव सम्यग् जानन्ति तत एव ग्राह्यं न हि केवलं पुस्तकबलादिति।

**लखनऊ**
अक्षयतृतीया,
वि० सं० २०५२

**रामनारायणत्रिपाठी**

# स्तोत्रप्रकरणम्

## कालिकोपनिषत्

जगदीशपुरग्रामे वास्तव्येन त्रिपाठिना ।
रामनारायणेनायं क्रियते स्तोत्रसङ्ग्रहः ॥

ओं अथैनं ब्रह्मरन्ध्रे ब्रह्मरूपिणीमाप्नोति । सुभगां त्रिगुणितां मुक्तासुभगां कामरेफेन्दिरासमस्तरूपिणीमेतानि त्रिगुणितानि तदतु कूर्चबीजं व्योमषष्ठस्वरां बिन्दुमेलनरूपां तद्द्वयं मायाद्वयं दक्षिणे कालिके चेत्यभिमुखगतां तदनु बीजसप्तकमुच्चार्य बृहद्भानुजायामुच्चरेत् । स तु शिवमयो भवेत् । सर्वसिद्धीश्वरो भवेत् । गतिस्तस्यास्तीति । नान्यस्य गतिरस्तीति । स तु वागीश्वरः । स तु नारीश्वरः । स तु देवेश्वरः । स तु सर्वेश्वरः । अभिनवजलदसंकाशा घनस्तनी कुटिलदंष्ट्रा शवासना कालिका ध्येया । त्रिकोणं पञ्चकोणं नवकोणं पद्मम् । तस्मिन् देवीं सर्वाङ्गेऽभ्यर्च्य तदिदं सर्वाङ्गम् ओं काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी विप्रचित्ता उग्रा उग्रप्रभा दीप्ता नीला घना बलाका मात्रा मुद्राऽमिता चैव पञ्चदशकोणगाः । ब्राह्मी नारायणी माहेश्वरी कौमारी अपराजिता वाराही नारसिंहिका चेत्यष्टपत्रगाः । षोडशस्वरभेदेन प्रथमेन मन्त्रविभागः । तन्मूलेनावाहनम्, तेनैव पूजनम् । य एवं मन्त्रराजं नियमेन वा लक्षमावर्तयति स पाप्मानं हन्ति । स ब्रह्मत्वं भजति । स अमृतत्वं भजति । स आयुरारोग्यैश्वर्यं भजति । सदा पञ्चमकारेण पूजयेत् । सदा गुरुभक्तो भवेत् । सदा देवभक्तो भवेत् । धर्मिष्ठतां पुष्टिमहतवाचं विप्रा लभन्ते । मन्त्रजापिनो ह्यात्मा विद्याप्रपूरितो भवति । स जीवन्मुक्तो भवति । स सर्वशास्त्रं जानाति । स सर्वपुण्यकारी भवति । स सर्वयज्ञयाजी भवति । राजानो

दासतां यान्ति। जप्त्वा स सर्वमेतं मन्त्रराजं स्वयं शिव एवाहमित्यणिमादि-विभूतीनामीश्वरः कालिकां लभेत्।

**आवयोः पात्रभूतः सन् सुकृती त्यक्तकल्मषः ।**
**जीवन्मुक्तः स विज्ञेयो यस्मै लब्धा हि दक्षिणा ।।**

दशांशं होमयेत्तदनु तर्पयेत्। अथ हैके यज्ञान् कामानद्वैतज्ञानादीन-निरुद्धसरस्वतीति। अथ हैषः कालिका मनुजायी यः सदा शुद्धात्मा ज्ञान-वैराग्ययुक्तः शाम्भवीदीक्षासु रक्तः शाक्तासु। यदि वा ब्रह्मचारी रात्रौ नग्नः सर्वदा मधुनाऽशक्तो मनसा जपपूजानियमवान्। योषितृप्रियकरो भगोदकेन तर्पणं तेनैव पूजनं कुर्यात्। सर्वदा कालिकारूपमात्मानं विभावयेत्। स सर्वदा योषिदासक्तो भवेत्। स सर्वहत्यां तरति तेन मधुदानेन। अथ पञ्चमकारेण सर्वमायादिविद्यां पशुधनधान्यं सर्वेशत्वं च कवित्वं च। नान्यः परमः पन्था विद्यते मोक्षाय ज्ञानाय धर्माधर्माय तत्सर्वं भूतं भव्यं यत् किञ्चिद् दृश्यमानं स्थावरजङ्गमं तत्सर्वं कालिकातन्त्रे ओतं प्रोतं वेद। य एवं मनुजापी स पाप्मानं तरति। स भ्रूणहत्यां तरति। सोऽगम्यागमनं तरति। स सर्वसुखमाप्नोति। स सर्वंजानाति। स सर्वसंन्यासी भवति। स विरक्तो भवति। स सर्ववेदाध्यायी भवति। स सर्वमन्त्रजापी भवति। स सर्वशास्त्रवेत्ता भवति। स सर्वज्ञानकारी भवति। स आवयो मित्रभूतो भवति। इत्याह भगवान् शिवः। निर्विकल्पेन मनसा स वन्द्यो भवति। अथ हैनाम्,

**मूलाधारे स्मरेद्दिव्यं त्रिकोणं तेजसां निधिम् ।**
**शिखा आनीय तस्याग्नेरथ तूर्ध्वं व्यवस्थिता ।।**

**नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा ।**
**नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ।।**

**तस्या शिखाया मध्ये परमात्मा व्यवस्थितः ।**
**स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।।**

**स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमा ।**
**इति कुण्डलिनीं ध्यात्वा सर्वपापैः प्रमुच्यते ॥**

महापातकेभ्यः पूतो भूत्वा सर्वमन्त्रसिद्धिं कृत्वा भैरवो भवेत् । महाकालभैरवोऽस्य ऋषिः । अनुष्टुप्छन्दः (उष्णिक्छन्दः) । कालिका देवता । ह्रीं बीजं हूं शक्तिः क्रीं कीलकं अनिरुद्धसरस्वती देवता । कवित्वे पाण्डित्यार्थे (धर्मार्थकाममोक्षार्थे) जपे विनियोगः । इत्येवमृषिच्छन्दो दैवतं ज्ञात्वा मन्त्रसाफल्यमश्नुते । अथर्वविद्यां प्रथममेकं द्वयं त्रयं वा नामद्वयसम्पुटितं कृत्वा योजयेत् । गतिस्तस्यास्तीति । ओं सत्यम् । ओं तत्सत् ।

अथ हैनं गुरुं परितोष्यैनं मन्त्रराजं गृह्णीयात् । मन्त्रराजं गुरुस्तमपि शिष्याय सत्कुलीनाय विद्याभक्ताय सुवेषां स्त्रियं स्पृष्ट्वा स्वयं निशायां निरुपद्रवः परिपूज्य एकाकी शिवगेहे लक्षं तदर्धं वा जपित्वा दद्यात् । ओं ओं ओं सत्यं सत्यं सत्यम् । नान्यप्रकारेण सिद्धिर्भवति । अथाह वै कालिकामनोस्तारामनोस्त्रिपुरामनोः सर्वदुर्गामनोर्वा स्वरूपसिद्धिरेवमिति शिवम् ।

**॥ इत्याथर्वणे सौभाग्यकाण्डे कालिकोपनिषत् समाप्ता ॥**

# कालिकोपनिषत्

अथ हैनां ब्रह्मरन्ध्रे ब्रह्मस्वरूपिणीमाप्नोति सुभगां कामरेफेन्दिरां समष्टिरूपिणीमादौ तदन्वकर्तुर्बीजद्वयकूर्चबीजं तद्धोमषष्ठस्वरबिन्दुमेलनरूपं तदनु भुवना द्वयभुवना तु व्योमज्वलनेन्दिराशून्यमेलनरूपा दक्षिणे कालिके वेत्यभिमुखं गता तदनु बीजसप्तकमुच्चार्य बृहद्भानुजायामुच्चरेत् ।

अयं सर्वमन्त्रोत्तमोत्तमं सकृज्जपन् स तु विश्वेश्वरः, स तु नारीश्वरः, स तु वेदेश्वरः, स सर्वगुरुः, सर्वनमस्यः, सर्वेषु वेदेष्वधिश्रितो भवति। स सर्वेषु तीर्थेषु स्नातो भवति, सर्वेषु यज्ञेषु दीक्षितो भवति, स स्वयं सदाशिवः। त्रिकोणं त्रिकोणं त्रिकोणं पुनश्चैव त्रिकोणं त्रिकोणं ततो वसुदलं सार्धचन्द्रकेसरं युग्मशो विलिख्य सम्भृतं भूपुरैकेन युतं. सर्वज्ञेनाभ्यर्च्य तस्मिन् देवीदले रेखायां विन्यस्य, ध्येया अभिनवजलदवदना घनस्तनी कुटिलद्रंष्ट्रा शवासना वराभयखड्गमुण्डमण्डितहस्ता कालिका, ध्येया काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी विप्रचित्तेति षट्कोणगाः । उग्रा उग्रप्रभा दीप्ता नीला घना बलाका मात्रा मुद्रा मितेति नवकोणगाः। इत्थं पञ्चदशकोणगाः। ब्राह्मी नारायणी माहेश्वरी चामुण्डा कौमारी अपराजिता वाराही नारसिंहीत्यष्टपत्रगाः। चतुष्कोणगाश्चत्वारो देवा माधवरुद्रविनायकसौराः। चतुर्दिक्षु इन्द्र-यम-वरुण-कुबेराः। देवीं सर्वाङ्गेनादौ सम्पूज्य भगोदकेन तर्पणं पञ्चमकारेण पूजनमेतस्याः सपर्यायाः किमधिकं न शक्यं ब्रह्मादिपदं हेयं हेलया प्राप्नोति, एतस्या एकद्वित्रिक्रमेण मनवो भवन्ति। नारिमित्रादिलक्षणमत्र वर्तते। अमुष्य मन्त्रपाठकस्य गतिरस्ति, नान्यस्येह गतिरस्ति, एतस्यास्तारामनोर्दुर्गामनोर्वा सिद्धिः। इदानीं तु सर्वाः स्वप्नभूता असितैव जागर्ति इमामसिताज्ञामुपनिषदं यो वाऽधीते सोऽपुत्रः पुत्रीभवति, निर्धनो धनायति धर्मार्थकाममोक्षाणां पात्रीयत्यन्यस्य वरदो दृष्ट्वा जगन्मोहयति क्रोधस्तं जहाति गङ्गादितीर्थक्षेत्राणामग्निष्टोमादियज्ञानां फलभागीयति ।

**।। इत्याथर्वणवेदे सौभाग्यकाण्डे कालिकोपनिषत् समाप्ता ।।**

# कालीमेधादीक्षितोपनिषत्

अथाह वै देवानां पत्नीं भजते। तस्योपासकोऽन्यां गच्छन् ओं अथैनां मेधादीक्षितरूपिणीं भावयेत्। स शिवो भवेत्, स कालीरूपो भवेत्। सोऽयं मेधास्पर्शमणिकालीं दीक्षयेत्। ततश्चिन्तामणिकालीं दीक्षयेत्। ततः सिद्धकाल्यधिकारी भवेत्। विद्याराज्ञीं जपेत्। ततः कामकलाकालीं परा-रूपिणीं जपेत्। ततश्चरणदीक्षारूपिणीं हंसकालीं यजेत्। रक्तशुक्लमिश्र-निर्वाणरूपिणीं यजेत्। सर्वनिर्वाणदीक्षितो भवेत्। ततः शाम्भवीदीक्षितो भवेत्। गुह्यकाल्यधिष्ठितो भवेत्। शिवो भवेत्। स परारूपो भवेत्। परात् पररूपो भवेत्। परात् परातीतरूपो भवेत्। चित्परारूपो भवेत्। चित्परात् परारूपो भवेत्। चित्परात् परातीतरूपो भवेत्। ब्रह्मविष्णुरुद्रेश्वरसदा-शिवमहाकालचित्परारम्बारूपो भवेत्। स ब्रह्मत्वं गच्छति। मेधादीक्षां लभेत्। मेधादीक्षातः परा दीक्षा न विद्यत इत्याह भगवान् शिवः। स्पर्शविद्यया देहशुद्धिर्भवेत्। ततश्चिन्तामणिविद्याधिकारी विद्याराज्ञीं लभेत्। विद्या-राज्ञ्यधिकारी तु षोढां जपेत्। हंसदीक्षितो भवेत्। चरणाधिकारी षट्-शाम्भवसम्पन्नो भवेत्। गुह्यकाल्यधिष्ठितो भवेत्। ततो मेधां चरेत्। जीवको हि भृङ्गत्वं गच्छति। भृङ्गीभूत्वा षट्चक्राणि निर्भिन्द्यात्। ततः परागभुग् भवेत्। परकायप्रवेशवान् वयस्स्थैर्यं चरेत्। कामरूपत्वं गच्छति। षष्टिसिद्धीश्वरो भवेदिति शिवप्रोक्तं वेद।

**॥ इत्याथर्वणे सौभाग्यकाण्डे कालीमेधादीक्षितोपनिषत् समाप्ता ॥**

# गुह्यकाल्युपनिषत्

अथर्ववेदमध्ये तु शाखा मुख्यतमा हि षट् ।
स्वयंभुवा याः कथिताः पुत्रायाथर्वणं प्रति ॥ १ ॥

तासु गुह्योपनिषदस्तिष्ठन्ति वरवर्णिनि ।
नामानि शृणु शाखानां तत्राद्या वारतन्तवी ॥ २ ॥

मौञ्जायनी द्वितीया तु तृतीया तार्णवैन्दवी ।
चतुर्थी शौनकी प्रोक्ता पञ्चमी पैप्पलादिका ॥ ३ ॥

षष्ठी सौमन्तवी ज्ञेया सारात् सारतमा इमाः ।
गुह्योपनिषदो गूढाः सन्ति शाखासु षट्स्वपि ॥ ४ ॥

ता एकीकृत्य सर्वास्तु मयाऽस्यां विनिवेशिताः ।
संहितायां साधकानामुद्धाराय वरानने ॥ ५ ॥

तास्ते वदामि यत् प्रोक्तं ध्यानं कुर्वन्ति देवताः ।
विराट्ध्यानं हि तज्ज्ञेयं महापातकनाशनम् ॥ ६ ॥

ब्रह्माण्डाद्बहिरूर्ध्वं हि महत्तत्त्वमहङ्कृतिः ।
रूपाणि पञ्चतन्मात्राः पुरुषः प्रकृतिर्नव ॥ ७ ॥

महापातालपादान्तलम्बा तस्या जयं स्मरेत् ।
ब्रह्माण्डार्धं कपालं हि शिरस्तस्या विभावयेत् ॥ ८ ॥

देवलोको ललाटश्च षट्त्रिंशल्लक्षयोजनम् ।
मेरुः सीमन्तदण्डोऽस्या ग्रहरत्नसमाकुलः ॥ ९ ॥

अन्तर्वीथी नागवीथी भ्रुवावस्याः प्रकीर्तिते ।
शिवलोकश्च वैकुण्ठलोकः कर्णावुभौ मतौ ॥ १० ॥

लोहितं तिलकं ध्यायेन्नासा मन्दाकिनी तथा ।
चक्षुषी चन्द्रसूर्यौ च पक्ष्माणि किरणास्तथा ॥ ११ ॥

गण्डौ स्यातां तपोलोकसत्यलोकौ यथाक्रमम् ।
जनोलोकमहर्लोकौ कपोलौ परिकीर्तितौ ॥ १२ ॥

स्यातां हिमाद्रिकैलासौ तस्या देव्यास्तु कुण्डले ।
स्वर्लोकश्च भुवर्लोको देव्या ओष्ठाधरौ मतौ ॥ १३ ॥

दिक्पतीनां ग्रहाणाश्च लोकाश्चाथ रदावली ।
गन्धर्वसिद्धसाध्यानां पितृकिन्नररक्षसाम् ॥ १४ ॥

पिशाचयक्षाप्सरसां मरीचीयायिनां तथा ।
विद्याधराणामाज्योष्मपाणां सोमैकपायिनाम् ॥ १५ ॥

सप्तर्षीणां ध्रुवस्यापि लोका ऊर्ध्वरदावली ।
मुखं च रोदसी ज्ञेयं द्यौर्लोकश्चिबुकं तथा ॥ १६ ॥

ब्रह्मलोको गलः प्रोक्तो वायवः प्राणरूपिणः ।
वनस्पतय ओषध्यो लोमानि परिचक्षते ॥ १७ ॥

विद्युद्दृष्टिरहोरात्रं निमेषोन्मेषसंज्ञकम् ।
विश्वं तु हृदयं प्रोक्तं पृथिवीपाद उच्यते ॥ १८ ॥

तलं तलातलं चैव पातालं सुतलं तथा ।
रसातलं नागलोकाः पादाङ्गुल्यः प्रकीर्तिताः ॥ १९ ॥

वेदा वाचः स्यन्दमाना नदा नद्योऽमिता मताः ।
कला काष्ठा मुहूर्ताश्च ऋतवोऽयनमेव च ॥ २० ॥

पक्षा मासास्तथा चाब्दाश्चत्वारोऽपि युगाः प्रिये ।
कफोणिर्मणिबन्धश्च तदूरुकटिबन्धनाः ॥ २१ ॥

प्रपदाश्च स्फिचश्चैव सर्वाङ्गानि प्रचक्षते ।
वैश्वानरः कालमृत्युर्जिह्वात्रयमिदं स्मृतम् ॥ २२ ॥

आब्रह्मस्तम्बपर्यन्तं तनुमस्याः प्रचक्षते ।
प्रलयो भोजने कालस्तृप्तिस्तेन च नासिका ॥ २३ ॥

ज्ञेयः पार्श्वपरीवर्तो महाकल्पान्तरोद्भवः ।
विराड्रूपस्य ते ध्यानमिति संक्षेपतोऽर्पितम् ॥ २४ ॥

तस्याः स्वरूपविज्ञानं सपर्या परिकीर्तितः ।
तदेव हि श्रुतिप्रोक्तमवधारय पार्वति ॥ २५ ॥

यथोर्णनाभिः सूत्राणि सृजत्यपि गिलत्यपि ।
यथा पृथिव्यामोषध्यः सम्भवन्ति गिलन्त्यपि ॥ २६ ॥

पुरुषात् केशलोमानि जायन्ते च क्षरन्त्यपि ।
उत्पद्यन्ते विलीयन्ते तथा तस्यां जगत्यपि ॥ २७ ॥

ज्वलतः पावकाद् यद्वत् स्फुलिङ्गाः कोटिकोटिशः।
निर्गत्य च विनश्यन्ति विश्वं तस्यास्तथा प्रिये ॥ २८ ॥

ऋचो यजूंषि सामानि दीक्षा यज्ञाः सदक्षिणाः ।
अध्वर्युर्यजमानश्च भुवनानि चतुर्दश ॥ २९ ॥

ब्रह्मविष्ण्वादिका देवा मनुष्याः पशवो यतः ।
प्राणापानौ व्रीहयश्च सत्यं श्रद्धा विधिस्तपः ॥ ३० ॥

समुद्रा गिरयो नद्यः सर्वे स्थावरजङ्गमाः ।
विसृज्येमानि सर्गादौ त्वं प्रकाशयसे ततः ॥ ३१ ॥

जङ्गमानि विधायान्धे विशत्यप्रतिभूतकम् ।
नवद्वारं पुरं कृत्वा गवाक्षाणीन्द्रियाण्यपि ॥ ३२ ॥

सा पश्यत्यत्ति वहति स्पृशति क्रीडतीच्छति ।
शृणोति जिघ्रति तथा रमते विरमत्यपि ॥ ३३ ॥

तया मुक्तं पुरं तद्धि मृतमित्यभिधीयते ॥ ३४ ॥

ये तपः क्षीणदोषास्ते नैव पश्यन्ति भाविताम् ।
ज्योतिर्मयीं शरीरेऽन्तर्ध्यायमानां महात्मभिः ॥ ३५ ॥

बृहच्च तद्दिव्यमचिन्त्यरूपं
सूक्ष्माच्च तत् सूक्ष्मतरं विभाति ।
दूरात् सुदूरे तदिहास्ति किञ्चित्
पश्येत्त्विहैतन्निहितं गुहायाम् ॥ ३६ ॥

न चक्षुषा गृह्यते नापि वाचा
नान्यैर्योगैर्न हि सा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्वः
ततस्तु तां पश्यति निष्कलाञ्च ॥ ३७ ॥

यथा नद्यः स्यन्दमाना समुद्रे
गच्छन्त्यस्तं नामरूपे विहाय ।
तथा विद्वान् नामरूपाद् विमुक्तः
परात् परां जगदम्बामुपैति ॥ ३८ ॥

सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद् वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीमि ॥ ३९ ॥

सैवैतत्—

एषैवालम्बनं श्रेष्ठं सैषैवालम्बनं परम् ।
एषैवालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ ४० ॥

इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ ४१ ॥

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषात्तु परा देवी सा काष्ठा सा परा गतिः ॥ ४२ ॥

यथोदकं गिरौ सृष्टं समुद्रेषु विधावति ।
एवं धर्मान् पृथक् पश्यंस्तामेवानुविधावति ॥ ४३ ॥

एका गुह्या सर्वभूतान्तरात्मा
एकं रूपं बहुधा या करोति ।
तामात्मस्थां येऽनुपश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषाम् ॥ ४४ ॥

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तामेव भान्तीमनुभाति सर्वं
तस्या भासा सर्वमिदं विभाति ॥ ४५ ॥

यस्याः परं नापरमस्ति किञ्चिद्
यस्या नाणीयो न ज्यायोऽस्ति किञ्चित् ।
वृक्ष इव स्तब्धा दिवि तिष्ठत्येका
यदन्तः पूर्णामवगत्य पूर्णः ॥ ४६ ॥

सर्वाननशिरोग्रीवा सर्वभूतगुहाशया ।
सर्वत्रस्था भगवती तस्मात् सर्वगता शिवा ॥ ४७ ॥

सर्वतः पाणिपादान्ता सर्वतोऽक्षिशिरोमुखा ।
सर्वतः श्रुतिमत्येषा सर्वमावृत्य तिष्ठति ॥ ४८ ॥

सर्वेन्द्रियगुणाभासा सर्वेन्द्रियविवर्जिता ।
सर्वेषां प्रभुरीशानी सर्वेषां शरणं सुहृत् ॥ ४९ ॥

नवद्वारे पुरे देवी हंसी लीलायतां बहिः ।
ध्येया सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥ ५० ॥

अपाणिपादा जननी ग्रहीत्री
पश्यत्यचक्षुः सा शृणोत्यकर्णा ।
सा वेत्ति वेद्यं न च तस्यास्तु वेत्ता
तामाहुरग्र्यां महतीं महीयसीम् ॥ ५१ ॥

सा चैवाग्निः सा च सूर्यः सा वायुः सा च चन्द्रमाः ।
सा चैव शुक्रः सा ब्रह्म सा चापः सा प्रजापतिः ।
सा चैव स्त्री सा च पुमान् सा कुमारः कुमारिका ॥५२॥

ऋचो अक्षरे परमे व्योमन्
यस्यां देवा अधिरुद्रा निषेदुः ।
यस्तां न वेद किमृचा करिष्यति
ये तां विदुस्त इमे समासते ॥ ५३ ॥

छन्दांसि यज्ञाः क्रतवो व्रतानि
भूतं भव्यं यच्च वेदा वदन्ति ।
सर्वं देवी सृजते विश्वमेतत्
तस्याश्चान्यो मायया संनिरुद्धः ॥ ५४ ॥

मायां तु प्रकृतिं विद्यात्
प्रभुं तस्या महेश्वरीम् ।
अस्या अवयवैः सूक्ष्मै-
र्व्याप्तं सर्वमिदं जगत् ॥ ५५ ॥

या देवानां प्रभवा चोद्भवा च
विश्वाधिपा सर्वभूतेषु गूढा ।
हिरण्यगर्भं जनयामास पूर्वं
सा नो बुद्ध्या शुभया संयुनक्तु ॥ ५६ ॥

सूक्ष्मातिसूक्ष्मं पलिलस्य मध्ये
विश्वस्य स्रष्ट्रीमनेकाननाख्याम् ।
विश्वस्य चैकां परिवेष्टयित्रीं
ज्ञात्वा गुह्यां शान्तिमत्यन्तमेति ॥ ५७ ॥

सा ह्येव काले भुवनस्य गोप्त्री
विश्वाधिपा सर्वभूतेषु गूढा ।
यस्यां मुक्ता ब्रह्मर्षयोऽपि देवाः
ज्ञात्वा तां मृत्युपाशाञ्छिनत्ति ॥ ५८ ॥

घृतात् परं मण्डमिवातिसूक्ष्मं
ज्ञात्वा कालीं सर्वभूतेषु गूढाम् ।
कल्पान्ते वै सर्वसंहारकर्त्रीं
ज्ञात्वा गुह्यां मुच्यते सर्वपापैः ॥ ५९ ॥

एषा देवी विश्वयोनिर्महात्मा
सदा जनानां हृदि सन्निविष्टा ।
हृदा मनीषा मनसाभिक्लृप्ता
ये त्वां विदुरमृतास्ते भवन्ति ॥ ६० ॥

यदा तमस्तत्र दिवा न रात्रि-
र्न सन्न चासद् भगवत्येव गुह्या ।
तदक्षरं तत्सवितुर्वरेण्यं
प्रज्ञा च तस्याः प्रसृता परा सा ॥ ६१ ॥

नैनामूर्ध्वं न तिर्यक् च न मध्यं परिजग्रभत् ।
न तस्या प्रतिमाभिश्च तस्या नाम महद्यशः ॥ ६२ ॥

न सदृशे तिष्ठति रूपमस्या
न चक्षुषा पश्यति कश्चिदेनाम् ।
हृदा मनीषा मनसाभिक्लृप्तां
य एनां विदुरमृतास्ते भवन्ति ॥ ६३ ॥

भूयश्च सृष्ट्वा त्रिदशानवेशी
सर्वाधिपत्यं कुरुते भवानि ।
सर्वा दिशश्चोर्ध्वमधश्च तिर्यक्
प्रकाशयन्ती भ्राजते गुह्यकाली ॥ ६४ ॥

नैव स्त्री न पुमानेषा नैव चेयं नपुंसका ।
यद्यच्छरीरमादत्ते तेन तेनैव युज्यते ॥ ६५ ॥

धर्मावहां पापनुदां भगेशीं
ज्ञात्वात्मस्थाममृतां विश्वमातरम् ।
तामीश्वराणां परमां महेश्वरीं
तां देवतायाः परदेवतां च ॥
पतिं पतीनां परमां पुरस्ताद्
विद्यावतां गुह्यकालीं मनीषाम् ॥ ६६ ॥

तस्या न कार्यं करणं न विद्यते
न तत्समा चाप्यधिका च दृश्यते ।
पराऽस्याः शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥ ६७ ॥

कश्चिन्न तस्याः पतिरस्ति लोके
न चेशिता नैव तस्याश्च लिङ्गम् ।
सा कारणं कारणकारणाधिपा
नास्याश्च कश्चिज्जनिता न चाधिपः ॥६८॥

एका देवी सर्वभूतेषु गूढा
व्याप्नोत्येतत् सर्वभूतान्तरस्था ।
कर्माध्यक्षा सर्वभूताधिवासा
साक्षिण्येषा केवला निर्गुणा च ॥ ६९ ॥

वशिन्येका निष्क्रियाणां बहूनाम्
एकं बीजं बहुधा या करोति ।
नानारूपा दशवक्त्रं विधत्ते
नानारूपान् या च बाहून् बिर्भात ॥ ७० ॥

नित्या नित्यानां चेतना चेतनानाम्
एका बहूनां विदधाति कामान् ।
तत्कारणं सांख्ययोगाधिगम्यं
ज्ञात्वा देवीं मुच्यते सर्वपाशैः ॥ ७१ ॥

या वै विष्णुं पालने संनियुङ्क्ते
रुद्रं देवं संहृतौ चापि गुह्या ।
तां वै देवीमात्मबुद्धिप्रकाशां
मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ ७२ ॥

निष्कलां निष्क्रियां शान्तां निरवद्यां निरञ्जनाम् ।
बह्वाननकरां देवीं गुह्यामेकां समाश्रये ॥ ७३ ॥

इयं हि गुह्योपनिषत् सुगूढा
यस्या ब्रह्मा देवता विश्वयोनिः ।
एतां जपंश्चान्वहं मतियुक्तः
सत्यं सत्यं ह्यमृतः सम्बभूव ॥ ७४ ॥

वेदवेदान्तरयोर्गुह्यं पुराकल्पे प्रचोदितम् ।
नाप्रशान्ताय दातव्यं नाशिष्याय च वै पुनः ॥ ७५ ॥

यस्य देव्यां परा भक्तिर्यथा देव्यां तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ७६ ॥

महाकाल उवाच—

गुह्योपनिषदित्येषा गोप्यात् गोप्यतरा सदा ।
चतुर्भ्यश्चापि वेदेभ्य एकीकृत्यात्र योजिता ॥ ७७ ॥
उपदिष्टा च सर्गादौ सर्वानेव दिवौकसः ।
एवंविधं च यद्ध्यानमेवंरूपं च कीर्तितम् ॥ ७८ ॥
सा सपर्या परिज्ञेया विधानमधुना शृणु ।
सोऽहमस्मीति प्रथमं सोऽहमस्मि द्वितीयकम् ॥ ७९ ॥
तदस्म्यहं तृतीयं च महावाक्यत्रयं भवेत् ।
आद्यान्येतानि वाक्यानि छन्दांसि परिचक्षते ॥ ८० ॥
देवता गुह्यकाली च रजःसत्त्वतमोगुणाः ।
सर्वेषां प्रणवो बीजं हंसः शक्तिः प्रकीर्तिता ॥ ८१ ॥
मकारश्चाप्यकारश्च ह्युकारश्चेति कीलकम् ।
एभिर्वाक्यत्रयैः सर्वं कर्म प्रोतं विधानतः ॥ ८२ ॥

अनुक्षणं जपंश्चैव निश्चयः परिकीर्तितः ।
द्वितीयोपासकानां हि परिपाटीयमीरिता ॥ ८३ ॥

एवं चाप्यातुरो यस्तु मनुष्यो भक्तिभावितः ।
विमुक्तः सर्वपापेभ्यः कैवल्यायोपकल्पते ।
सर्वाभिः सिद्धिभिस्तस्य किं कार्यं कमलानने ॥ ८४ ॥

॥ इति श्रीमहाकालसंहितायां गुह्यकाल्युपनिषत् समाप्ता ॥

# ऋग्वेदोक्तं रात्रिसूक्तम्

ओं रात्रीत्याद्यष्टर्चस्य सूक्तस्य कुशिकः सौभरो रात्रिर्वा भारद्वाज ऋषिः, रात्रिर्देवता, गायत्री छन्दः, देवीमाहात्म्यपाठे विनियोगः ।

**ओं रात्री व्यख्यदायती पुरुत्रा देव्यक्षभिः ।**
**विश्वा अधि श्रियोऽधित ॥ १ ॥**

**ओर्वप्रा अमर्त्या निवतो देव्युद्वतः ।**
**ज्योतिषा बाधते तमः ॥ २ ॥**

**निरु स्वसारमस्कृतोषसं देव्यायती ।**
**अपेदु हासते तमः ॥ ३ ॥**

**सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि ।**
**वृक्षे न वसतिं वयः ॥४॥**

**नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः ।**
**नि श्येनासश्चिदर्थिनः ॥५॥**

**यावया वृक्यं वृकं यवय स्तेनमूर्म्ये ।**
**अथा नः सुतरा भव ॥ ६ ॥**

**उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित ।**
**उप ऋणेव यातय ॥ ७ ॥**

**उप ते गा इवाकरं वृणीष्व दुहितर्दिवः ।**
**रात्रिस्तोमं न जिग्युषे ॥ ८ ॥**

अष्टभुजायाः काल्या ध्यानम्—

अष्टबाहुर्महाकाया कालो मेघसमप्रभा ।
शङ्खचक्रगदाकुम्भमुसलाङ्कुशपाशयुक् ॥
वज्रं करे बिभ्रती सा महाकाली मुदेऽस्तु नः ॥

कालरात्र्या ध्यानम्—

करालरूपा कालाब्जसमानाकृतिविग्रहा ।
कालरात्रिः शुभं दद्याद् देवी चण्डाट्टहासिनी ॥

चामुण्डाया ध्यानम्—

चामुण्डा प्रेतगा कृष्णा विकृता चाहिभूषणा ।
दंष्ट्राली क्षीणदेहा च गर्ताक्षी कामरूपिणी ॥

दिग्बाहुः क्षामकुक्षिश्च मुसलं चक्रचामरे ।
अङ्कुशं बिभ्रती खड्गं दक्षिणे चाथ वामके ॥

खेटं पाशं धनुर्दण्डं कुठारं चापि बिभ्रती ।

## कालीरहस्ये कालीस्तोत्रम्

प्राग्देहस्थो यदाहं तव चरणयुगं नाश्रितो नार्चितोऽहं
तेनाद्या कीर्तिवर्गैर्जठरजदहनैर्बाध्यमानो बलिष्ठैः ।
क्षिप्त्वा जन्मान्तरान्न पुनरिह भविता क्वाश्रयः क्वाऽपि सेवा
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ १ ॥

बाल्ये बालाऽभिलाषैर्जडित-जडमतिर्बाललीलाप्रसक्तो
न त्वां जानामि मातः ! कलिकलुषहरां भोग-मोक्षप्रदात्रीम् ।
नाचारो नैव पूजा न च यजनकथा न स्मृतिर्नैव सेवा
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ २ ॥

प्राप्तोऽहं यौवनं चेद् विषधर-सदृशैरिन्द्रियैर्दष्टगात्रो
नष्टप्रज्ञः परस्त्री-परधनहरणे सर्वदा साऽभिलाषः ।
त्वत्पादाम्भोजयुग्मं क्षणमपि मनसा न स्मृतोऽहं कदापि
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ ३ ॥

प्रौढो भिक्षाभिलाषी सुत-दुहितृ-कलत्रार्थमन्नादिचेष्टः
क्व प्राप्स्ये कुत्र यामीत्यनुदिनमनिशं चिन्तया भग्नदेहः ।
नो ते ध्यानं न चास्था न च भजनविधिर्नामसंकीर्त्तनं वा
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ ४ ॥

वृद्धत्वे बुद्धिहीनः कृशविवशतनुः श्वास-कासातिसारैः
कर्मानर्होऽक्षिहीनः प्रगलितदशनः क्षुत्पिपासाभिभूतः ।
पश्चात्तापेन दग्धो मरणमनुदिनं ध्येयमात्रं न चाऽन्यत्
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ ५ ॥

कृत्वा स्नानं दिनादौ क्वचिदपि सलिलं नो कृतं नैव पुष्पं
ते नैवेद्यादिकं च क्वचिदपि न कृतं नाऽपि भावो न भक्तिः ।
न न्यासो नैव पूजा न च गुणकथनं नाऽपि चाऽर्चा कृता ते
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ ६ ॥

जानामि त्वां न चाऽहं भवभयहरणीं सर्वसिद्धिप्रदात्रीं
नित्यानन्दोदयाढ्यां त्रितयगुणमयीं नित्यशुद्धोदयाढ्याम् ।
मिथ्याकर्माभिलाषैरनुदिनमभितः पीडितो दुःखसङ्घैः
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ ७ ॥

कालाभ्राभां श्यामलाङ्गीं विगलितचिकुरां खड्गमुण्डाभिरामां
त्रासत्राणेष्टदात्रीं कुणपगणशिरोमालिनीं दीर्घनेत्राम् ।
संसारस्यैकसारं भवजननहरां भावितो भावनाभिः
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ ८ ॥

ब्रह्मा विष्णुस्तथेशः परिणमति सदा त्वत्पदाम्भोजयुग्मं
भाग्याभावान्न चाऽहं भवजननि भवत्पादयुग्मं भजामि ।
नित्यं लोभप्रलोभैः कृतवशमतिः कामुकस्त्वां प्रयाचे
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ ९ ॥

रागद्वेषैः प्रमत्तः कलुषयुततनुः कामनाभोगलुब्धः
कार्याऽकार्याविचारी कुलमतिरहितः कौलसंघैर्विहीनः ।
क्व ध्यानं ते क्व चाऽर्चा क्व च मनु जपन्नैव किञ्चित् कृतोऽहं
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ १० ॥

रोगी दुःखी दरिद्रः परवशकृपणः पांशुलः पापचेता
निद्रालस्यप्रसक्तः सुजठरभरणे व्याकुलः कल्पितात्मा ।
किं ते पूजाविधानं त्वयि क्व च नु मतिः क्वानुरागः क्व चास्था
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ ११ ॥

मिथ्याव्यामोहरागैः परिवृतमनसः क्लेशसंघान्वितस्य
क्षुन्निद्रौघान्वितस्य स्मरणविरहिणः पापकर्मप्रवृत्तेः ।
दारिद्र्यस्य क्व धर्मः क्व च जननि रुचिः क्व स्थितिः साधुसंघैः
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ १२ ॥

मातस्तातस्य देहाज्जननिजठरगः संस्थितस्त्वद्वशेऽहं
त्वं हर्त्री कारयित्री करणगुणमयी कर्महेतुस्वरूपा ।
त्वं बुद्धिश्चित्तसंस्थाऽप्यहमतिभवती सर्वमेतत् क्षमस्व
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ १३ ॥

त्वं भूमिस्त्वं जलं च त्वमसि हुतवहस्त्वं जगद्वायुरूपा
त्वं चाऽऽकाशं मनश्च प्रकृतिरसि महत्पूर्विका पूर्वपूर्वा ।
आत्मा त्वं चाऽसि मातः ! परमसि भवती त्वत्परं नैव किञ्चित्
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ १४ ॥

त्वं काली त्वं च तारा त्वमसि गिरिसुता सुन्दरी भैरवी त्वं
त्वं दुर्गा छिन्नमस्ता त्वमसि च भुवना त्वं लक्ष्मीः शिवा त्वम् ।
धूमा मातंगिनी त्वं त्वमसि च बगला मंगलादिस्तवाख्या
क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले ॥ १५ ॥

स्तोत्रेणाऽनेन देवीं परिणमति जनो यः सदा भक्तियुक्तो
दुष्कृत्या दुर्गसंघं परितरति शतं विघ्नता नाशमेति ।
नाधिर्व्याधिः कदाचिद् भवति यदि पुनः सर्वदा सापराधः
सर्वं तत्कामरूपे त्रिभुवनजननि क्षामये पुत्रबुद्ध्या ॥ १६ ॥

ज्ञाता वक्ता कवीशो भवति धनपतिर्दानशीलो दयात्मा
निःपापी निःकलंकी कुलपतिकुशलः सत्यवाग् धार्मिकश्च ।
नित्यानन्दो दयाढ्यः पशुगणविमुखः सत्पथाचारशीलः
संसाराब्धिं सुखेन प्रतरति गिरिजापादयुग्मावलम्बात् ॥ १७ ॥

# भैरवतन्त्रे जगन्मङ्गलम्—काल्याः कवचम्

भैरव्युवाच—

कालीपूजा श्रुता नाथ भावाश्च विविधाः प्रभो ।
इदानीं श्रोतुमिच्छामि कवचं पूर्वसूचितम् ॥ १ ॥

त्वमेव स्रष्टा पाता च संहर्ता च त्वमेव हि ।
त्वमेव शरणं नाथ त्राहि मां दुःखसंकटात् ॥ २ ॥

भैरव उवाच—

रहस्यं शृणु वक्ष्यामि भैरवि प्राणवल्लभे ।
श्रीजगन्मङ्गलं नाम कवचं मन्त्रविग्रहम् ॥ ३ ॥

पठित्वा धारयित्वा वा त्रैलोक्यं मोहयेत् क्षणात् ।
नारायणोऽपि यद् धृत्वा नारी भूत्वा महेश्वरम् ॥ ४ ॥

योगेशं क्षोभमनयद् यद्धृत्वा च रघूद्वहः ।
वरदृप्तान् जघानैव रावणादिनिशाचरान् ॥ ५ ॥

यस्य प्रसादादीशोऽहं त्रैलोक्यविजयी प्रभुः ।
धनाधिपः कुबेरोऽपि सुरेशोऽभूच्छचीपतिः ॥ ६ ॥

एवं हि सकला देवाः सर्वसिद्धीश्वराः प्रिये ।
श्रीजगन्मङ्गलस्यास्य कवचस्य ऋषिः शिवः ॥ ७ ॥

छन्दोऽनुष्टुब् देवता च कालिका दक्षिणेरिता ।
जगतां मोहने दुष्टनिग्रहे भुक्तिमुक्तिषु ॥ ८ ॥

योषिदाकर्षणे चैव विनियोगः प्रकीर्तितः ।
शिरो मे कालिका पातु क्रींकारैकाक्षरी परा ॥ ९ ॥

क्रीं क्रीं क्रीं मे ललाटं च कालिका खड्गधारिणी ।
हुं हुं पातु नेत्रयुग्मं ह्रीं ह्रीं पातु श्रुती मम ॥ १० ॥

दक्षिणे कालिके पातु घ्राणयुग्मं महेश्वरी ।
क्रीं क्रीं रसनां हुं हुं पातु कपोलकम् ॥ ११ ॥

वदनं सकलं ह्रीं ह्रीं स्वाहास्वरूपिणी ।
द्वाविंशत्यक्षरा स्कन्धौ महाविद्या सुखप्रदा ॥ १२ ॥

खड्गमुण्डधरा काली सर्वाङ्गमभितोऽवतु ।
क्रीं क्रीं हुं त्र्यक्षरा पातु चामुण्डा हृदयं मम ॥ १३ ॥

ऐं हूं ओं ऐं स्तनद्वन्द्वं ह्रीं फट्स्वाहा ककुत्स्थलम् ।
अष्टाक्षरी महाविद्या भुजौ पातु सकर्तृका ॥ १४ ॥

क्रीं क्रीं हूं हूं ह्रीं ह्रीं करौ पातु षडक्षरी मम ।
ओं ह्रीं क्रीं मे स्वाहा पातु कालिका जानुनी मम ॥ १५ ॥

कालीहृन्नाम विद्येयं चतुर्वर्गफलप्रदा ।
क्रीं नाभिं मध्यदेशं च दक्षिणे कालिकेऽवतु ॥ १६ ॥

क्रीं स्वाहा पातु पृष्ठं तु कालिका सा दशाक्षरी ।
ह्रीं ह्रीं दक्षिणे कालिके ह्रीं हूं पातु कटी द्वयम् ॥ १७ ॥

काली दशाक्षरी विद्या स्वाहा पातूरुयुग्मकम् ।
क्रीं हूं ह्रीं सा गुल्फं दक्षिणे कालिकेऽवतु ॥ १८ ॥

क्रीं हूं ह्रीं स्वाहा पातु चतुर्दशाक्षरी मम ।
खड्गमुण्डधरा काली वरदाभयधारिणी ॥ १९ ॥

विद्याभिः सकलाभिः सा सर्वाङ्गमभितोऽवतु ।
काली कपालिनी कुल्या कुरुकुल्या विरोधिनी ॥ २० ॥

विप्रचित्ता तथोग्रोग्रप्रभा दीप्ता घनत्विषः ।
नीला घना वलाका च मात्रा मुद्रा मिता च माम् ॥ २१ ॥

एताः सर्वाः खड्गधरा मुण्डमालाविभूषिताः ।
रक्षन्तु दिग्विदिक्षु मां ब्राह्मी नारायणी तथा ॥ २२ ॥

माहेश्वरी च चामुण्डा कौमारी चापराजिता ।
वाराही नारसिंही च सर्वाश्चामितभूषणाः ॥ २३ ॥

रक्षन्तु स्वायुधैर्दिक्षु विदिक्षु मां यथा तथा ।
इति ते कथितं दिव्यं कवचं परमाद्भुतम् ॥ २४ ॥

श्रीजगन्मङ्गलं नाम महामन्त्रौघविग्रहम् ।
त्रैलोक्याकर्षकं ब्रह्म कवचं मन्मुखोदितम् ॥ २५ ॥

गुरुपूजां विधायाथ गृह्णीयात् कवचं ततः ।
कवचं त्रिः सकृद्वापि यावज्जीवं च वा पुनः ॥ २६ ॥

एतच्छतार्धमावृत्य त्रैलोक्यविजयी भवेत् ।
त्रैलोक्यं क्षोभयत्येव कवचस्य प्रसादतः ॥ २७ ॥

महाकविर्भवेन्मासात् सर्वसिद्धीश्वरो भवेत् ।
पुष्पाञ्जलीन् कालिकायै मूलेनैव पठेत् सकृत् ॥ २८ ॥

शतवर्षसहस्राणां पूजायाः फलमाप्नुयात् ।
भूर्ज्जे विलिखितश्चैतत् स्वर्णस्थं धारयेद् यदि ॥ २९ ॥

शिखायां दक्षिणे बाहौ कण्ठे वा धारयेद् यदि ।
त्रैलोक्यं मोहयेत् क्रोधात् त्रैलोक्यं चूर्णयेत् क्षणात् ॥ ३० ॥

पुत्रवान् धनवान् श्रीमान् नानाविद्यानिधिर्भवेत् ।
ब्रह्मास्त्रादीनि शस्त्राणि तद्गात्रस्पर्शनात्ततः ॥ ३१ ॥

नाशमायान्ति या नारी वन्ध्या वा मृतपुत्रिणी ।
कण्ठे वा वामबाहौ वा कवचस्य च धारणात् ॥ ३२ ॥

बह्वपत्या जीववत्सा भवत्येव न संशयः ।
न देयं परशिष्येभ्यो ह्यभक्तेभ्यो विशेषतः ॥ ३३ ॥

शिष्येभ्यो भक्तियुक्तेभ्यश्चान्यथा मृत्युमाप्नुयात् ।
स्पर्द्धामुद्धूय कमला वाग्देवी तन्मन्दिरे वसेत् ॥ ३४ ॥

पौत्रान्तं स्थैर्यमास्थाय निवसत्येव निश्चितम् ।
इदं कवचमज्ञात्वा यो भजेत् कालिदक्षिणाम् ॥ ३५ ॥

शतलक्षं प्रजप्त्वा हि तस्य विद्या न सिध्यति ।
स शस्त्रघातमाप्नोति सोऽचिरान्मृत्युमाप्नुयात् ॥ ३६ ॥

॥ इति भैरवतन्त्रे भैरव-भैरवीसंवादे काल्याः कवचं सम्पूर्णम् ॥

## महानिर्वाणतन्त्रे कालिकाकवचम्[1]

श्रीसदाशिव उवाच—

कथितं परमं ब्रह्मप्रकृतेः स्तवनं महत् ।
आद्यायाः श्रीकालिकायाः कवचं शृणु साम्प्रतम् ॥ ५५ ॥

त्रैलोक्यविजयस्यास्य कवचस्य ऋषिः शिवः ।
छन्दोऽनुष्टुब्देवता च आद्या काली प्रकीर्तिता ॥ ५६ ॥

मायाबीजं बीजमिति रमा शक्तिरुदाहृता ।
क्रीं कीलकं काम्यसिद्धौ विनियोगः प्रकीर्तितः ॥ ५७ ॥

ह्रीमाद्या मे शिरः पातु श्रीं काली वदनं मम ।
हृदयं क्रीं परा शक्तिः पायात्कण्ठं परात्परा ॥ ५८ ॥

नेत्रे पातु जगद्धात्री कर्णौ रक्षतु शंकरी ।
घ्राणं पातु महामाया रसनां सर्वमङ्गला ॥ ५९ ॥

दन्तान् रक्षतु कौमारी कपोलौ कमलालया ।
ओष्ठाधरौ क्षमा रक्षेच्चिबुकं चारुहासिनी ॥ ६० ॥

ग्रीवां पायात्कुलेशानी ककुत्पातु कृपामयी ।
द्वौ बाहू बाहुदा रक्षेत्करौ कैवल्यदायिनी ॥ ६१ ॥

स्कन्धौ कपर्दिनी पातु पृष्ठं त्रैलोक्यतारिणी ।
पार्श्वे पायादपर्णा मे कटिं मे कमठासना ॥ ६२ ॥

---

१. महानिर्वाणतन्त्रे सप्तम उल्लासे ५५-६६ श्लोकपर्यन्तम् ।

नाभौ पातु विशालाक्षी प्रजस्थानं प्रभावती ।
ऊरू रक्षतु कल्याणी पादौ मे पातु पार्वती ॥ ६३ ॥

जयदुर्गावतु प्राणान्सर्वाङ्गं सर्वसिद्धिदा ।
रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन च ॥ ६४ ॥

तत्सर्वं मे सदा रक्षेदाद्या काली सनातनी ।
इति ते कथितं दिव्यं त्रैलोक्यविजयाभिधम् ॥ ६५ ॥

कवचं कालिकादेव्या आद्यायाः परमाद्भुतम् ।
पूजाकाले पठेद्यस्तु आद्याधिकृतमानसः ॥ ६६ ॥

# काली-रहस्ये काली-हृदयम्

श्रीमहाकाल उवाच—

महाकौतूहल-स्तोत्रं हृदयाख्यं महोत्तमम् ।
शृणु प्रिये ! महागोप्यं दक्षिणायाः सुगोपितम् ।। १ ।।

अवाच्यमपि वक्ष्यामि तव प्रीत्या प्रकाशितम् ।
अन्येभ्यः कुरु गोप्यं च सत्यं सत्यं च शैलजे ।। २ ।।

श्रीदेव्युवाच—

कस्मिन् युगे समुत्पन्नं केन स्तोत्रं कृतं पुरा ।
तत्सर्वं कथ्यतां शम्भो ! महेश्वर ! दयानिधे ।। ३ ।।

श्रीमहाकाल उवाच—

पुरा प्रजापतेः शीर्षश्छेदनं कृतवानहम् ।
ब्रह्महत्याकृतैः पापैर्भैरवत्वं ममागतम् ।। ४ ।।

ब्रह्महत्याविनाशाय कृतं स्तोत्रं मया प्रिये ! ।
कृत्याविनाशकं स्तोत्रं ब्रह्महत्यापहारकम् ।। ५ ।।

विनियोगः—

ओम् अस्य श्रीदक्षिणकाल्या हृदयस्तोत्रस्य श्रीमहाकाल

ऋषिः, उष्णिक् छन्दः, श्रीदक्षिणकालिका देवता, क्रीं बीजम्, ह्रीं शक्तिः, नमः कीलकम्, सर्वत्र सदा जपे विनियोगः ।

हृदयादिन्यासः—

ओं क्रां हृदयाय नमः, ओं क्रीं शिरसे स्वाहा, ओं क्रूं शिखायै वषट्, ओं क्रैं कवचाय हुम्, ओं क्रौं नेत्रत्रयाय वौषट्, ओं क्रः अस्त्राय फट् ।

ध्यानम्—

ध्यायेत् कालीं महामायां त्रिनेत्रां बहुरूपिणीम् ।
चतुर्भुजां ललज्जिह्वां पूर्णचन्द्रनिभाननाम् ॥ १ ॥

नीलोत्पलदलप्रख्यां शत्रुसंघविदारिणीम् ।
नरमुण्डं तथा खड्गं कमलं वरदं तथा ॥ २ ॥

बिभ्राणां रक्तवदनां दंष्ट्रालीं घोररूपिणीम् ।
अट्टाट्टहासनिरतां सर्वदा च दिगम्बराम् ॥ ३ ॥

शवासन-स्थितां देवीं मुण्डमालाविभूषिताम् ।
इति ध्यात्वा तु महादेवीं ततस्तु हृदयं पठेत् ॥ ४ ॥

ओं कालिका घोररूपाद्या सर्वकामफलप्रदा ।
सर्वदेवस्तुता देवी शत्रुनाशं करोतु मे ॥ ५ ॥

ह्रीं ह्रीं स्वरूपिणी श्रेष्ठा त्रिषु लोकेषु दुर्लभा ।
तव स्नेहान्मयाख्यातं न देयं यस्य कस्यचित् ॥ ६ ॥

अथ ध्यानं प्रवक्ष्यामि निशामय परात्मिके ।
यस्य विज्ञानमात्रेण जीवन्मुक्तो भविष्यति ।। ७ ।।

नागयज्ञोपवीतां च चन्द्रार्धकृतशेखराम् ।
जटाजूटां च संचिन्त्य महाकालसमीपगाम् ।। ८ ।।

एवं न्यासादयः सर्वे ये प्रकुर्वन्ति मानवाः ।
प्राप्नुवन्ति च ते मोक्षं सत्यं सत्यं वरानने ।। ९ ।।

यन्त्रं शृणु परं देव्याः सर्वार्थसिद्धिदायकम् ।
गोप्याद् गोप्यतरं गोप्यं गोप्याद् गोप्यतरं महत् ।। १० ।।

त्रिकोणं पञ्चकं चाष्टकमलं भूपुरान्वितम् ।
मुण्डपङ्क्ति च ज्वालां च कालीयन्त्रं सुसिद्धिदम् ।। ११ ।।

मन्त्रं तु पूर्वकथितं धारयस्व सदा प्रिये ।
देव्या दक्षिणकाल्यास्तु नाममालां निशामय ।। १२ ।।

काली दक्षिणकाली च कृष्णरूपा परात्मिका ।
मुण्डमाली विशालाक्षी सृष्टिसंहारकारिका ।। १३ ।।

स्थितिरूपा महामाया योगनिद्रा भगात्मिका ।
भगसर्पिः पानरता भगोद्योता भगाङ्गजा ।। १४ ।।

आद्या सदा नवा घोरा महातेजाः करालिका ।
प्रेतवाहा सिद्धिलक्ष्मीरनिरुद्धा सरस्वती ।। १५ ।।

एतानि नाममाल्यानि ये पठन्ति दिने दिने ।
तेषां दासस्य दासोऽहं सत्यं सत्यं महेश्वरि ।। १६ ।।

कालीं कालहरां देवीं कङ्कालबीजरूपिणीम् ।
काकरूपां कलातीतां कालिकां दक्षिणां भजे ॥ १७ ॥

कुण्डगोलप्रियां देवीं स्वयम्भूकुसुमे रताम् ।
रतिप्रियां महारौद्रीं कालिकां प्रणमाम्यहम् ॥ १८ ॥

दूतीप्रियां महादूतीं दूतीयोगेश्वरीं पराम् ।
दूतीयोगोद्भवरतां दूतीरूपां नमाम्यहम् ॥ १९ ॥

क्रीं-मन्त्रेण जलं जप्त्वा सप्तधा सेचनेन तु ।
सर्वे रोगा विनश्यन्ति नात्र कार्या विचारणा ॥ २० ॥

क्रीं स्वाहान्तैर्महामन्त्रैश्चन्दनं साधयेत्ततः ।
तिलकं क्रियते प्राज्ञैर्लोको वश्यो भवेत्सदा ॥ २१ ॥

क्रीं हूं ह्रीं मन्त्रजप्तेन चाक्षतं सप्तभिः प्रिये ।
महाभयविनाशश्च जायते नात्र संशयः ॥ २२ ॥

क्रीं ह्रीं हूं स्वाहामन्त्रेण श्मशानाग्नि च मन्त्रयेत् ।
शत्रोर्गेहे प्रतिक्षिप्त्वा शत्रोर्मृत्युर्भविष्यति ॥ २३ ॥

हूं ह्रीं क्रीं चैव उच्चाटे पुष्पं संशोध्य सप्तधा ।
रिपूणां चैव चोच्चाटन्नयत्येव न संशयः ॥ २४ ॥

आकर्षणे च क्रीं क्रीं क्रीं जप्त्वाऽक्षतं प्रतिक्षिपेत् ।
सहस्रयोजनस्था च शीघ्रमागच्छति प्रिये ॥ २५ ॥

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं च कज्जलं शोधितं तथा ।
तिलकेन जगन्मोहं सप्तधा मन्त्रमाचरेत् ॥ २६ ॥

हृदयं परमेशानि सर्वपापहरं परम् ।
अश्वमेधादिदानानां कोटिकोटिगुणोत्तरम् ॥ २७ ॥

कन्यादानादिदानानां कोटिकोटिगुणं फलम् ।
दूतीयागादियागानां कोटिकोटिफलं स्मृतम् ॥ २८ ॥

गङ्गादिसर्वतीर्थानां फलं कोटिगुणं स्मृतम् ।
एकधा पाठमात्रेण सत्यं सत्यं मयोदितम् ॥ २९ ॥

कौमारीस्वेष्टरूपेण पूजां कृत्वा विधानतः ।
पठेत् स्तोत्रं महेशानि जीवन्मुक्तः स उच्यते ॥ ३० ॥

रजस्वलाभगं दृष्ट्वा पठेदेकाग्रमानसः ।
लभते परमं स्थानं देवीलोके वरानने ॥ ३१ ॥

महादुःखे महारोगे महासंकटके दिने ।
महाभये महाघोरे पठेत् स्तोत्रं महोत्तमम् ॥
सत्यं सत्यं पुनः सत्यं गोपयेन्मातृजारवत् ॥ ३२ ॥

॥ इति कालीरहस्ये कालीहृदयं समाप्तम् ॥

# कालीपटलम्

अथ कालीमनून् वक्ष्ये सद्यो वाक्-सिद्धिदायकम् ।
आराधितैर्यैः सर्वेष्टं प्राप्नुवन्ति जना भुवि ॥ १ ॥

ब्रह्मरेफौ वामनेत्रचन्द्रारूढौ मनुर्मतः ।
एकाक्षरो महाकाल्याः सर्वसिद्धिप्रदायकः ॥ २ ॥

बीजं दीर्घयुतश्चक्री पिनाकी नेत्रसंयुतः ।
क्रोधीशो भगवान् स्वाहा खण्डार्णो मन्त्र ईरितः ॥ ३ ॥

काली कूर्चं तथा लज्जा त्रिवर्णो मनुरीरितः ।
हुं फट् ततश्च पञ्चार्णः स्वाहान्तः सप्तवर्णकः ॥ ४ ॥

कूर्चद्वयं भयं काल्या मायायुग्मं च दक्षिणे ।
कालिके पूर्वबीजानि स्वाहामन्त्रो वशीकृतः ॥ ५ ॥

मन्त्रराजः पुनः प्रोक्तः बीजसप्तकमुत्सृजेत् ।
तिथिवर्णो महामन्त्र उपास्तिः पूर्ववन्मता ॥ ६ ॥

न चात्र सिद्धिसाध्यादिशोधनं मनसापि वा ।
न यत्नातिशयः कश्चित् पुरश्चर्यानिमित्तकः ॥ ७ ॥

विद्याराज्ञीस्मृतेरेव सिद्ध्यष्टकमवाप्नुयात् ।
भैरवोऽस्य ऋषिश्छन्द उष्णिक् काली तु देवता ॥ ८ ॥

बीजं माया दीर्घवर्मशक्तिरुक्ता मनीषिभिः ।
षड्दीर्घाढ्याद्यबीजेन विद्याया अङ्गमीरितम् ॥ ९ ॥

# भैरवीतन्त्रे कालीकवचम्

**भैरव उवाच—**

कालिका या महाविद्या कथिता सुरदुर्लभा ।
तथापि हृदये शल्यमस्ति देवि कृपां कुरु ॥ १ ॥

कवचं मे महादेवि कथयस्वानुकम्पया ।
यदि न कथ्यते मातर्विमुञ्चामि ततस्तनुम् ॥ २ ॥

**देव्युवाच—**

शङ्का मे जायते वत्स तव स्नेहात्प्रकाश्यते ।
न वक्तव्यं न वक्तव्यमतिगुह्यतमं महत् ॥ ३ ॥

कालिका जगतां माता शोकदुःखविनाशिनी ।
विशेषतः कलियुगे महापातकहारिणी ॥ ४ ॥

काली मे पुरतः पातु कुरुकुल्ला तथोत्तरे ।
विरोधिनी शिरः पातु विप्रचित्ता तु चक्षुषी ॥ ५ ॥

उग्रा मे नासिकां पातु कर्णौ चाग्रप्रभा तथा ।
वदनं पातु मे दीप्ता लीला च चिबुकं सदा ॥ ६ ॥

घना ग्रीवां सदा पातु वलाका बाहुयुग्मकम् ।
मात्रा पातु करद्वन्द्वं वक्षो मुद्रा सदावतु ॥ ७ ॥

मिता पातु स्तनद्वन्द्वं योनिमण्डलदेवता ।
ब्राह्मी मे जठरं पातु नाभिं नारायणी तथा ।। ८ ।।

ऊरू माहेश्वरी नित्यं चामुण्डा पातु लिङ्गकम् ।
अपराजिता च पादौ मे वाराही पातु चाङ्गुलीः ।। ९ ।।

सन्धिस्थानं नारसिंही पात्रस्था देवतावतु ।
रक्षाहीनन्तु यत्स्थानं वर्जितं कवचेन तु ।। १० ।।

तत्सर्वं रक्ष मे देवि कालिके घोरदक्षिणे ।
ऊर्ध्वमधस्तथा दिक्षु पातु देवी स्वयं वपुः ।। ११ ।।

हिंस्रेभ्यः सर्वदा पातु साधकेभ्यो जलादिकात् ।
दक्षिणा कालिका देवी व्यापकं मे सदावतु ।। १२ ।।

इदं कवचमज्ञात्वा यो भजेद् घोरदक्षिणाम् ।
न पूजाफलमाप्नोति रिपुस्तस्य पदे पदे ।। १३ ।।

कवचेनावृतो नित्यं यत्र यत्रैव गच्छति ।
तत्र तत्र जयस्तस्य न क्षोभं विद्यते क्वचित् ।। १४ ।।

●

# महानिर्वाणतन्त्रे सप्तमोल्लासे कालीकवचम्

ह्रीमाद्या मे शिरः पातु श्रीं काली वदनं मम ।
हृदयं क्रीं परा शक्तिः पायात् कण्ठं परात्परा ॥ ५८ ॥
नेत्रे पातु जगद्धात्री कर्णौ रक्षतु शाङ्करी ।
घ्राणं पातु महामाया रसनां सर्वमङ्गला ॥ ५९ ॥
दन्तान् रक्षतु कौमारी कपोलौ कमलालया ।
ओष्ठाधरौ क्षमा रक्षेत् चिबुकं चारुहासिनी ॥ ६० ॥
ग्रीवां पायात् कुलेशानी ककुत् पातु कृपामयी ।
द्वौ बाहू बाहुदा रक्षेत् करौ कैवल्यदायिनी ॥ ६१ ॥
स्कन्धौ कपर्दिनी पातु पृष्ठं त्रैलोक्यतारिणी ।
पार्श्वे पायादपर्णा मे कटिं मे कमठासना ॥ ६२ ॥
नाभौ पातु विशालाक्षी प्रजास्थानं प्रभावती ।
ऊरू रक्षतु कल्याणी पादौ मे पातु पार्वती ॥ ६३ ॥
जयदुर्गाऽवतु प्राणान् सर्वाङ्गं सर्वसिद्धिदा ।
रक्षाहीनन्तु यत् स्थानं वर्जितं कवचेन च ॥ ६४ ॥
तत् सर्वं मे सदा रक्षेदाद्या काली सनातनी ।
इति ते कथितं देवि त्रैलोक्यविजयाभिधम् ॥ ६५ ॥
कवचं कालिका देव्या आद्यायाः परमाद्भुतम् ।
पूजाकाले पठेद् यस्तु आद्याधिकृतमानसः ॥ ६६ ॥

[ इतः परं फलस्तुतिरस्ति, सा तु तत्रैव द्रष्टव्या ]

# श्यामाकवचम्

भैरव्युवाच—

कालीपूजा श्रुता नाथ भावाश्च विविधाः प्रभो ।
इदानीं श्रोतुमिच्छामि कवचं पूर्वसूचितम् ॥
त्वमेव शरणं नाथ त्राहि मां दुःखसङ्कटात् ॥ १ ॥

भैरव उवाच—

रहस्यं शृणु वक्ष्यामि भैरवि प्राणवल्लभे ।
श्रीजगन्मङ्गलं नाम कवचं मन्त्रविग्रहम् ॥
पठित्वा धारयित्वा वा त्रैलोक्यं मोहयेत् क्षणात् ॥ २ ॥

नारायणोऽपि यत् कृत्वा नारी भूत्वा महेश्वरम् ।
योगेशं क्षोभमनयद् यत्कृत्वा च रघूद्वहः ॥
वरदृप्तान् जघानैव रावणादिनिशाचरान् ।
यस्य प्रसादादीशोऽहं त्रैलोक्यविजयी प्रभुः ॥ ३ ॥

धनाधिपः कुबेरोऽपि सुरेशोऽभूच्छचीपतिः ।
एवं हि सकला देवाः सर्वसिद्धीश्वराः प्रिये ॥ ४ ॥

श्रीजगन्मङ्गलस्यापि कवचस्य ऋषिः शिवः ।
छन्दोऽनुष्टुब् देवता च कालिका दक्षिणेरिता ॥
जगतां मोहने दुष्टनिग्रहे भक्तिमुक्तिषु ।
योषिदाकर्षणे चैव विनियोगः प्रकीर्तितः ॥ ५ ॥

ओं शिरो मे कालिका पातु क्रींकारैकाक्षरी परा।
क्रीं क्रीं क्रीं मे ललाटं च कालिका खड्गधारिणी॥ ६ ॥

हूं हूं पातु नेत्रयुग्मं ह्रीं ह्रीं पातु श्रुती मम।
दक्षिणे कालिके पातु घ्राणयुग्मं महेश्वरी॥ ७ ॥

क्रीं क्रीं क्रीं रसनां पातु हूं हूं पातु कपोलकम्।
वदनं सकलं पातु ह्रीं ह्रीं स्वाहास्वरूपिणी॥ ८ ॥

द्वाविंशत्यक्षरी स्कन्धौ महाविद्या सुखप्रदा।
खड्गमुण्डधरा काली सर्वाङ्गमभितोऽवतु॥ ९ ॥
क्रीं हूं ह्रीं त्र्यक्षरी पातु चामुण्डा हृदयं मम।
ऐं हूं ओं ऐं स्तनद्वन्द्वं ह्रीं फट् स्वाहा ककुत्स्थलम्॥ १० ॥

अष्टाक्षरी महाविद्या भुजौ पातु सकर्तृका।
क्रीं क्रीं हूं हूं ह्रीं ह्रीं करौ षडक्षरी मम॥ ११ ॥

क्रीं नाभिं मध्यदेशं दक्षिणे कालिकेऽवतु।
क्रीं स्वाहा पातु पृष्ठं तु कालिका सा दशाक्षरी॥ १२ ॥

ह्रीं ह्रीं दक्षिणे कालिके हूं ह्रीं पातु कटिद्वयम्।
काली दशाक्षरी विद्या स्वाहा पातूरुयुग्मकम्॥ १३ ॥

ओं ह्रीं क्रीं मे स्वाहा पातु कालिका जानुनी सदा (मम)।
कालीहृन्नामविद्येयं चतुर्वर्गफलप्रदा॥ १४ ॥

क्रीं हूं ह्रीं पातु सा गुल्फं दक्षिणे कालिकेऽवतु।
क्रीं हूं ह्रीं स्वाहा पातु चतुर्दशाक्षरी मम॥ १५ ॥

खड्गमुण्डधरा काली वरदाभयधारिणी ।
विद्याभिः सकलाभिः सा सर्वाङ्गमभितोऽवतु ॥ १६ ॥

काला कपालिनी कुल्ला कुरुकुल्ला विरोधिनी ।
विप्रचित्ता तथोग्रोग्रप्रभा दीप्ता घनत्विषः ॥ १७ ॥

नीला घना बलाका च मात्रा मुद्रा मिता च माम् ।
एताः सर्वाः खड्गधरा मुण्डमालाविभूषिताः ॥ १८ ॥

रक्षन्तु मां दिग्विदिक्षु ब्राह्मी नारायणी तथा ।
माहेश्वरी तु चामुण्डा कौमारी चापराजिता ॥ १९ ॥

वाराही नारसिंही च सर्वाश्चामितभूषणाः ।
रक्षन्तु सायुधैर्दिक्षु विदिक्षु मां यथा तथा ॥ २० ॥

इत्येवं कथितं दिव्यं कवचं परमाद्भुतम् ।
श्रीजगन्मङ्गलं नाम महामन्त्रौघविग्रहम् ॥ २१ ॥

त्रैलोक्याकर्षणं ब्रह्मकवचं मन्मुखोदितम् ।
गुरुपूजां विधायाथ गृह्णीयात् कवचं ततः ॥ २२ ॥

कवचं त्रिः सकृद्वापि यावज्जीवञ्च वा पुनः ।
एतच्छतार्धमावृत्य त्रैलोक्यविजयी भवेत् ॥ २३ ॥

त्रैलोक्यं क्षोभयत्येव कवचस्य प्रसादतः ।
महाकविर्भवेन्मासात् सर्वसिद्धीश्वरो भवेत् ॥ २४ ॥

पुष्पाञ्जलीन् कालिकायै मूलेनैव पठेत् सकृत् ।
शतवर्षसहस्राणां पूजायाः फलमाप्नुयात् ॥ २५ ॥

भूर्जे विलिखितश्चैतत् स्वर्णस्थं धारयेद् यदि ।
शिखायां दक्षिणे बाहौ कण्ठे वा धारयेद् यदि ॥ २६ ॥

त्रैलोक्यं मोहयेत् क्रोधात् त्रैलोक्यं चूर्णयेत् क्षणात् ।
बह्वपत्या जीववत्सा भवत्येव न संशयः ॥ २७ ॥

न देयं परशिष्येभ्यो ह्यभक्तेभ्यो विशेषतः ।
शिष्येभ्यो भक्तियुक्तेभ्यश्चान्यथा मृत्युमाप्नुयात् ॥ २८ ॥

स्पर्धामुद्धूय कमला वाग्देवीमन्दिरे मुखे ।
पौत्रान्तं स्थैर्यमास्थाय निवसत्येव निश्चितम् ॥ २९ ॥

देयं कवचमज्ञात्वा योजयेत् कालि(घोर)दक्षिणाम् ।
शतलक्षं प्रजप्त्वा हि तस्य विद्या न सिध्यति ॥ ३० ॥

स शस्त्रघातमाप्नोति सोऽचिरान्मृत्युमाप्नुयात् ॥ ३१ ॥

॥ इति भैरवतन्त्रे भैरवीभैरवसंवादे कालीकल्पे जगन्मङ्गलं नाम श्यामाकवचं समाप्तम् ॥

# कालिकास्तवेन्द्रम्

नमामि ते कालि पदारविन्दं
त्वामाश्रयामि प्रणमामि नित्यम् ।
ध्यायामि गायामि वदामि नित्य-
मेवं कुरु त्वं मम चित्तवृत्तिम् ॥ १ ॥

सीमन्तिनीसुन्दरि ! कान्तिकम्रा
कादम्बरी घूर्णितनेत्रपद्मा ।
कदम्बमालाञ्चितकेशपाशा
कलावती कौलिकचक्रमध्ये ॥ २ ॥

कन्दर्पदर्पादरदीर्घनेत्रा
कुमुद्वती बान्धवचारुनेत्रा ।
कलाकलापा कलहंसनादा
कलावती कामकलाविलासा ॥ ३ ॥

यत्रैव सङ्गः कुलसुन्दरीणां
तत्रैव गङ्गा यमुना च तत्र ।
वाराणसी मोक्षकरी च तत्र
तत्रैव गङ्गाम्बुधिसङ्गमश्च ॥ ४ ॥

पादारविन्दं कुलसुन्दरीणां
देशान्तरे भावितसिद्धमार्गे ।
विहारलोकस्तरुणानुभावं
गृहान्धकूपे विमलं विभाति ॥ ५ ॥

कुरङ्गनेत्रातिकुरङ्गनेत्रा
शिवा भवानीति शिवा भवानिः ।
मृगेन्द्रमध्यातिमृगेन्द्रमध्या
गौरीति गौरीति वचस्तु भूयात् ॥ ६ ॥

त्वं तारिणी नारकहारिणी त्वं
त्वं कालिका तारणकारिका त्वम् ।
वैरोचिनी दुःखविमोचिनी त्वं
त्वं भैरवी त्वं भुवनेश्वरी त्वम् ॥ ७ ॥

दिगम्बरी पीनपयोधरा सा
स्मराभिलाषा परिमुक्तकेशा ।
सदा शिवाङ्कस्थितिरर्चिता सा
श्यामाभिरामा परिपूर्णकामा ॥ ८ ॥

श्रीसुन्दरीणां चरणारविन्दं
विना न मन्ये न च पूजयामि ।
न च जल्पयामो न च कल्पयामो
न चाश्रयामो न च देवमन्यम् ॥ ९ ॥

जपावली यावकजालवर्णा
सौदामिनी दाडिमबीजवर्णा ।
सुवर्णकाञ्ची परिबद्धमध्या
सिद्धार्चिता सिद्धमयी विभाति ।। १० ।।

कादम्बरीपानपरायणानां
कुलाङ्गनानां वदनारविन्दम् ।
ध्यानं ममैतत् स सदैव भूयात्
तद्भावनाभावितभूरिभक्तिः ।। ११ ।।

त्वमेव बुद्धिश्च त्वमेव वृद्धिस्त्वमेव
सिद्धिश्च त्वमेव ऋद्धिः ।
(त्वमेव बुद्धिस्त्वमिहैव वृद्धिः
त्वमेव सिद्धिस्त्वमिहैव ऋद्धिः ।)
प्रमात्मिका त्वं परमात्मिका त्वं
प्रमाणमाता परमेश्वरी त्वम् ।। १२ ।।

त्वं कार्तिकी कौतुकमूर्तिराद्या
मयूरपृष्ठार्पितपादपद्मा ।
चन्द्रानना चारुचकोरनेत्रा
किं स्तौमि मातस्तव पादपद्मे ।। १३ ।।

अत्युग्रदन्ताग्रधृता च नित्यं
घोरानना घोरगभीरनादा ।
संहारनिस्तारविधानकर्त्री
वाराहि मातः स्तव एव सर्वम् ।। १४ ।।

कालस्त्वमेव त्वमपीह काष्ठा
त्वमेव चात्मा च मनस्त्वमेव ।
श्रीब्रह्मशक्तिः खलु सत्यरूपा
ज्योतिःस्वरूपा जगतः करोषि ॥ १५ ॥

त्वं वैष्णवी विष्णुस्वरूपिणी त्वं
त्रैलोक्यरक्षाकरणैकदक्षा ।
खगेन्द्ररूढा घननीलवर्णा
विश्वेशरक्षानिलया त्वमेव ॥ १६ ॥

नानाकलाकेलिकुलालसङ्गी
पीनस्तनी चन्द्रमुखी कदाचित् ।
न विस्मरामो न च विस्मरामो
न विस्मरामः कलहंसनादाम् ॥ १७ ॥

गतिस्त्वमेवासि गतिस्त्वमेव
मतिस्त्वमेवासि मतिस्त्वमेव ।
धृतिस्त्वमेवासि धृतिस्त्वमेव
श्रुतिस्त्वमेवासि श्रुतिस्त्वमेव ॥ १८ ॥

तमाललीलाञ्चितमुण्डमाला
काली करालाननलोलजिह्वा ।
विमर्दयन्ती जगदादिमाता
प्रचण्डचण्डासुरमुण्डखण्डान् ॥ १९ ॥

चतुर्भुजाप्यष्टभुजा त्वमेव
षड्बाहुका षोडशहस्तयुक्ता ।
सहस्रहस्ता शतपाणिवल्ली
त्वं कालिके त्वं दशहस्तकासि ॥ २० ॥

युगोऽपि वर्षः कल्पो मासो
नक्तं दिवा त्वं प्रलयो मुहूर्त्तम् ।
त्वं कालरात्री विरला त्वमेव
राकार्णवी कालमयी च काली ॥ २१ ॥

वर्णेश्वरी त्वं पुरवासिनी त्वं
पुरान्तका त्वं परिपूर्णता त्वम् ।
त्वमुग्रतारैकजटा त्वमेव
सुसम्मुखी नीलसरस्वती च ॥ २२ ॥

सर्पासना सर्पविभूषणैका
धूमावती त्वं भवसीति मातः ।
मातङ्गिनी त्वं वगला च माता
त्वमेव काली करवालिनी च ॥ २३ ॥

आधारलग्नं खलु मेरुदण्डं
तद्धामयुक्तापि च पिङ्गला च ।
इडा च दक्षेषु निरन्तरेषु
सुषुम्नमध्या ग्रथितार्चकस्य ॥ २४ ॥

चित्रान्तरस्था खलु वज्रनाडी
मृणालतन्त्वर्धसुशूकसूक्ष्मा ।
तन्मध्यगा येन विसूक्ष्मरूपा
सा ब्रह्मनाडी तदनन्तरेऽपि ॥ २५ ॥

सहस्रपत्राम्बुजमेयगात्रा
सुधासुरापानरतिप्रयुक्ता ।
त्वं सर्वजीवा जननीस्वरूपा
ब्रह्मस्वरूपा भवदेहमध्या ॥ २६ ॥

त्वं कुण्डलिन्यर्ककोटीन्दुदीप्ता
कोटीन्दुकान्तिर्भुजगप्रमाणा ।
आधारयुक्ता कुलकुण्डसुप्ता
प्यर्धस्वयम्भूवदनप्रकाशी ॥ २७ ॥

कात्यायनी कामकला जयन्ती
सवित्रि पूर्णा मधुमांसलुब्धा ।
त्वमेव पूर्णा वनदुर्गका च
कामात्मिका कामवती त्वमेव ॥ २८ ॥

गणेश्वरः षड्वदनः कुबेरो
धनेशपुत्रो रविजो जयन्तः ।
त्वं चित्रगुप्तश्च सुकर्मकर्ता
यतीश्वरी देवमयी त्वमेव ॥ २९ ॥

त्वमेव सर्वासि वदामि तत्त्वं
त्वमेव सर्वस्तवकस्त्वमेव ।
लिङ्गोऽप्यलिङ्गो यत एव सर्वे
यतस्ततः सर्वमयी त्वमेव ॥ ३० ॥

इदं स्तवेन्द्रं नियतं च देव्या
भक्त्यैकचिह्नं सततं पठेद् यः ।
पिकस्वरः सर्वजनानुरागी
दाता पुनीतो गुरुदेवभक्तः ॥ ३१ ॥

विघ्ने गणेशो भयदुर्गनाशो
भोगी सुखी पूरितलोकभर्ता ।
सदामुदः सर्वगणेश्वरोऽपि
दयाचितो रत्नयुतश्चिरायुः ॥ ३२ ॥

शतावधानो रणकालरुद्रो
लोकाभिरामो भुवि सर्वदा सः ।
जित्वाग्रवाणीं युवतीं सृजन्तीं
सुशीलयन्तीं परलोकविद्यः ॥ ३३ ॥

॥ इति श्रीरुद्रयामले कालिकास्तवेन्द्रं सम्पूर्णम् ॥

# ब्रह्मगाथा

नमामि कृष्णरूपिणीं कृशाङ्गयष्टिधारिणीम् ।
समस्ततत्त्वसागरामपारगह्वरां शिवाम् ॥ १ ॥

प्रवालकन्धराञ्चितां स्फुरच्छशाङ्कशेखराम् ।
ललाटनेत्रभास्वरां ज्वलत्प्रदीप्तमूर्धजाम् ॥ २ ॥

महेशकश्यपार्चितां सनत्कुमारसंस्तुताम् ।
सुरासुरेन्द्रवन्दितां यथार्थनिर्मिताद्भुताम् ॥ ३ ॥

अतर्क्यचारुवेष्टितां विकारदोषवर्जिताम् ।
मुमुक्षुभिर्विचेष्टितां विशेषतत्त्वशोचिताम् ॥ ४ ॥

नरास्थिनिर्मितस्रजं मृगेन्द्रवाहनाग्रजाम् ।
प्रदुष्टसत्त्वभीषणां सदोदितैकलक्षणाम् ॥ ५ ॥

सुलक्षणां विलक्षणां भुजङ्गहारहारिणीम् ।
कपालखड्गधारिणीं सुधार्मिकोपकारिणीम् ॥ ६ ॥

सुरेन्द्रवैरिघातिनीं कुठारचापपाशिनीम् ।
कृतान्तकामवासिनीं सुधाकपालमालिनीम् ॥ ७ ॥

श्मशानभूमिवासिनीं सुनित्यकल्पशाखिनीम् ।
द्विजेन्द्रवृन्दतारिणीं सहस्रसूर्यसन्निभाम् ॥ ८ ॥

धनञ्जयैकवत्सलामशुद्धकालचञ्चलाम् ।
सुनित्यतृप्तिमुज्ज्वलां प्रतापिनीं प्रजावतीम् ॥ ९ ॥

नमामि मातरं सखीं सुकर्मकारणे गतिम् ।
हरप्रियां च पार्वतीमनन्तशक्तिसम्पदाम् ॥ १० ॥

यशःसु भुक्तिमुक्तिदां नमोऽस्तु ते पराम्बिके ।
शिवे द्विजे भयात्मिके जयेश्वरि त्रिलोचने ॥ ११ ॥

प्रसीद देवि पाहि मां जपन्ति च स्मरन्ति च ।
स्तुवन्ति ये नरेश्वरा भवन्त्यमोघवाञ्छिताः ॥ १२ ॥

सदैव ते भवद्विषो नराः परे शिवेऽधुना ।
प्रसीद मां करोमि किं नितान्तमोहितात्मना ॥ १३ ॥

वृथा विचेष्टितस्य मे कुरु प्रसादमच्युतम् ।
यदाश्रयोऽहमम्बिके लभेय सद्गतिं पराम् ॥ १४ ॥

इमां स्तुतिं मयेरितां पठन्ति देवि साधकाः ।
न ते पुनः सुदुस्तरे पतन्ति मोहसागरे ॥ १५ ॥

॥ इति ब्रह्मगाथा समाप्ता ॥

## काली-रहस्ये ब्रह्मकृतः कालीस्तवः

नमामि कृष्णरूपिणीं कृशाङ्गयष्टिधारिणीम् ।
समग्रतत्त्वसागरामपारपारगह्वराम् ॥ १ ॥

शिवां प्रभासमुज्ज्वलां स्फुरच्छशाङ्कशेखराम् ।
ललाटरत्नभास्वरां जगत्प्रदीप्तिभास्कराम् ॥ २ ॥

महेन्द्रकश्यपार्चितां सनत्कुमारसंस्तुताम् ।
सुरासुरेन्द्रवन्दितां यथार्थनिर्मलाद्भुताम् ॥ ३ ॥

अतर्क्यरोचिरूर्जितां विकारदोषवर्जिताम् ।
मुमुक्षुभिर्विचिन्तितां विकारदोषवर्जिताम् ॥ ४ ॥

मृतास्थिनिर्मितस्रजां मृगेन्द्रवाहनाग्रजाम् ।
सुशुद्धतत्त्वतोषणां त्रिवेदसारभूषणाम् ॥ ५ ॥

भुजङ्गहारहारिणीं कपालखण्डधारिणीम् ।
सुधार्मिकोपकारिणीं सुरेन्द्रवैरिघातिनीम् ॥ ६ ॥

कुठारपाशचापिनीं कृतान्तकामभेदिनीम् ।
शुभां कपालमालिनीं सुवर्णकल्पशाखिनीम् ॥ ७ ॥

श्मशानभूमिवासिनीं द्विजेन्द्रमौलिभाविनीम् ।
तमोऽन्धकारयामिनीं शिवस्वभावकामिनीम् ॥ ८ ॥

सहस्रसूर्यराजिकां धनञ्जयोपकारिकाम् ।
सुशुद्धकालकन्दलां सुभृङ्गवृन्दमञ्जुलाम् ॥ ९ ॥

प्रजायिनीं प्रजावतीं नमामि मातरं सतीम् ।
स्वकर्मकारणे गतिं हरप्रियां च पार्वतीम् ।। १० ।।
अनन्तशक्ति-कान्तिदां यशोऽर्थ-भुक्तिमुक्तिदाम् ।
पुनः पुनर्जगद्धितां नमाम्यहं सुरार्चिताम् ।। ११ ।।
जयेश्वरि ! त्रिलोचने ! प्रसीद देवि ! पाहि माम् ।
जयन्ति च स्तुवन्ति ये शुभं लभन्त्यभीक्ष्णशः ।। १२ ।।
सदैव ते हतद्विषः परं भवन्ति सज्जुषः ।
ज्वरापहे शिवेऽधुना प्रशाधि मां करोमि किम् ।। १३ ।।
अतीव-मोहितात्मनो वृथा विचेष्टितस्य मे ।
तथा भवन्तु तावका यथैव चोषितालकाः ।। १४ ।।
इमां स्तुतिं मयेरितां पठन्ति कालिसाधकाः ।
न ते पुनः सुदुस्तरे पतन्ति मोहगह्वरे ।। १५ ।।

# कालीरहस्ये कालिकाष्टकम्

ध्यानम्—

गलद्-रक्तमुण्डावली-कण्ठमाला
महाघोररावा सुदंष्ट्रा कराला ।
विवस्त्रा श्मशानालया मुक्तकेशी
महाकाल-कामाकुला कालिकेयम् ॥ १ ॥

भुजे वामयुग्मे शिरोऽसी दधाना
वरं दक्षयुग्मेऽभयं वै तथैव ।
सुमध्याऽपि तुंगस्तनाभारनम्रा
लसद्रक्तसृक्कद्वया सुस्मितास्या ॥ २ ॥

शवद्वन्द्वकर्णावतंसा सुकेशी
लसत्प्रेतपाणि-प्रयुक्तैक-काञ्ची ।
शवाकार-मञ्चाधिरूढा शिवाभि–
श्चतुर्दिक्षु शब्दायमानाऽभिरेजे ॥ ३ ॥

विरञ्च्यादिदेवास्त्रयस्ते गुणास्त्रीन्
समाराध्य कालीं प्रधाना बभूवुः ।
अनादिं सुरादिं मखादिं भवादिं
स्वरूपं त्वदीयं न विन्दन्ति देवाः ॥ ४ ॥

जगन्मोहनीयं तु वाग्वादिनीयं
सुहृत्पोषिणीं शत्रुसंहारणीयम् ।
वचः स्तम्भनीयं किमुच्चाटनीयं
स्वरूपं त्वदीयं न विन्दन्ति देवाः ॥ ५ ॥

इयं स्वर्गदात्री पुनः कल्पवल्ली
मनोजांस्तु कामान् यथार्थं प्रकुर्यात् ।
कथा ते कृतार्था भवन्तीति नित्यं
स्वरूपं त्वदीयं न विन्दन्ति देवाः ॥ ६ ॥

सुरापानमत्ते ! सुभक्तानुरक्ते !
लसत्पूतचित्ते ! सदाविर्भवस्ते ।
जप-ध्यान-पूजा-सुधाधौतपंकाः
स्वरूपं त्वदीयं न विन्दन्ति देवाः ॥ ७ ॥

चिदानन्दकन्दं हसन्मन्दमन्दं
शरच्चन्दकोटि-प्रभापुञ्जबिम्बम् ।
मुनीनां कवीनां हृदि द्योतमानं
स्वरूपं त्वदीयं न विन्दन्ति देवाः ॥ ८ ॥

महामेघकाली सुरक्ताऽपि शुभ्रा
कदाचिद् विचित्राकृतिर्योगमाया ।
न बाला न वृद्धा न कामातुराऽपि
स्वरूपं त्वदीयं न विन्दन्ति देवाः ॥ ९ ॥

क्षमस्वापराधं महागुप्तभावं
मया लोकमध्ये प्रकाशीकृतं यत् ।
तव ध्यानपूतेन चापल्यभावात्
स्वरूपं त्वदीयं न विन्दन्ति देवाः ॥ १० ॥

फलश्रुतिः—

यदि ध्यानयुक्तः पठेद् यो मनुष्य-
स्तदा सर्वलोके विशालो भवेच्च ।
गृहे चाऽष्टसिद्धिर्मृते चापि मुक्तिः
स्वरूपं त्वदीयं न विन्दन्ति देवाः ॥ ११ ॥

## रुद्रयामले ७२पटले कालीस्तवनम्

श्री-आनन्दभैरवी उवाच—

महाकाल शिवानन्द परमानन्दनिर्भर ।
त्रैलोक्यसिद्धिद प्राणवल्लभ श्रूयतां स्तवः ॥ १ ॥
शाकिनी हृदये भाति सा देवी जननी शिवा ।
कालीति जगति ख्याता सा देवी हृदयस्थिता ॥ २ ॥
निरञ्जना निराकारा नीलाञ्जनविकासिनी ।
आद्या देवी कालिकाख्या केवला निष्कला शिवा ॥ ३ ॥
अनन्ता अनन्तरूपस्था शाकिनी हृदयस्थिता ।
तामसी तारिणी तारा महोग्रा नीलविग्रहा ॥ ४ ॥
कपाला मुण्डमालाढ्या शववाहनवाहना ।
ललज्जिह्वा सरोजाक्षी चन्द्रकोटिसमोदया ॥ ५ ॥
वाय्वग्निभूजलान्तस्था भवानी शून्यवासिनी ।
तस्मात् स्तोत्रमप्रकाश्यं कृष्णकाल्याः कुलोदयम् ॥ ६ ॥
श्रीकृष्णभगवत्याश्च नीलदेव्याः कुलार्णवम् ।
गोपनीयं प्रयत्नेन सावधानोऽवधारय ॥ ७ ॥

महाभैरवी उवाच—

श्रीकालीचरणं चराचरगुणं सौदामिनीस्तम्भनं
गुञ्जद्गर्वगुरुप्रभानखमुखाह्लादैककृष्णासनम् ।
प्रेतारण्यासननिर्मितामलकजानन्दोपरि श्वासनं
श्रीमन्नाथकरारविन्दमिलनं नेत्राञ्जनं राजते ॥ ८ ॥

दीप्तिः प्राप्तिः समाप्तिः प्रियमतिसुगतिः संगतिः शीतनीतौ
मिथ्यामिथ्यासुरथ्या नतिररतिसती जातिवृत्तिर्गुणोक्तिः ।
व्यापारार्थी क्षुधार्थी वसति रतिपतिर्ज्योतिराकाशगङ्गा
श्रीदुर्गाशम्भुकालीचरणकमलके सर्वदा भाति सूक्ष्मम् ।। ९ ।।

देवेन्द्राः पञ्चभूता रविशशिमुकुटाः क्रोधवेतालकोलाः
कैलासस्थाः प्रशस्ताः स्तवनमपि तत्प्रत्यहं संपठन्ति ।
आत्मानं श्रीदकालीकुलचरणतलं हृत्कुलानन्दपद्मे
ध्यात्वा ध्यात्वा प्रवीरा अहमनुबहुधीः स्तौमि किं ध्याननिष्ठः ।।१०।।

श्रुत्वा स्तोत्रगुणं तवैव चरणाम्भोजस्य वाञ्छाफलं
प्रेच्छामोहयति प्रियाय कुरुते मोक्षाय तत्त्वार्थतः ।
मातर्मोहिनि दानमानतरुणी कातीति मन्यामहे
योग्यश्रीचरणाम्बुजे त्रिजगतामानन्दपुञ्जे सुखम् ।।११।।

पुत्रौ श्रीदेवपूज्यौ प्रकुरुत इतिहासादिगूढार्थगुप्ति
श्यामे मातः प्रसन्ना भव वरदकरी कारणं देहि नित्यम् ।
योगानन्दः शिवान्तः सुरतरुफलदं सर्ववेदान्तभाष्यं
सत्सङ्गं सद्विवेकं कुरु कुरु कविता पञ्चभूतप्रकाशम् ।।१२।।

आह्लादोद्रेककारी परमपदविदां प्रोल्वणार्थप्रकाशः
प्रेष्यः परार्थचिन्तामणिगुणसरलः पारणः प्रेमगानः ।
सारात्मा श्रीस्तवोऽयं जयसुरवसतां शुक्रसंस्कारगन्ता
मन्ता मोहादिकानां सुरगणतरुणीकोटिभिर्ध्येय इन्द्रैः ।।१३।।

नामग्रहणविमलपावनपुण्यजलनिधिमन्थनेन
निर्मलचित्तगसुरगुणपारग सुखसुधाकरस्थित-
हास्येन योगधराधरनरवरकुञ्जरभुजयुगदीर्घपद्ममृणालेन ॥ १४॥

हरिविधिहर अपरपरसरभावकपाल ।
सेवनेन सुन्दरी कालीचरणेन ॥ १५ ॥

भास्वत्कोटिप्रचण्डानलगुणललिताभाविता सिद्धकालीं
प्रोक्तं यद् योगगीतावचनसुरचनामङ्गलं योगिनाद्या ।

श्यामानन्दद्रुमाख्ये भुजनयजनगङ्गाङ्गतीरप्रकाशं
सर्वानन्दोत्सवत्वं वरदसुखदासम्भवे मय्यभावे ॥ १६ ॥

एतत्प्रथमे कुलं गुरुकुलं लावण्यलीलाकुलं
प्राणानन्दकुलं कुलाकुलकुलं कालीकुलं संकुलम् ।

मातः कालि युगादिकौलिनि शिवे सर्वान्तरङ्गस्थितं
नित्यं तत्र नियोजय श्रुतिगिरा श्रीधर्मपुत्रं भवे ॥ १७ ॥

हेरम्बादिकुलेशयोगजननि त्वं योगतत्त्वप्रिया
यद्येव कुरुते पदाम्बुजरजो योगं तवानन्ददम् ।

सः स्यात् संकटपाटलारिसदनं जित्वा स्वयं मन्मथं
श्रीमान् मन्मथमन्मथः प्रचयति ह्यष्टाङ्गयोगं परम् ॥ १८ ॥

योगी याति परं पदं सुखपदं वाञ्छास्पदं सम्पदं
त्रैलोक्यं परमेश्वरं यदि पुनः पारं भवाम्भोनिधेः ।
भावं भूधरराजराजदुहितः ज्ञातं विचारं तव
श्रीपादाम्बुजपूजनं प्रकुरुते ते नीरदप्रोज्ज्वले ।। १९ ।।

आदावष्टाङ्गयोगं वदति भवसुखं भक्तिसिद्धान्तमेकं
भूलोके पावनोख्यं पवनगमनगं श्रीनगेन्द्राङ्गजायाः ।
सिद्धीनामष्टसिद्धिं यमनियमवशादासनप्राणयोगात्
प्रत्याहारं विभोर्ध्वारुणगुणवसनं ध्यानमेवं समाधिम् ।। २० ।।

मातः शान्तिगुणावलम्बिनि शिवे शान्तिप्रदे योगिनां
दारे देवगुणे विधेहि सकलं शान्तिक्रियामङ्गलम् ।
यज्ञानामुदयं प्रयाति सहसा यस्याः प्रसादाद् भुवं
तां सर्वां प्रवदामि कामदहनस्तम्भाय मोहक्षयात् ।। २१ ।।

एको जीवति योगिराडतिसुखी जीवन्ति न श्रीसुताः
सर्वं योगभवं भवे विभवगाः पश्यन् स्वकीयायुषम् ।
इत्येवं परिभाव्य सर्वविषयं शान्ति समालम्ब्य कौ
मूले वेददलोज्ज्वले कुलपथे श्रीकुण्डलीं भावय ।। २२ ।।

शान्तिभ्रान्तिनिकृन्तिनी स्वरमणी प्रेमोद्गता भक्तिदा
लावण्याम्बुधिरत्नकोटिकिरणाह्लादैकमूर्तिप्रभा ।
एकाकारपराक्रमादपय मा क्रोधक्रमक्षोभिणी
या मूलामलपङ्कजे रचयति श्रीमाधुरी तां भजे ।। २३ ।।

रे रे पामर दुर्भग प्रतिदिनं किं कर्म वा राधसे
व्यापारं विषयाश्रयं प्रकुरुषे न ध्यायसे श्रीपदम् ।
मिथ्यैतत् क्षणभङ्गुरं त्यज मुदा संसारभावं विषं
श्रीकालीं कुलपण्डितां गुणवतीं शान्ति समाराधय ।। २४ ।।

शिवस्त्री या शान्तिः परमसुखदा भावजनिका
विवेकः संजातो वहसि च तया भाति नियतम् ।
विवेकोऽसौ त्यागी जनयति सुधासिन्धुसुन्दर-
मदो ब्रह्मज्ञानं परमममले योगिनि परे ।। २५ ।।

द्वयं ब्रह्मज्ञानं परमममले चागममयं
विवेकोद्भूतं स्यादमलपरमं शब्दमपरम् ।
द्वयोर्मूलीभूता हृदि सपदि शान्तिः प्रियतमा
प्रभा कालीपादाम्बुजयुगलभक्तिप्रलयदा ।। २६ ।।

कुलश्रीकुण्डल्याः परमरसभावं नवभयं
पदं मातुः काल्याः प्रथमरविकान्त्याः सुखमयम् ।
वदामि प्रोत्साहे वशषसशुभे हाटकनिभे
विधिः श्रीडाकिन्याऽमरपतिधरित्रीोति च भजे ।। २७ ।।

त्रयं स्थानं नित्यं रविशशिकलावह्निघटितं
महातीर्थं सम्यक् पवनगगनस्थं भवकरम् ।
विभिन्नं संकृत्य द्वयमपि कुलग्रन्थिसहितं
सुषुम्नाश्रीतीर्थे महति गगने पूर्णलयवान् ।। २८ ।।

त्रयं संशोध्यादौ परमपदवीं गच्छति महान्
सुदृष्टाङ्गैर्योगैः परिभवति शुद्धं मम तनुम् ।
अतो योगाष्टाङ्गं कलुषसुखमुक्तं वितनुते
क्रियादौ संकुर्याद् यमनियमकार्यं यतिवरः ॥ २९ ॥

अहिंसासत्यार्थी प्रचयति सुयोगं तव पदं
घनस्ते यद्योगी शुचिधृतिदयादाननिपुणः ।
क्षमालघ्वाहारी समगुणपरानन्दनिपुणः
स्वयं सिद्धः सद्ब्राह्मणकुलपताकी सुखमयी ॥ ३० ॥

तपः सन्तोषाढ्यो हरयजन आस्तिक्यमतिमान्
यतीनां सिद्धान्तश्रवणहृदयप्राणविलयः ।
जयानन्दामग्नो हवनमनले यः प्रकुरुते
महाभक्तः श्रीह्रीर्मतिरतिकुलीनस्तव पदः ॥ ३१ ॥

सुषुम्नामुखाम्भोरुहाग्रे च पद्मं
दलं चेद् हेमाक्षरं मूलदेशे ।
स्थिरा पृष्ठवंशस्य मध्ये सुषुम्ना-
न्तरे वज्रिणी चित्रिणी भासिपद्मैः ॥ ३२ ॥

सुषुम्नादिनाड्या युगात् कर्णमूलात्
प्रकाशप्रकाशा बहिर्युग्मनाडी ।
इडा पिङ्गला वामभागे च दक्षे
सुधांशूरवी राजसे तत्र नित्यम् ॥ ३३ ॥

विसर्गं बिन्द्वन्तं स्वगुणनिलयं त्वं जनयसि
त्वमेका कल्याणी गिरीशजननी कालिकलया ।
परानन्दं कृत्वा यदि परिजपन्ति प्रियतमाः
परिक्षाल्य ज्ञानैरिह परिजयन्ति प्रियपदम् ॥३४॥

अष्टादशाङ्गुलगतं ऋजुदन्तकाष्ठं
स्वीयाङ्गुलार्धघटितं प्रशरं शनैर्यः ।
संयोज्य तालुरसनागलरन्ध्रमध्ये
दन्तीक्रियामुपचरेत् तव भावनाय ॥३५॥

नाडीक्षालनमाकरोति यतिराड् दण्डे त्रयं धारयन्
युष्मच्छ्रीचरणार्पणो नवमदण्डस्यानिलस्तम्भनात् ।
प्राणायामफलं यतिः प्रतिदिनं संवर्धते सुश्रमा-
दानन्दाम्बुधिमज्जनं कुलरसैर्मुक्तो भवेत् तत्क्षणात् ॥३६॥

वदामि परमश्रिये पदपद्मयोगं शुभं
हिताय जगतां मम प्रियगणस्य भागश्रिये ।
सदा हि कुरुते नरः सकलयोगसिद्धिं मुदा
तदैव तव सेवको जननि मातरेकाक्षरम् ॥३७॥

करुणासागरे मग्नः सदा निर्मलतेजसा ।
तवाङ्घ्रिकोमलाम्भोजं ध्यात्वा योगीश्वरो भवेत् ॥३८॥

करुणासागरे मग्नो येन योगेन निर्मलः ।
तद्योगं तव पादाब्जं को मूर्खः कः पण्डितः ॥३९॥

यमनियमसुकाले नेउलीयोगशिक्षा
प्रभवति कफनाशा नाशरन्ध्रे त्रिसूत्री ।
हृदयकफविनाशा द्योतिका योगशिक्षा
गलबिलगलवस्त्रं षष्टिहस्तं वहन्ती ॥४०॥

सूक्ष्मरसनस्य च स्वभुजषष्टिहस्तं गल-
प्रमाणमिति सन्ततप्रसरपञ्चयुग्माङ्गुलम् ।
पवित्रशुचिद्योतिकारः भवसि सर्वपीडापहा
स्वकण्ठकमलोदयाममलभीतिदामाभजे ॥४१॥

भजति यदि कुमारीं नेउलीयोगदृष्ट्या
स भवति परवेत्ता मोहजालं छिनत्ति ।
स्मितमुखि भवति त्वां मूढ एवातिजीवो
भ्रमितमुदवधूर्नाकारसिद्धिं ददासि ॥४२॥

शनैर्दन्तीयोगं स्वपदयुगपद्मे वितनुते
शिवे योगी मासादपि भवति वायुं स्थगयति ।
असौ मन्त्री चाम्रातकदलं सुदण्डं गलविले
नियोज्यादौ ध्यात्वा तव चरणपङ्केरुहतलम् ॥४३॥

कुलाकुलचेतता परिकरोषि बिल्वच्छदी
सुशान्तिगुणदा जया परमभक्तिनिर्गुण्डिका ।
मुकुन्दतुलसीप्रिया गुणिनि मुक्तिदा योगिनी
ददास्यमरसम्पदं दलवियोगमूर्ध्वोदरीम् ॥४४॥

पञ्चामरासाधनयोगकर्त्री पञ्चामरा नाम महौषधिः स्थिता ।
त्वमेव सर्वेश्वररूपधारिणी यैः पूज्यसे सोऽहिकपारमेष्ठी ॥४५॥

पठति यदि भवान्याः शाकिनीदेहदेव्याः
स्तवनमरुणवर्णामार्कलक्ष्म्याः प्रकाशम् ।
व्रजति परमराज्यं देवपूज्यः प्रतिष्ठो
मनुजपनसुशीलो लीलया शम्भुरूपम् ॥४६॥

प्रातर्मध्याह्नकाले च सायाह्ने च त्रिसप्तके ।
शतं पठित्वा मोक्षः स्यात् पुरश्चर्याफलं लभेत् ॥४७॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे शाकिनीकृतकालीस्तवनं नाम द्विसप्ततितमः पटलः ॥

## कालीस्तुतिः

( योगिनीतन्त्रे पूर्वखण्डे प्रथमपटले ईश्वरकृता )

विद्युत्कान्तिसमानाभदन्तपङ्क्तिबलाकिनीम् ।
नमामि तां विश्वमातां कालमेघसमद्युतिम् ॥
मुण्डमालावलीरम्यां मुक्तकेशीं दिगम्बराम् ॥ ८ ॥

ललज्जिह्वां घोररावामारक्तान्तत्रिलोचनाम् ।
कोटिकोटिकलानाथविलसन्मुखमण्डलाम् ॥ ९ ॥

अमाकलासमुल्लासोज्ज्वलत्कोटीरमण्डलाम् ।
शवद्वयाभूषकर्णां नानामणिविभूषिताम् ॥ १० ॥

सूर्यकान्तेन्दुकान्तौघप्रोल्लसत्कर्णभूषणाम् ।
मृतहस्तसहस्रैस्तु कृत्काञ्चीं हसन्मुखीम् ॥ ११ ॥

सृक्कद्वयगलद्रक्तधाराविस्फारिताननाम् ।
खड्गमुण्डवराभीतिसंशोभितचतुर्भुजाम् ॥ १२ ॥

दन्तुरां परमां नित्यां रक्तमण्डितविग्रहाम् ।
शिवप्रेतसमारूढां महाकालोपरिस्थिताम् ॥ १३ ॥

वामपादं शिवहृदि दक्षिणे लोकलाञ्छिताम् ।
कोटिसूर्यप्रतीकाशां समस्तभुवनोज्ज्वलाम् ॥ १४ ॥

विद्युत्पुञ्जसमानाभज्वलज्जटाविराजिताम् ।
रजताद्रिनिभां देवीं स्फटिकाचलविग्रहाम् ॥ १५ ॥

दिगम्बरां महाघोरां चन्द्रार्कपरिमण्डिताम् ।
नानालङ्कारभूषाढ्यां भास्वत्स्वर्णतनूरुहाम् ॥ १६ ॥

योगनिद्राधरां सुभ्रूं स्मेराननसरोरुहाम् ।
विपरीतरतासक्तां महाकालेन सन्ततम् ॥ १७ ॥

अशेषब्रह्माण्डभाण्डप्रकाशितमहाबलाम् ।
शिवाभिर्घोररावाभिर्वेष्टितां प्रलयोदिताम् ॥ १८ ॥

कोटिकोटिशरच्चन्द्रन्यक्कृतोन्नखमण्डलाम् ।
सुधापूर्णशिरोहस्तयोगिनीभिर्विराजिताम् ॥ १९ ॥

आरक्तमुखभीमाभिर्मदमत्ताभिरन्विताम् ।
घोररूपैर्महानादैश्चण्डतापैश्च भैरवैः ॥ २० ॥

गृहीतशवकङ्कालजयशब्दपरायणैः ।
नृत्यद्भिर्वादनपरैरनिशं च दिगम्बरैः ॥ २१ ॥

श्मशानालयमध्यस्थां ब्रह्माद्युपनिषेविताम् ॥ २२ ॥

## ईश्वरकृतं कवचम्

ओं नमो भगवति वज्रश्रृंखले हन्तु भक्षतु खादतु, अहो रक्तं पिब कपालेन रक्ताक्षि रक्तपटे भस्माक्षि, भस्मलिप्तशरीरे वज्रायुधप्रकरनिचिते पूर्वां दिशं बध्नातु, दक्षिणां दिशं बध्नातु, पश्चिमां दिशं बध्नातु, नामार्थं धनाय ग्रहपतीन् बध्नातु, नामपटीं बध्नातु, यक्षराक्षसपिशाचान् बध्नातु, प्रेतभूतगन्धर्वादयो ये केचित् पुत्रिकास्तेभ्यो रक्षतु, ऊर्ध्वं रक्षतु, अधो रक्षतु, स्वनिकां बध्नातु, जलमहाबले एह्येहि लोटिलोष्टिशतावलि वज्राग्निवज्रप्रकरे हुँ फट् ह्रीं ह्रीं श्रीं हुं हुं क्रूं फं फं सर्वग्रहेभ्यः सर्वदुष्टोपद्रवेभ्यो ह्रीं अशेषेभ्यो रक्षतु ।

# ब्रह्मविष्णुकृता कालीस्तुतिः

(योगिनीतन्त्रे पूर्वखण्डे पञ्चदशपटले)

नमः परमकल्याणीं प्रणवात्मानमीश्वरीम् ।
निजबीजस्वरूपाञ्च कामबीजस्वरूपिणीम् ।। १४ ।।

मुण्डमालावलीरम्यां लोलजिह्वां सनातनीम् ।
मायाबीजस्वरूपाञ्च कूर्चबीजस्वरूपिणीम् ।। १५ ।।

वन्देऽहं जगतां धात्रीं कालीं कमललोचनाम् ।
घोरघोषां शिवाशब्दां मुक्तकेशीं दिगम्बराम् ।। १६ ।।

नमामि कालिकां देवीं महाविघ्नविनाशिनीम् ।
प्रणमामि सदा हृद्गां तां च त्रिभुवनेश्वरीम् ।। १७ ।।

# कालिकास्तोत्रम्

उल्लसद्दनुजवृन्दखेदिनी भूरिदुःखभवभीतिभेदिनी ।
कण्ठलम्बितकपालमालिका मङ्गलं मम करोतु कालिका ॥ १ ॥

शोणितार्द्रगजचर्मवासिनी मत्तभैरवमहाट्टहासिनी ।
दैत्यबाहुकृतकाञ्चिनालिका मङ्गलं मम करोतु कालिका ॥ २ ॥

मेरुमन्दसुरविन्ध्यवासिनी संस्मृतासि दुरितौघनाशिनी ।
या द्विजेति च कुमारिका मङ्गलं मम करोतु कालिका ॥ ३ ॥

चण्डमुण्डवधकेलिकारिका रक्तबीजरणदर्पहारिका ।
कायकान्तिजितमेघमालिका मङ्गलं मम करोतु कालिका ॥ ४ ॥

आदिशक्तिकमला सनातनी कामक्रोधवरशूलदण्डिनी ।
ब्रह्मचित्तसरसे मुरालिका मङ्गलं मम करोतु कालिका ॥ ५ ॥

आदिशक्तिमनसा सनातनी सम्मतासि गिरिकूटवासिनी ।
पाहि मां च भवने कुमारिका मङ्गलं मम करोतु कालिका ॥६॥

राजसे सकलसर्गसज्जने सात्त्विकी च जगतां सुलक्षणे ।
तामसी च जगतां सुरोलिका मङ्गलं मम करोतु कालिका ॥७॥

भक्तिनम्रमुनियक्षदेवता-सिद्धकिन्नरसमूहसेविता ।
शुम्भदैत्यमकरन्दरालिका मङ्गलं मम करोतु कालिका ॥ ८ ॥

॥ इति श्रीकालिदासविरचितं कालिकास्तोत्रं सम्पूर्णम् ॥

# कालिका-शतनाम-स्तोत्रम्

**भैरव उवाच—**

शतनाम प्रवक्ष्यामि कालिकाया वरानने ।
यस्य प्रपठनाद् वाग्मी सर्वत्र विजयी भवेत् ॥ १ ॥

काली कपालिनी कान्ता कामदा कामसुन्दरी ।
कालरात्रिः कालिका च कालभैरव-पूजिता ॥ २ ॥

कुरुकुल्ला कामिनी च कमनीयस्वभाविनी ।
कुलीना कुलकर्त्री च कुलवर्त्म-प्रकाशिनी ॥ ३ ॥

कस्तूरीरसनीला च काम्या कामस्वरूपिणी ।
ककारवर्णनिलया कामधेनुः करालिका ॥ ४ ॥

कुलकान्ता करालास्या कामार्ता च कलावती ।
कृशोदरी च कामाख्या कौमारी कुलपालिनी ॥ ५ ॥

कुलजा कुलकन्या च कलहा कुलपूजिता ।
कामेश्वरी कामकान्ता कुञ्जरेश्वरगामिनी ॥ ६ ॥

कामदात्री कामहर्त्री कृष्णा चैव कपर्दिनी ।
कुमुदा कृष्णदेहा च कालिन्दी कुलपूजिता ॥ ७ ॥

काश्यपी कृष्णमाता च कुलिशांगी कला तथा ।
क्रींरूपा कुलगम्या च कमला कृष्णपूजिता ॥ ८ ॥

कृशांगी किन्नरी कर्त्री कलकण्ठी च कार्तिकी ।
कम्बुकण्ठी कौलिनी च कुमुदा कामजीविनी ॥ ९ ॥

कुलस्त्री कार्तिका कृत्या कीर्तिश्च कुलपालिका ।
कामदेवकला कल्पलता कामाङ्गवर्द्धिनी ॥ १० ॥

कुन्ती च कुमुदप्रीता कदम्बकुसुमोत्सुका ।
कादम्बिनी कमलिनी कृष्णानन्दप्रदायिनी ॥ ११ ॥

कुमारीपूजनरता कुमारीगणशोभिता ।
कुमारीरञ्चनरता कुमारीव्रतधारिणी ॥ १२ ॥

कंकाली कमनीया च कामशास्त्रविशारदा ।
कपालखट्वाङ्गधरा कालभैरवरूपिणी ॥ १३ ॥

कोटरी कोटराक्षी च काशी कैलासवासिनी ।
कात्यायिनी कार्यकरी काव्यशास्त्रप्रमोदिनी ॥ १४ ॥

कामाकर्षणरूपा च कामपीठनिवासिनी ।
कंगिनी काकिनी क्रीडा कुत्सिता कलहप्रिया ॥ १५ ॥

कुण्डगोलोद्भवप्राणा कौशिकी कीर्तिवर्द्धिनी ।
कुम्भस्तनी कटाक्षा च काव्या कोकनदप्रिया ॥ १६ ॥

कान्तारवासिनी कान्तिः कठिना कृष्णवल्लभा ।
इति ते कथितं देवि ! गुह्याद् गुह्यतरं परम् ॥ १७ ॥
प्रपठेद् य इदं नित्यं कालिनामशताष्टकम् ।
त्रिषु लोकेषु देवेशि ! तस्याऽसाध्यं न विद्यते ॥ १८ ॥
प्रातःकाले च मध्याह्ने सायाह्ने च सदा निशि ।
यः पठेत् परया भक्त्या कालिनामशताष्टकम् ॥ १९ ॥

कालिका तस्य गेहे च संस्थानं कुरुते सदा ।
शून्यागारे श्मशाने वा प्रान्तरे जलमध्यतः ॥ २० ॥

वह्निमध्ये च सङ्ग्रामे तथा प्राणस्य संशये ।
शताष्टकं जपन् मन्त्री लभते क्षेममुत्तमम् ॥ २१ ॥

कालीं संस्थाप्य विधिवत् स्तुत्वा नामशताष्टकैः ।
साधकः सिद्धिमाप्नोति कालिकायाः प्रसादतः ॥ २२ ॥

॥ इत्यष्टोत्तरशतनाम समाप्तम् ॥

# कालिकाशतनामस्तोत्रम्

## (महानिर्वाणतन्त्रे सप्तम उल्लासे)

श्रीसदाशिव उवाच—

शृणु देवि जगद्वन्द्ये स्तोत्रमेतदनुत्तमम् ।
पठनाच्छ्रवणाद्यस्य सर्वसिद्धीश्वरो भवेत् ॥ ८ ॥

असौभाग्यप्रशमनं सुखसम्पद्विवर्द्धनम् ।
अकालमृत्युहरणं सर्वापद्विनिवारणम् ॥ ९ ॥

श्रीमदाद्याकालिकाया सुखसान्निध्यकारणम् ।
स्तवस्यास्य प्रसादेन त्रिपुराररिहं शिवे ॥ १० ॥

स्तोत्रस्यास्य ऋषिर्देवि ! सदाशिव उदाहृतः ।
छन्दोऽनुष्टुब्देवताद्या कालिका परिकीर्तिता ॥ ११ ॥

ह्रीं काली श्रीं कराली च क्रीं कल्याणी कलावती ।
कमला कलिदर्पघ्नी कपर्दीशकृपान्विता ॥ १२ ॥

कालिका कालमाता च कालानलसमद्युतिः ।
कपर्दिनी करालास्या करुणामृतसागरा ॥ १३ ॥

कृपामयी कृपाधारा कृपापारा कृपागमा ।
कृशानुः कपिला कृष्णा कृष्णानन्दविवर्द्धिनी ॥ १४ ॥

कालरात्रिः कामरूपा कामपाशविमोचिनी ।
कादम्बिनी कलाधारा कलिकल्मषनाशिनी ॥ १५ ॥

कुमारीपूजनप्रीता कुमारीपूजकालया ।
कुमारीभोजनानन्दा कुमारीरूपधारिणी ॥ १६ ॥

कदम्बवनसञ्चारा कदम्बवनवासिनी ।
कदम्बपुष्पसन्तोषा कदम्बपुष्पमालिनी ॥ १७ ॥

किशोरी कलकण्ठा च कलनादनिनादिनी ।
कादम्बरीपानरता तथा कादम्बरीप्रिया ॥ १८ ॥

कमलालयमध्यस्था कमलामोदमोदिनी ।
कलहंसगतिः क्लैब्यनाशिनी कामरूपिणी ॥ १९ ॥

कामरूपी कृतावासा कामपीठविलासिनी ।
कमनीया कल्पलता कमनीयविभूषणा ॥ २० ॥

कमनीयगुणाराध्या कामलाङ्गी कृशोदरी ।
कारणामृतसन्तोषा कारणानन्दसिद्धिदा ॥ २१ ॥

कारणानन्दजापेष्टा कारणार्च्चनहर्षिता ।
कारणार्णवसम्मग्ना कारणव्रतपालिनी ॥ २२ ॥

कस्तूरीसौरभामोदा कस्तूरीतिलकोज्ज्वला ।
कस्तूरीपूजनरता कस्तूरीपूजकप्रिया ॥ २३ ॥

कस्तूरीदाहजननी कस्तूरीमृगतोषिणी ।
कस्तूरीभोजनप्रीता कर्पूरचन्दनोक्षिता ॥ २४ ॥

कर्पूरकारणाह्लादा कर्पूरामृतपायिनी ।
कर्पूरसागरस्नाता कर्पूरसागरालया ॥ २५ ॥

कूर्चबीजजपप्रीता कूर्चजापपरायणा ।
कुलीना कौलिकाराध्या कौलिकप्रियकारिणी ॥ २६॥

कुलाचारा कौतुकिनी कुलमार्गप्रदर्शिनी ।
काशीश्वरी कष्टहर्त्री काशीशवरदायिनी ॥ २७ ॥

काशीश्वरकृतामोदा काशीश्वरमनोरमा ॥ २८ ॥

कलमञ्जीरचरणा क्वणत्काञ्चीविभूषणा ।
काञ्चनाद्रिकृतागारा-काञ्चनाचलकौमुदी ॥ २९ ॥

कामबीजजपानन्दा कामबीजस्वरूपिणी ।
कुमतिघ्नी कुलीनार्तिनाशिनी कुलकामिनी ॥ ३० ॥

क्रीं ह्रीं श्रींमन्त्रवर्णेन कालकण्टकघातिनी ।
इत्याद्या कालिकादेव्याः शतनाम प्रकीर्तितम् ॥३१॥

ककारकूटघटितं कालीरूपस्वरूपकम् ॥ ३२ ॥

पूजाकाले पठेद्यस्तु कालिकाकृतमानसः ।
मन्त्रसिद्धिर्भवेदाशु तस्य काली प्रसीदति ॥ ३३ ॥

# कालीशतनामस्तोत्रम्

( मुण्डमालतन्त्रेऽष्टमपटले )

देव्युवाच—

नमस्ते पार्वतीनाथ विश्वनाथ दयामय ।
ज्ञानात् परतरं नास्ति श्रुतं विश्वेश्वर प्रभो ॥ १ ॥

दीनबन्धो दयासिन्धो विश्वेश्वर जगत्पते ।
इदानी श्रोतुमिच्छामि गोप्यं परमकारणम् ॥
रहस्यं कालिकायाश्च तारायाश्च सुरोत्तम ॥ २ ॥

श्रीशिव उवाच—

रहस्यं किं वदिष्यामि पञ्चवक्त्रैर्महेश्वरि ।
जिह्वाकोटिसहस्रैश्च वक्त्रकोटिशतैरपि ॥ ३ ॥

तथापि तस्या माहात्म्यं न शक्नोमि कथञ्चन ।
तस्या रहस्यं गोप्यञ्च किं न जानासि शाङ्करि ॥
स्वस्यैव चरितं वक्तुं स्वयमेव क्षमा भवेत् ॥ ४ ॥

अन्यथा नैव देवेशि न जानाति कथञ्चन ।
कालिकायाः शतं नाम नानातन्त्रे त्वया श्रुतम् ॥
रहस्यं गोपनीयं च तन्त्रेऽस्मिन् जगदम्बिके ॥ ५ ॥

करालवदना काली कामिनी कमला कला ।
क्रियावती कोटराक्षी कामाख्या कामसुन्दरी ॥ ६ ॥

कपोला च कराला च काशी कात्यायनी कुहूः ।
कंकाला कालदमना करुणा कमलार्चिता ।। ७ ।।

कादम्बरी कालहरा कौतुकी कारणप्रिया ।
कृष्णा कृष्णप्रिया कृष्णपूजिता कृष्णवल्लभा ।। ८ ।।

कृष्णापराजिता कृष्णप्रिया च कृष्णरूपिणी ।
कालिका कालरात्रिश्च कुलजा कुलपण्डिता ।। ९ ।।

कुलधर्मप्रिया कामा काम्या कर्मविभूषिता ।
कुलप्रिया कुलरता कुलीनपरिपूजिता ।। १० ।।

कुलज्ञा कमला पूज्या कैलासगणविभूषिता ।
कुटजा केशिनी कामा कामदा कामपण्डिता ।। ११ ।।

करालास्या च कन्दर्पा कामिनी कामदायिनी ।
कोलम्बका कोलरता केशिनी केशभूषिता ।। १२ ।।

केशवस्य प्रिया काशा काश्मीरा केशवार्चिता ।
कामेश्वरी कामरूपा कामदानविभूषिता ।। १३ ।।

कालहन्त्री कूर्ममांसप्रिया कूर्मादिपूजिता ।
केलिनी करकाकारा करकर्मनिषेवणी ।। १४ ।।

कटकेशवमध्यस्था कटकी कटकार्चिता ।
कटप्रिया कटरता कटकर्मनिषेवणी ।। १५ ।।

कुमारीपूजनरता कुमारीगणसेविता ।
कुलाचारप्रिया कौलप्रिया कुलनिषेवणी ।। १६ ।।

कुलीना कुलधर्मज्ञा कुलभीतिविमर्दिनी ।
कामधर्मप्रिया काम्या नित्यकाम्यस्वरूपिणी ॥ १७ ॥

कामरूपा कामहरा काममन्दिरपूजिता ।
कामागारस्वरूपा च कामाख्या कामभूषिता ॥ १८ ॥

क्रियाशक्तिरता काम्या कामिनी कामदायिनी ।
कोलपुष्पाम्बरा कौला निकोला कोलहस्तका ॥ १९ ॥

कौषिकी केतकी कुन्ती कुण्डलादिविभूषिता ।
इत्येवं शृणु चार्वङ्गि रहस्यं सर्वमङ्गलम् ॥ २० ॥

यः पठेत् परया भक्त्या स शिवो नात्र संशयः ।
शतनामप्रसादेन किं न सिध्यति भूतले ॥ २१ ॥

ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्या दिवौकसः ।
रहस्यपठनाद् देवि सर्वे ते विगतज्वराः ॥ २२ ॥

त्रिषु लोकेषु विश्वेशि सत्यं गोप्यमतः परम् ।
नास्ति नास्ति महामाये तन्त्रमध्ये कथञ्चन ॥ २३ ॥

क्रियया च विना देवि विना भक्त्या महेश्वरि ।
प्रसन्ना स्यात् करालास्या स्तवपाठाद् दिगम्बरि ॥ २४ ॥

सत्यं वच्मि महेशानि अतः परतरं न हि ।
न गोलोके न वैकुण्ठे न च कैलासमन्दिरे ॥ २५ ॥

अतः परतरा विद्या स्तोत्रं कवचमेव च ।
त्रिषु लोकेषु विश्वेशि नास्ति नास्ति कदाचन ॥ २६ ॥

रात्रावपि दिवाभागे निशाभागे सुरेश्वरि ।
प्रजपेद् भक्तिभावेन रहस्यं स्तवमुत्तमम् ॥ २७ ॥

शतनामप्रसादेन मन्त्रसिद्धिः प्रजायते ।
कुजवारे चतुर्दश्यां निशाभागे जपेत्तु यः ॥ २८ ॥

स कृती सर्वशास्त्रज्ञः स कुलीनः सदा शुचिः ।
स कुलज्ञः स कालज्ञः स धर्मज्ञो महीतले ॥ २९ ॥

रहस्यपठनाद् देवि पुरश्चरणजं फलम् ।
प्राप्नोति देवदेवेशि सत्यं परमसुन्दरि ॥ ३० ॥

स्तवपाठाद् वरारोहे किं न सिद्ध्यति भूतले ।
अणिमाद्यष्टसिद्धिश्च भवत्येव न संशयः ॥ ३१ ॥

रात्रौ बिल्वतलेऽश्वत्थमूलेऽपराजितातले ।
पठेत् कालिकास्तोत्रं यथाशक्त्या महेश्वरि ॥ ३२ ॥

शतवारप्रपठनान्मन्त्रसिद्धिर्भवेद् ध्रुवम् ।
उपायो नास्ति देवेशि महामन्त्रस्य साधने ॥ ३३ ॥

अतः परतरं देवि नास्ति ब्रह्माण्डमण्डले ।
नानातन्त्रं श्रुतं देवि मम वक्त्रात् सुरेश्वरि ॥ ३४ ॥

मुण्डमालामहातन्त्रे महामन्त्रस्य साधनम् ।
भक्त्या भगवतीं दुर्गां दुःखदारिद्र्यनाशिनीम् ॥ ३५ ॥

संस्मरेत् प्रजपेद् ध्यायेत् स मुक्तो नात्र संशयः ।
जीवन्मुक्तः स विज्ञेयस्तन्त्रभक्तिपरायणः ॥ ३६ ॥

स साधको महाज्ञानी यश्च दुर्गापदानुगः ।
न च भुक्तिर्न वा भक्तिर्न मुक्तिर्नगनन्दिनि ॥
विना दुर्गां जगद्धात्रीं जायते नात्र संशयः ॥ ३७ ॥

भक्तिमार्गरतो भूयो योऽन्यमार्गे प्रधावति ।
न च शाक्तास्तस्य वक्त्रं परिपश्यन्ति शाङ्करि ॥ ३८ ॥

विना दुर्गां जगद्धात्रि वाग्जालशास्त्रमोहिताः ।
अन्यदेवं भजन्त्येते ये चान्यशास्त्रघूर्णिताः ॥ ३९ ॥

विना तन्त्राद् विना मन्त्राद् विना यन्त्रान्महेश्वरि ।
न च भक्तिश्च मुक्तिश्च जायते वरवर्णिनि ॥ ४० ॥

तन्त्रवक्ता गुरुः साक्षाद् यथा च ज्ञानदः शिवः ।
यथा गुरुर्महेशानि यथा च परमो गुरुः ॥ ४१ ॥

यथा परापरगुरुः परमेष्ठी यथा गुरुः ।
तथा चैव हि तन्त्रज्ञस्तन्त्रवक्ता गुरुः स्वयम् ॥ ४२ ॥

तन्त्रं च तन्त्रवक्तारं निन्दन्ति तान्त्रिकीं क्रियाम् ।
ये जना भैरवास्तेषां मांसास्थिचर्वणोद्यताः ॥ ४३ ॥

अत एव च तन्त्रज्ञं न निन्दन्ति कदाचन ।
न हसन्ति न हिंसन्ति न वदन्त्यन्यथा इति ॥ ४४ ॥

[द्वादशपटलेऽपि स्तोत्रमेतल्लिखितं वर्तते किञ्चिद्भेदपूर्वकम् ।]

# काली–सहस्रनाम

कैलाशशिखरे रम्ये नानादेवगणावृते ।
नानावृक्षलताकीर्णे नानापुष्पैरलङ्कृते ॥ १ ॥

चतुर्म्मण्डलसंय्युक्ते शृंगारमण्डपे स्थिते ।
समाधौ संस्थितं शान्तङ्क्रीडन्तँय्योगिनीप्रियम् ॥ २ ॥

तत्र मौनधरं दृष्ट्वा देवी पृच्छति शङ्करम् ।
किं त्वया जप्यते देव किं त्वया स्मर्य्यते सदा ॥ ३ ॥

सृष्टि कुत्र विलीनास्ति पुन कुत्र प्रजायते ।
ब्रह्माण्डकारणँ य्यत्तत्किमाद्यङ्कारणम्महत् ॥ ४ ॥

मनोरथमयी सिद्धिस्तथा वाञ्छामयी शिव ।
तृतीया कल्पना सिद्धि कोटिसिद्धीश्वरत्वकम् ॥ ५ ॥

शक्तिपाताष्टदशकंचराचरपुरीगतिः ।
महेन्द्रजालमिन्द्रादिजालानां रचनान्तथा ॥ ६ ॥

अणिमाद्यष्टकन्देव परकायप्रवेशनम् ।
नवीनसृष्टिकरणं समुद्रशोषणन्तथा ॥ ७ ॥

अमायाञ्चन्द्रसन्दर्शो दिवाचन्द्रप्रकाशनम् ।
चन्द्राष्टकञ्चाष्टदिक्षु तथा सूर्य्याष्टकं शिव ॥ ८ ॥

जले जलमयत्वञ्च वह्नौ वह्निमयत्वकम् ।
ब्रह्मविष्ण्वादिनिर्म्माणमिन्द्राणाङ्कारणङ्करे ॥ ९ ॥

पातालगुटिका यक्षवेतालपञ्चकन्तथा ।
रसायनन्तथा गुप्तिस्तथैव चाखिलाञ्जनम् ॥ १० ॥

महामधुमती सिद्धिस्तथा पद्मावती शिव ।
तथा भोगवती सिद्धिर्य्यावत्यः सन्ति सिद्धयः ॥ ११ ॥

केन मन्त्रेण तपसा कलौ पापसमाकुले ।
आयुष्यम्पुण्यरहिते कथम्भवति तद्वद ॥ १२ ॥

विना मन्त्रँ व्विना स्तोत्रं व्विनैव तपसा प्रिये ।
विना बलिँ व्विना न्यासम्भूतशुद्धिँ व्विना प्रिये ॥ १३ ॥

विना ध्यानँ व्विना यन्त्रँ व्विना पूजादिना प्रिये ।
विना क्लेशादिभिर्द्देवि देहदुःखादिभिर्व्विना ॥ १४ ॥

सिद्धिराशु भवेद्येन तदेवङ्कथ्यते मया ।
शून्ये ब्रह्माण्डगोले तु पञ्चाशच्छून्यमध्यके ॥ १५ ॥

पञ्चशून्यस्थिता तारा सर्व्वान्ते कलिका स्मृता ।
अनन्तकोटिब्रह्माण्ड-राजदन्ताग्रके शिवे ॥ १६ ॥

स्थाप्य शून्यालयङ्कृत्वा कृष्णवर्णं विधाय च ।
महानिर्ग्गुणरूपा च वाचातीता परा कला ॥ १७ ॥

क्रीडायां संस्थिता देवी शून्यरूपा प्रकल्पयेत् ।
सृष्टेरारम्भकार्य्ये तु दृष्टा छाया तया यदा ॥ १८ ॥

इच्छाशक्तिस्तु सा जाता तया कालो विनिर्म्मितः ।
प्रतिबिम्बन्तत्र दृष्टञ्जाता ज्ञानाभिधा तु सा ॥ १९ ॥

इदमेतत्किँ विशिष्टञ्जातँ व्विज्ञानकम्मुदा ।
तदा क्रियाभिधा जाता तदिच्छातो महेश्वरी ॥ २० ॥

ब्रह्माण्डगोले देवेशि राजदन्तस्थितञ्च यत् ।
सा क्रिया स्थापयामास स्वस्वस्थानक्रमेण च ॥ २१ ॥

तत्रैव स्वेच्छया देवि सामरस्यपरायणा ।
तदिच्छा कथ्यते देवि यथावदवधारय ॥ २२ ॥

युगादिसमये देवि शिवम्परगुणोत्तमम् ।
तदिच्छानिर्ग्गुणं शान्तं सच्चिदानन्दविग्रहम् ॥ २३ ॥

शाश्वतं सुन्दरं शुक्लं सर्व्वदेवयुतँ व्वरम् ।
आदिनाथङ्गुणातीतङ्काल्या संयुतमीश्वरम् ॥ २४ ॥

विपरीतरतन्देवं सामरस्यपरायणम् ।
पूजार्थमागतन्देवगन्धर्व्वाप्सरसाङ्गणम् ॥ २५ ॥

यक्षिणीं किन्नरीमन्यामुर्व्वश्याद्यान्तिलोत्तमाम् ।
वीक्ष्य तन्मायया प्राह सुन्दरी प्राणवल्लभा ॥ २६ ॥

त्रैलोक्यसुन्दरी प्राणस्वामिनी प्राणरञ्जिनी ।
किमागतम्भवत्याद्य मम भाग्यार्णवो महान् ॥ २७ ॥

उक्त्वा मौनधरं शम्भुम्पूजयन्त्यप्सरोगणाः ।
संसारात्तारितन्देव त्वया विश्वं जनप्रिय ॥ २८ ॥

सृष्टेरारम्भकार्य्यार्थमुद्युक्तोऽसि महाप्रभो ।
वेश्याकृत्यमिदन्देव मङ्गलार्थंप्रगायनम् ॥ २९ ॥

प्रयाणोत्सवकाले तु समारम्भे प्रगायनम् ।
गुणाद्यारम्भकालो हि वर्तते शिवशङ्कर ॥ ३० ॥

इन्द्राणीकोटयः सन्ति तस्या प्रसवबिन्दुतः ।
ब्रह्माणी वैष्णवी चैव माहेशीकोटिकोटयः ॥ ३१ ॥

तव सामरसानन्ददर्शनार्थं समुद्भवाः ।
सञ्जाताश्चाग्रतो देव चास्माकं सौख्यसागर ॥ ३२ ॥

रतिं हित्वा कामिनीनां नान्यत्सौख्यं महेश्वर ।
सा रतिर्दृश्यतेऽस्माभिर्म्महत्सौख्यार्थकारिका ॥ ३३ ॥

एवमेतत्तु चास्माभिः कर्त्तव्यं भर्तृणा सह ।
एवं श्रुत्वा महादेवो ध्यानावस्थितमानसः ॥ ३४ ॥

ध्यानं हित्वा मायया तु प्रोवाच कालिकाम्प्रति ।
कालि कालि रुण्डमाले प्रिये भैरववादिनि ॥ ३५ ॥

शिवारूपधरे क्रूरे घोरदंष्ट्रे भयानके ।
त्रैलोक्यसुन्दरकरी-सुन्दर्य्यः सन्ति मेऽग्रतः ॥ ३६ ॥

सुन्दरीवीक्षणङ्कर्म्म कुरु कालि प्रिये शिवे ।
ध्यानं मुञ्च महादेवि ता गच्छन्ति गृहम्प्रति ॥ ३७ ॥

तव रूपम्महाकालि महाकालप्रियङ्करम् ।
एतासां सुन्दरं रूपन्त्रैलोक्यप्रियकारकम् ॥ ३८ ॥

एवं मायाप्रभाविष्टो महाकालो वदन्निति ।
इति कालवचः श्रुत्वा कालम्प्राह च कालिका ॥ ३९ ॥

मायायाच्छाद्य चात्मानं निजस्त्रीरूपधारिणी ।
इत प्रभृतिस्त्रीमात्रम्भविष्यति युगे युगे ॥ ४० ॥

वल्ल्याद्यौषधयो देवि दिवा वल्लीस्वरूपताम् ।
रात्रौ स्त्रीरूपमासाद्य रतिकेलिः परस्परम् ॥ ४१ ॥

अज्ञानञ्चैव सर्व्वेषाम्भविष्यति युगे युगे ।
एवं शापञ्च दत्वा तु पुनः प्रोवाच कालिका ॥ ४२ ॥

विपरीतरतिङ्कृत्वा चिन्तयन्ति भजन्ति ये ।
तेषाँ व्वरम्प्रदास्यामि नित्यन्तत्र वसाम्यहम् ॥ ४३ ॥

इत्युक्त्वा कालिका विद्या तत्रैवान्तरधीयत ।
त्रिंशात्त्रखर्व्वषड्वृन्दनवत्यर्बुदकोटयः ॥ ४४ ॥

दर्शनार्थन्तपस्तेपे सा वै कुत्र गता प्रिया ।
मम प्राणप्रिया देवी हा हा प्राणप्रिये शिवे ॥ ४५ ॥

किङ्करोमि क्व गच्छामि इत्येवम्भ्रमसङ्कुलः ।
तस्या कात्या दया जाता मम चिन्तापरः शिवः ॥ ४६ ॥

यन्त्रप्रस्तारबुद्धिस्तु काल्या दत्तातिसत्वरम् ।
यन्त्रयागन्तदारभ्य पूर्व्वं बिन्दुत्वगोचरम् ॥ ४७ ॥

श्रीचक्रं यन्त्रप्रस्तार-रचनाभ्यासतत्परः ।
इतस्ततो भ्राम्यमाणस्त्रैलोक्यञ्चक्रमध्यकम् ॥ ४८ ॥

चक्रपारन्दर्शनार्थङ्कोटचर्बुदयुगङ्कतम् ।
भक्तप्राणप्रिया देवी महाश्रीचक्रनायिका ॥ ४९ ॥

तत्र बिन्दौ परं रूपं सुन्दरं सुमनोहरम् ।
रूपञ्ज्ञातम्महेशानि जाग्रत्त्रिपुरसुन्दरि ॥ ५० ॥

रूपन्दृष्ट्वा महादेवो राजराजेश्वरोऽभवत् ।
तस्या ⁐ कटाक्षमात्रेण तस्या रूपधरः शिवः ॥ ५१ ॥

विना श्रृङ्गारसँय्युक्ता तदा जाता महेश्वरी ।
विना काल्यंशतो देवि जगत्स्थावरजङ्गमम् ॥ ५२ ॥

न श्रृङ्गारो न शक्तित्वं क्वापि नास्ति महेश्वरी ।
सुन्दर्य्या प्रार्थिता काली तुष्टा प्रोवाच कालिका ॥ ५३ ॥

सर्व्वासान्नेत्रकेशे च ममांशोऽत्र भविष्यति ।
पूर्व्वावस्थासु देवेशि ममांशस्तिष्ठति प्रिये ॥ ५४ ॥

सावस्था तरुणाख्या तु तदन्ते नैव तिष्ठति ।
मद्भक्तानाम्महेशानि सदा तिष्ठति निश्चितम् ॥ ५५ ॥

शक्तिस्तु कुण्ठिता जाता तथा रूपं न सुन्दरम् ।
चिन्ताविष्टा तु मलिना जाता तत्र तु सुन्दरी ॥ ५६ ॥

क्षणं स्थित्वा ध्यानपरा काली चिन्तनतत्परा ।
तदा काली प्रसन्नाभूत्क्षणार्द्धेन महेश्वरी ॥ ५७ ॥

वरम्ब्रूहि वरम्ब्रूहि वरम्ब्रूहीति सादरम् ।
मम सिद्धिवरन्देहि वरो यः प्रार्थ्यते मया ॥ ५८ ॥

तादृगुपायङ्कथय येन शक्तिर्भविष्यति ।
मम नामसहस्रञ्च मया पूर्व्वं विनिर्मितम् ॥ ५९ ॥

मत्स्वरूपङ्ककाराख्यम्महासाम्राज्यनामकम् ।
वरदानाभिधन्नाम क्षणार्द्धाद्वरदायकम् ॥ ६० ॥

तत्पठस्व महामाये तव शक्तिर्भविष्यति ।
ततः प्रभृति श्रीविद्या तन्नामपाठतत्परा ॥ ६१ ॥

तदेव नामसाहस्रं सुन्दरीशक्तिदायकम् ।
कथ्यते नामसाहस्रं सावधानमनाः शृणु ॥ ६२ ॥

सर्व्वसाम्राज्यमेधाख्य-नामसाहस्रकस्य च ।
महाकाल ऋषिः प्रोक्त उष्णिक्छन्दः प्रकीर्तितम् ॥६३॥

देवता दक्षिणा काली मायाबीजम्प्रकीर्तितम् ।
हूँ शक्ति कालिकाबीजङ्कीलकम्परिकीर्तितम् ॥ ६४ ॥

ध्यानञ्च पूर्व्ववत्कृत्वा साधयस्वेष्टसाधनम् ।
कालिकावरदानादिस्वेष्टार्थे विनियोगतः ॥ ६५ ॥

ॐ अस्य श्रीसर्वसाम्राज्यमेधानामकालीरूपककारात्मक-सहस्रनामस्तोत्रमन्त्रस्य महाकाल ऋषिरनुष्टुप् छन्दः, श्रीदक्षिणमहाकाली देवता, ह्रीं बीजम्, हूँ शक्तिः, क्रीं कीलकम्, कालीवरदानाद्यखिलेष्टार्थे जपे विनियोगः ।

ॐक्रीङ्काली क्रूं कराली च कल्याणी कमला कला ।
कलावती कलाढ्या च कलापूज्या कलात्मिका ॥ १ ॥

कलादृष्टा कलापुष्टा कलामस्ता कलाधरा ।
कलाकोटिसमाभासा कलाकोटिप्रपूजिता ॥ २ ॥

कलाकर्म्म कलाधारा कलापारा कलागमा ।
कलाधारा कमलिनी ककारा करुणा कविः ॥ ३ ॥

ककारवर्णसर्व्वाङ्गी कलाकोटिप्रभूषिता ।
ककारकोटिगुणिता ककारकोटिभूषणा ॥ ४ ॥

ककारवर्णहृदया ककारमनुमण्डिता ।
ककारवर्णनिलया काकशब्दपरायणा ॥ ५ ॥

ककारवर्णमुकुटा ककारवर्णभूषणा ।
ककारवर्णरूपा च काकशब्दपरायणा ॥ ६ ॥

ककवीरास्फालरता कमलाकरपूजिता ।
कमलाकरनाथा च कमलाकररूपधृक् ॥ ७ ॥

कमलाकरसिद्धिस्था कमलाकरपारदा ।
कमलाकरमध्यस्था कमलाकरतोषिता ॥ ८ ॥

कथङ्कारपरालापा कथङ्कारपरायणा ।
कथङ्कारपदान्तस्था कथङ्कारपदार्थभूः ॥ ९ ॥

कमलाक्षी कमलजा कमलाक्षप्रपूजिता ।
कमलाक्षवरोद्युक्ता ककारा कर्बुराक्षरा ॥ १० ॥

करतारा करच्छिन्ना करश्यामा करार्णवा ।
करपूज्या कररता करदा करपूजिता ॥ ११ ॥

करतोया करामर्षा कर्म्मनाशा करप्रिया ।
करप्राणा करकजा करका करकान्तरा ॥ १२ ॥

करकाचलरूपा च करकाचलशोभिनी ।
करकाचलपुत्री च करकाचलतोषिता ॥ १३ ॥

करकाचलगेहस्था करकाचलरक्षिणी ।
करकाचलसम्मान्या करकाचलकारिणी ॥ १४ ॥

करकाचलवर्षाढ्या करकाचलरञ्जिता ।
करकाचलकान्तारा करकाचलमालिनी ॥ १५ ॥

करकाचलभोज्या च करकाचलरूपिणी ।
करामलकसंस्था च करामलकसिद्धिदा ॥ १६ ॥

करामलकसम्पूज्या करामलकतारिणी ।
करामलककाली च करामलकरोचिनी ॥ १७ ॥

करामलकमाता च करामलकसेविनी ।
करामलकवद्ध्येया करामलकदायिनी ॥ १८ ॥

कञ्जनेत्रा कञ्जगतिः कञ्जस्था कञ्जधारिणी ।
कञ्जमालाप्रियकरी कञ्जरूपा च कञ्जना ॥ १९ ॥

कञ्जजाति‿कञ्जगति‿कञ्जहोमपरायणा ।
कञ्जमण्डलमध्यस्था कञ्चाभरणभूषिता ॥ २० ॥

कञ्जसम्माननिरता कञ्जोत्पत्तिपरायणा ।
कञ्जराशिसमाकारा कञ्जारण्यनिवासिनी ॥ २१ ॥

करञ्जवृक्षमध्यस्था करञ्जवृक्षवासिनी ।
करञ्जफलभूषाढ्या करञ्जारण्यवासिनी ॥ २२ ॥

करञ्जमालाभरणा करवालपरायणा ।
करवालप्रहृष्टात्मा करवालप्रिया गतिः ॥ २३ ॥

करवालप्रिया कन्था करवालविहारिणी ।
करवालमयी कर्म्मा करवालप्रियङ्करी ॥ २४ ॥

कबन्धमालाभरणा कबन्धराशिमध्यगा ।
कबन्धकूटसंस्थाना कबन्धानन्तभूषणा ॥ २५ ॥

कबन्धनादसन्तुष्टा कबन्धासनधारिणी ।
कबन्धगृहमध्यस्था कबन्धवनवासिनीं ॥ २६ ॥

कबन्धकाञ्चीकरणी कबन्धराशिभूषणा ।
कबन्धमालाजयदा कबन्धदेहवासिनी ॥ २७ ॥

कबन्धासनमान्या च कपालमाल्यधारिणी ।
कपालमालामध्यस्था कपालव्रततोषिता ॥ २८ ॥

कपालदीपसन्तुष्टा कपालदीपरूपिणी ।
कपालदीपवरदा कपालकज्जलस्थिता ॥ २९ ॥

कपालमालाजयदा कपालजपतोषिणी ।
कपालसिद्धिसंहृष्टा कपालभोजनोद्यता ॥ ३० ॥

कपालव्रतसंस्थाना कपालकमलालया ।
कवित्वामृतसारा च कवित्वामृतसागरा ॥ ३१ ॥

कवित्वसिद्धिसंहृष्टा कवित्वादानकारिणी ।
कविपूज्या कविगतिः कविरूपा कविप्रिया ॥ ३२ ॥

कविब्रह्मानन्दरूपा कवित्वव्रततोषिता ।
कविमानससंस्थाना कविवाञ्छाप्रपूरिणी ॥ ३३ ॥

कविकण्ठस्थिता कंह्रींकंकंकंकविपूर्त्तिदा ।
कज्जला कज्जलादानमानसा कज्जलप्रिया ॥ ३४ ॥

कपालकज्जलसमा कज्जलेशप्रपूजिता ।
कज्जलार्णवमध्यस्था कज्जलानन्दरूपिणी ॥ ३५ ॥

कज्जलप्रियसन्तुष्टा कज्जलप्रियतोषिणी ।
कपालमालाभरणा कपालकरभूषणा ॥ ३६ ॥

कपालकरभूषाढ्या कपालचक्रमण्डिता ।
कपालकोटिनिलया कपालदुर्ग्गकारिणी ॥ ३७ ॥

कपालगिरिसंस्थाना कपालचक्रवासिनी ।
कपालपात्रसन्तुष्टा कपालार्घ्यपरायणा ॥ ३८ ॥

कपालार्घ्यप्रियप्राणा कपालार्घ्यवरप्रदा ।
कपालचक्ररूपा च कपालरूपमात्रगा ॥ ३९ ॥

कदली कदलीरूपा कदलीवनवासिनी ।
कदलीपुष्पसम्प्रीता कदलीफलमानसा ॥ ४० ॥

कदलीहोमसन्तुष्टा कदलीदर्शनोद्यता ।
कदलीगर्भमध्यस्था कदलीवनसुन्दरी ॥ ४१ ॥

कदम्बपुष्पनिलया कदम्बवनमध्यगा ।
कदम्बकुसुमामोदा कदम्बवनतोषिणी ॥ ४२ ॥

कदम्बपुष्पसम्पूज्या कदम्बपुष्पहोमदा ।
कदम्बपुष्पमध्यस्था कदम्बफलभोजिनी ॥ ४३ ॥

कदम्बकाननान्तःस्था कदम्बाचलवासिनी ।
कक्षपा कक्षपाराध्या कक्षपासनसंस्थिता ॥ ४४ ॥

कर्ण्णपूरा कर्ण्णनासा कर्ण्णाढ्या कालभैरवी ।
कलप्रीता कलहृदा कलहा कलहातुरा ॥ ४५ ॥

कर्ण्णयक्षी कर्ण्णवार्ता कथिनी कर्ण्णसुन्दरी ।
कर्ण्णपिशाचिनी कर्ण्णमञ्जरी कपिकक्षदा ॥ ४६ ॥

कविकक्षाविरूपाढ्या कविकक्षस्वरूपिणी ।
कस्तूरीमृगसंस्थाना कस्तूरीमृगरूपिणी ॥ ४७ ॥

कस्तूरीमृगसन्तोषा कस्तूरीमृगमध्यगा ।
कस्तूरीसनीलाङ्गी कस्तूरीगन्धतोषिता ॥ ४८ ॥

कस्तूरीपूजकप्राणा कस्तूरीपूजकप्रिया ।
कस्तूरीप्रेमसन्तुष्टा कस्तूरीप्राणधारिणी ॥ ४९ ॥

कस्तूरीपूजकानन्दा कस्तूरीगन्धरूपिणी ।
कस्तूरीमालिकारूपा कस्तूरीभोजनप्रिया ॥ ५० ॥

कस्तूरीतिलकानन्दा कस्तूरीतिलकप्रिया ।
कस्तूरीहोमसन्तुष्टा कस्तूरीतर्प्पणोद्यता ॥ ५१ ॥

कस्तूरीमार्ज्जनोद्युक्ता कस्तूरीचक्रपूजिता ।
कस्तूरीपुष्पसम्पूज्या कस्तूरीचर्व्वणोद्यता ॥ ५२ ॥

कस्तूरीगर्भमध्यस्था कस्तूरीवस्त्रधारिणी ।
कस्तूरिकामोदरता कस्तूरीवनवासिनी ॥ ५३ ॥

कस्तूरीवनसंरक्षा कस्तूरीप्रेमधारिणी ।
कस्तूरीशक्तिनिलया कस्तूरीशक्तिकुण्डगा ॥ ५४ ॥

कस्तूरीकुण्डसंस्नाता कस्तूरीकुण्डमञ्जना ।
कस्तूरीजीवसन्तुष्टा कस्तूरीजीवधारिणी ॥ ५५ ॥

कस्तूरीपरमामोदा कस्तूरीजीवनक्षमा ।
कस्तूरीजातिभावस्था कस्तूरीगन्धचुम्बना ॥ ५६ ॥

कस्तूरीगन्धसंशोभा-विराजितकपालभूः ।
कस्तूरीमदनान्तःस्था कस्तूरीमदहर्षदा ॥ ५७ ॥

कस्तूरींकवितानाढ्या कस्तूरीगृहमध्यगा ।
कस्तूरीस्पर्शकप्राणा कस्तूरीविन्दकान्तका ॥ ५८ ॥

कस्तूर्य्यामोदरसिका कस्तूरीक्रीडनोद्यता ।
कस्तूरीदाननिरता कस्तूरीवरदायिनी ॥ ५९ ॥

कस्तूरीस्थापनासक्ता कस्तूरींस्थानरञ्जिनी ।
कस्तूरीकुशलप्रश्ना कस्तूरीस्तुतिवन्दिता ॥ ६० ॥

कस्तूरीवन्दकाराध्या कस्तूरीस्थानवासिनी ।
कहरूपा कहाढ्या च कहानन्दा कहात्मभूः ॥ ६१ ॥

कहपूज्या कहात्याख्या कहहेया कहात्मिका ।
कहमाला कण्ठभूषा कहमन्त्रजपोद्यता ॥ ६२ ॥

कहनामस्मृतिपरा कहनामपरायणा ।
कहपरायणरता कहदेवीं कहेश्वरी ॥ ६३ ॥

कहहेतुकहानन्दा कहनादपरायणा ।
कहमाता कहान्तस्था कहमन्त्रा कहेश्वरा ॥ ६४ ॥

कहगेया कहाराध्या कहध्यानपरायणा ।
कहतन्त्रा कहकहा कहचर्य्यापरायणा ॥ ६५ ॥

कहाचारा कहगति॒कहताण्डवकारिणी ।
कहारण्या कहगति॒कहशक्तिपरायणा ॥ ६६ ॥

कहराज्यनता कर्म्मसाक्षिणी कर्म्मसुन्दरी ।
कर्म्मविद्या कर्म्मगति॒कर्म्मतन्त्रपरायणा ॥ ६७ ॥

कर्म्ममात्रा कर्म्मगात्रा कर्म्मधर्म्मपरायणा ।
कर्म्मरेखानाशकर्त्री कर्म्मरेखाविनोदिनी ॥ ६८ ॥

कर्मरेखामोहकारी कर्म्मकीर्तिपरायणा ।
कर्म्मविद्या कर्म्मसारा कर्म्मधारा च कर्म्मभूः ॥ ६९ ॥

कर्म्मकारी कर्म्महारी कर्मकौतुकसुन्दरी ।
कर्म्मकाली कर्म्मतारा कर्म्मच्छिन्ना च कर्म्मदा ॥ ७० ॥

कर्म्मचाण्डालिनी कर्म्मवेदमाता च कर्म्मभूः ।
कर्म्मकाण्डरतानन्ता कर्म्मकाण्डानुमानिता ॥ ७१ ॥

कर्म्मकाण्डपरीणाहा कमठी कमठाकृतिः ।
कमठाराध्यहृदया कमठाकण्ठसुन्दरी ॥ ७२ ॥

कमठासनसंसेव्या कमठीकर्म्मतत्परा ।
करुणाकरकान्ता च करुणाकरवन्दिता ॥ ७३ ॥

कठोराकरमाला च कठोरकुचधारिणी ।
कपर्द्दिनी कपटिनी कठिनी कङ्कभूषणा ॥ ७४ ॥

करभोरु कठिनदा करभा करभालया ।
कलभाषामयी कल्पा कल्पना कल्पदायिनी ॥ ७५ ॥

कमलस्था कलामाला कमलास्या क्वणत्प्रभा ।
ककुद्मिनी कष्टवती करणीयकथार्च्चिता ॥ ७६ ॥

कचार्चिता कचतनु कचसुन्दरधारिणी ।
कठोरकुचसँल्लग्ना कटिसूत्रविराजिता ॥ ७७ ॥

कर्ण्णभक्षप्रिया कन्दाकथा कन्दगति कलिः ।
कलिघ्नी कलिदूती च कविनायकपूजिता ॥ ७८ ॥

कणकक्षानियन्त्री च कश्चित्कविवरार्च्चिता ।
कर्त्री च कर्त्तृकाभूषा करिणी कर्ण्णशत्रुपा ॥ ७९ ॥

करणेशी करणपा कलवाचा कलानिधिः ।
कलनाकलनाधारा कलनाकारिकाकरा ॥ ८० ॥

कलगेया कर्क्कराशि कर्क्कराशिप्रपूजिता ।
कन्याराशि कन्यका च कन्यकाप्रियभाषिणी ॥ ८१ ॥

कन्यकादानसन्तुष्टा कन्यकादानतोषिणी ।
कन्यादानकरानन्दा कन्यादानग्रहेष्टदा ॥ ८२ ॥

कर्ष्षणा कक्षदहना कामिता कमलासना ।
करमालानन्दकर्त्री करमालाप्रपोषिता ॥ ८३ ॥

करमालाशयानन्दा करमालासमागमा ।
करमालासिद्धिदात्री करमालाकरप्रिया ॥ ८४ ॥

करप्रिया कररता करदानपरायणा ।
कलानन्दा कलिगतिः कलिपूज्या कलिप्रसूः ॥ ८५ ॥

कलनादनिनादस्था कलनादवरप्रदा ।
कलनादसमाजस्था कहोला च कहोलदा ॥ ८६ ॥

कहोलगेहमध्यस्था कहोलवरदायिनी ।
कहोलकविताधारा कहोलऋषिमानिता ॥ ८७ ॥

कहोलमानसाराध्या कहोलवाक्यकारिणी ।
कर्त्तृरूपा कर्त्तृमयी कर्त्तृमाता च कर्त्तरी ॥ ८८ ॥

कनीया कनकाराध्या कनीनकमयी तथा ।
कनीयानन्दनिलया कनकानन्दतोषिता ॥ ८९ ॥

कनीयककराकाष्ठा कथार्णवकरी करीं ।
करिगम्या करिगति करिध्वजपरायणा ॥ ९० ॥

करिनाथप्रिया कण्ठा कथानकप्रतोषिता ।
कमनीया कमनका कमनीयविभूषणा ॥ ९१ ॥

कमनीयसमाजस्था कमनीयव्रतप्रिया ।
कमनीयगुणाराध्या कपिला कपिलेश्वरी ॥ ९२ ॥

कपिलाराध्यहृदया कपिलाप्रियवादिनी ।
कहचक्रमन्त्रवर्णा कहचक्रप्रसूनका ॥ ९३ ॥

कएईल्ह्रींस्वरूपा च कएईल्ह्रींवरप्रदा ।
कएईल्ह्रींसिद्धिदात्री कएईल्ह्रींस्वरूपिणी ॥ ९४ ॥

कएईल्ह्रींमन्त्रवर्णा कएईल्ह्रींप्रसूकला ।
कवर्गा च कपाटस्था कपाटोद्घाटनक्षमा ॥ ९५ ॥

कङ्काली च कपाली च कङ्कालप्रियभाषिणी ।
कङ्कालभैरवाराध्या कङ्कालमानसस्थिता ॥ ९६ ॥

कङ्कालमोहनिरता कङ्कालमोहदायिनी ।
कलुषघ्नी कलुषहा कलुषार्तिविनाशिनी ॥ ९७ ॥

कलिपुष्पा कलादाना कशिपु कश्यपार्च्चिता ।
कश्यपा कश्यपाराध्या कलिपूर्णकलेवरा ॥ ९८ ॥

कलेवरकरी काञ्ची कवर्गा च करालका ।
करालभैरवाराध्या करालभैरवेश्वरी ॥ ९९ ॥

कराला कलनाधारा कपर्द्दीशवरप्रदा ।
कपर्द्दीशप्रेमलता कपर्द्दिमालिकायुता ॥ १०० ॥

कपर्द्दिजपमालाढ्या करवीरप्रसूनदा ।
करवीरप्रियप्राणा करवीरप्रपूजिता ॥ १०१ ॥

कर्णिकारसमाकारा कर्ण्णिकारप्रपूजिता ।
करिषाग्निस्थिता कर्ष्षा कर्ष्षमात्रसुवर्ण्णदा ॥ १०२ ॥

कलशा कलशाराध्या कषाया करिगानदा ।
कपिला कलकण्ठी च कलिकल्पलता मता ॥ १०३ ॥

कल्पलता कल्पमाता कल्पकारी च कल्पभूः ।
कर्पूरामोदरुचिरा कर्पूरामोदधारिणी ॥ १०४ ॥

कर्पूरमालाभरणा कर्पूरवासपूर्तिदा ।
कर्पूरमालाजयदा कर्पूरार्णवमध्यगा ॥ १०५ ॥

कर्पूरतर्पणरता कटकाम्बरधारिणी ।
कपटेश्वरसम्पूज्या कपटेश्वररूपिणी ॥ १०६ ॥

कद्रुः कपिध्वजाराध्या कलापपुष्पधारिणी ।
कलापपुष्परुचिरा कलापपुष्पपूजिता ॥ १०७ ॥

क्रकचा क्रकचाराध्या कथम्ब्रूमा करालता ।
कथंकारविनिर्मुक्ता काली कालक्रिया क्रतुः ॥ १०८ ॥

कामिनी कामिनीपूज्या कामिनीपुष्पधारिणी ।
कामिनीपुष्पनिलया कामिनीपुष्पपूर्णिमा ॥ १०९ ॥

कामिनीपुष्पपूजार्हा कामिनीपुष्पभूषणा ।
कामिनीपुष्पतिलका कामिनीकुण्डचुम्बना ॥ ११० ॥

कामिनीयोगसन्तुष्टा कामिनीयोगभोगदा ।
कामिनीकुण्डसम्मग्ना कामिनीकुण्डमध्यगा ॥ १११ ॥

कामिनीमानसाराध्या कामिनीमानतोषिता ।
कामिनीमानसंचारा कालिका कालकालिका ॥ ११२ ॥

कामा च कामदेवी च कामेशी कामसम्भवा ।
कामभावा कामरता कामार्ता काममञ्जरी ॥ ११३ ॥

काममञ्जीररणिता कामदेवप्रियान्तरा ।
कामकाली कामकला कालिका कमलार्चिता ॥ ११४ ॥

कादिका कमला काली कालानलसमप्रभा ।
कल्पान्तदहना कान्ता कान्तारप्रियवासिनी ॥ ११५ ॥

कालपूज्या कालरता कालमाता च कालिनी ।
कालवीरा कालघोरा कालसिद्धा च कालदा ॥ ११६ ॥

कालाञ्जनसमाकारा कालञ्जरनिवासिनी ।
कालऋद्धिः कालवृद्धिः कारागृहविमोचिनी ॥ ११७ ॥

कादिविद्या कादिमाता कादिस्था कादिसुन्दरी ।
काशी काञ्ची च काञ्चीशा काशीशवरदायिनी ॥ ११८ ॥

क्रींबीजा चैव क्रांबीजा हृदयाय नमस्स्मृता ।
काम्या काम्यगतिः काम्यसिद्धिदात्री च कामभूः ॥ ११९ ॥

कामाख्या कामरूपा च कामचापविमोचिनी ।
कामदेवकलारामा कामदेवकलालया ॥ १२० ॥

कामरात्रिः कामदात्री कान्ताराचलवासिनी ।
कामरूपा कालगतिः कामयोगपरायणा ॥ १२१ ॥

कामसम्मर्दनरता कामगेहविकाशिनी ।
कालभैरवभार्या च कालभैरवकामिनी ॥ १२२ ॥

कालभैरवयोगस्था कालभैरवयोगदा ।
कामधेनुः कामदोग्ध्री काममाता च कान्तिदा ॥ १२३ ॥

कामुका कामुकाराध्या कामुकानन्दवर्धिनी ।
कार्तवीर्या कार्तिकेया कार्तिकेयप्रपूजिता ॥ १२४ ॥

कार्या कारणदा कार्यकारिणी कारणान्तरा ।
कान्तिगम्या कान्तिमयी कान्त्या कात्यायनी च का ॥ १२५ ॥

कामसारा च काश्मीरा काश्मीराचारतत्परा ।
कामरूपाचाररता कामरूपप्रियंवदा ॥ १२६ ॥

कामरूपाचारसिद्धिः कामरूपमनोमयी ।
कार्तिकी कार्तिकाराध्या काञ्चनारप्रसूनभूः ॥ १२७ ॥

काञ्चनारप्रसूनाभा काञ्चनारप्रपूजिता ।
काञ्चरूपा काञ्चभूमिः कांस्यपात्रप्रभोजिनी ॥ १२८ ॥

कांस्यध्वनिमयी कामसुन्दरी कामचुम्बना ।
काशपुष्पप्रतीकाशा कामद्रुमसमागमा ॥ १२९ ॥

कामपुष्पा कामभूमिः कामपूज्या च कामदा ।
कामदेहा कामगेहा कामबीजपरायणा ॥ १३० ॥

कामध्वजसमारूढा कामध्वजसमास्थिता ।
काश्यपी काश्यपाराध्या काश्यपानन्ददायिनी ॥ १३१ ॥

कालिन्दीजलसंकाशा कालिन्दीजलपूजिता ।
कादेवपूजानिरता कादेवपरमार्थदा ॥ १३२ ॥

कार्मणा कार्मणाकारा कामकार्मणकारिणी ।
कार्मणत्रोटनकरी काकिनी कारणाह्वया ॥ १३३ ॥

काव्यामृता च कालिङ्गा कालिङ्गमर्दनोद्यता ।
कालागुरुविभूषाढ्या कालागुरुविभूतिदा ॥ १३४ ॥

कालागुरुसुगन्धा च कालागुरुप्रतर्पणा ।
कावेरीनीरसम्प्रीता कावेरीतीरवासिनी ॥ १३५ ॥

कालचक्रभ्रमाकारा कालचक्रनिवासिनी ।
कानना काननाधारा कारुः कारुणिकामयी ॥ १३६ ॥

काम्पिल्यवासिनी काष्ठा कामपत्नी च कामभूः ।
कादम्बरीपानरता तथा कादम्बरीकला ॥ १३७ ॥

कामवन्द्या च कामेशी कामराजप्रपूजिता ।
कामराजेश्वरीविद्या कामकौतुकसुन्दरी ॥ १३८ ॥

काम्बोजजा काञ्चनदा कांस्यकाञ्चनकारिणी ।
काञ्चनाद्रिसमाकारा काञ्चनाद्रिप्रदानदा ॥ १३९ ॥

कामकीर्तिः कामकेशी कारिका कान्तराश्रया ।
कामभेदी च कामार्तिनाशिनी कामभूमिका ॥ १४० ॥

कालनिर्णाशिनी काव्यवनिता कामरूपिणी ।
कायस्था कामसन्दीप्तिः काव्यदा कालसुन्दरी ॥ १४१ ॥

कामेशी कारणवरा कामेशीपूजनोद्यता ।
काञ्चीनूपुरभूषाढ्या कुङ्कुमाभरणान्विता ॥ १४२ ॥

कालचक्रा कालगतिः कालचक्रमनोभवा ।
कुन्दमध्या कुन्दपुष्पा कुन्दपुष्पप्रिया कुजा ॥ १४३ ॥

कुजमाता कुजाराध्या कुठारवरधारिणी ।
कुञ्जरस्था कुशरता कुशेशयविलोचना ॥ १४४ ॥

कुनठी कुररी कुद्रा कुरङ्गी कुटजाश्रया ।
कुम्भीनसविभूषा च कुम्भीनसवधोद्यता ॥ १४५ ॥

कुम्भकर्णमनोल्लासा कुलचूडामणिः कुला ।
कुलालगृहकन्या च कुलचूडामणिप्रिया ॥ १४६ ॥

कुलपूज्या कुलाराध्या कुलपूजापरायणा ।
कुलपूजा तथा कुक्षिः कुररीगणसेविता ॥ १४७ ॥

कुलपुष्पा कुलरता कुलपुष्पपरायणा ।
कुलवस्त्रा कुलाराध्या कुलकुण्डसमप्रभा ॥ १४८ ॥

कुलकुण्डसमोल्लासा कुण्डपुष्पपरायणा ।
कुण्डपुष्पा प्रसन्नास्या कुण्डगोलोद्भवात्मिका ॥ १४९ ॥

कुण्डगोलोद्भवाकारा कुण्डगोलमयी कुहूः ।
कुण्डगोलप्रियप्राणा कुण्डगोलप्रपूजिता ॥ १५० ॥

कुण्डगोलमनोल्लासा कुण्डगोलबलप्रदा ।
कुण्डदेवरता क्रुद्धा कुलसिद्धिकरा परा ॥ १५१ ॥

कुलकुण्डसमाकारा कुलकुण्डसमानभूः ।
कुण्डसिद्धिः कुण्डऋद्धिः कुमारीपूजनोद्यता ॥ १५२ ॥

कुमारीपूजकप्राणा कुमारीपूजकालया ।
कुमारीकामसन्तुष्टा कुमारीपूजनोत्सुका ॥ १५३ ॥

कुमारीव्रतसन्तुष्टा कुमारीरूपधारिणी ।
कुमारीभोजनप्रीता कुमारी च कुमारदा ॥ १५४ ॥

कुमारमाता कुलदा कुलयोनिः कुलेश्वरी ।
कुललिङ्गा कुलानन्दा कुलरम्या कुतर्कधृक् ॥ १५५ ॥

कुन्ती च कुलकान्ता च कुलमार्गपरायणा ।
कुल्ला च कुरुकुल्ला च कुल्लुका कुलकामदा ॥ १५६ ॥

कुलिशाङ्गी कुब्जिका च कुब्जिकानन्दवर्धिनी ।
कुलीना कुञ्जरगतिः कुञ्जरेश्वरगामिनी ॥ १५७ ॥

कुलपाली कुलवती तथैव कुलदीपिका ।
कुलयोगेश्वरी कुण्डा कुङ्कुमारुणविग्रहा ॥ १५८ ॥

कुङ्कुमानन्दसन्तोषा कुङ्कुमार्णववासिनी ।
कुसुमा कुसुमप्रीता कुलभूः कुलसुन्दरी ॥ १५९ ॥

कुमुद्वती कुमुदिनी कुशला कुलटालया ।
कुलटालयमध्यस्था कुलटासङ्गतोषिता ॥ १६० ॥

कुलटाभवनोद्युक्ता कुशावर्ता कुलार्णवा ।
कुलार्णवाचाररता कुण्डली कुण्डलाकृतिः ॥ १६१ ॥

कुमती च कुलश्रेष्ठा कुलचक्रपरायणा ।
कूटस्था कूटदृष्टिश्च कुन्तला कुन्तलाकृतिः ॥ १६२ ॥

कुशलाकृतिरूपा च कूर्चबीजधरा च कूः ।
कुं कुं कुं कुं-शब्दरता क्रूं क्रूं क्रूं क्रूं परायणा ॥ १६३ ॥

कुं कुं कुं कुं-शब्दनिलया कुक्कुरालयवासिनी ।
कुक्कुरासङ्गसंयुक्ता कुक्कुरानन्तविग्रहा ॥ १६४ ॥

कूर्चारम्भा कूर्चबीजा कूर्चजापपरायणा ।
कुचस्पर्शनसन्तुष्टा कुचालिङ्गनहर्षदा ॥ १६५ ॥

कुगतिघ्नी कुबेरार्च्या कुचभूः कुलनायिका ।
कुगायना कुचधरा कुमाता कुन्ददन्तिनी ॥ १६६ ॥

कुगेया कुहराभाषा कुगेया कुघ्नदारिका ।
कीर्तिः किरातिनी क्लिन्ना किन्नरा किन्नरी क्रिया ॥१६७॥

क्रीङ्कारा क्रीञ्जपासक्ता क्रीं हूं स्त्रीं मन्त्ररूपिणी ।
किर्म्मीरितदृशापाङ्गी किशोरी च किरीटिनी ॥ १६८ ॥

कीटभाषा कीटयोनिः कीटमाता च कीटदा ।
किंशुका कीरभाषा च क्रियासारा क्रियावती ॥ १६९ ॥

कीं कीं शब्दपरा क्लीं क्लीं क्लूं क्लैं क्लौं मन्त्ररूपिणी ।
कां कीं कूं कैंस्वरूपा च कः फट्मन्त्रस्वरूपिणी ॥ १७० ॥

केतकीभूषणानन्दा केतकीभरणान्विता ।
कैकदा केशिनी केशी केशीसूदनतत्परा ॥ १७१ ॥

केशरूपा केशमुक्ता कैकेयी कौशिकी तथा ।
कैरवा कैरवाह्लादा केशरा केतुरूपिणी ॥ १७२ ॥

केशवाराध्यहृदया केशवासक्तमानसा ।
क्लैव्यविनाशिनी क्लैञ्च क्लैंबीजजपतोषिता ॥ १७३ ॥

कौशल्या कोशलाक्षी च कोशा च कोमला तथा ।
कोलापुरनिवासा च कोलासुरविनासिनी ॥ १७४ ॥

कोटिरूपा कोटिरता क्रोधिनी क्रोधरूपिणी ।
केका च कोकिला कोटिः कोटिमन्त्रपरायणा ॥ १७५ ॥

कोटयनन्तमन्त्रयुता कैरूपा केरलाश्रया ।
केरलाचारनिपुणा केरलेन्द्रगृहस्थिता ॥ १७६ ॥

केदारश्रमसंस्था च केदारेश्वरपूजिता ।
क्रोधरूपा क्रोधपदा क्रोधमाता च कौशिकी ॥ १७७ ॥

कोदण्डधारिणी क्रौञ्चा कौशल्या कौलमार्गगा ।
कौलिनी कौलिकाराध्या कौलिकागारवासिनी ॥ १७८ ॥

कौतुकी कौमुदी कौला कुमारी कौरवार्चिता ।
कौण्डिन्या कौशिकी क्रोधा ज्वालाभा सुरूपिणी ॥ १७९ ॥

कोटिकालानलज्वाला कोटिमार्तण्डविग्रहा ।
कृत्तिका कृष्णवर्णा च कृष्णकृत्या क्रियातुरा ॥ १८० ॥

कृशाङ्गी कृतकृत्या च क्रः फट् स्वाहारूपिणी ।
क्रौं क्रौं हूं फट् मन्त्रवर्णा क्रीं ह्रीं हूं फट् नमः स्वधा ॥१८१॥

क्रीं क्रीं ह्रीं ह्रीं तथा हूं हूं फट् स्वाहा-मन्त्ररूपिणीं ।
इति श्रीसर्वसाम्राज्यमेधानामसहस्रकम् ॥ १८२ ॥

सुन्दरीशक्तिदानाख्य-स्वरूपाभिधमेव च ।
कथितं दक्षिणाकाल्याः सुन्दर्यै प्रीतियोगतः ॥ १८३ ॥

वरदानप्रसङ्गेन रहस्यमपि दर्शितम् ।
गोपनीयं सदा भक्त्या पठनीयं परात्परम् ॥ १८४ ॥

प्रातर्मध्याह्नकाले च मध्यार्धरात्रयोरपि ।
यज्ञकाले जपान्ते च पठनीयं विशेषतः ॥ १८५ ॥

यः पठेत् साधको धीरः कालीरूपो हि वर्षतः ।
पठेद् वा पाठयेद् वापि शृणोति श्रावयेद् वापि ॥ १८६ ॥

वाचकं तोषयेद् वापि स भवेत् कालिकातनुः ।
सहेलं वा सलीलं वा यश्चैनं मानवः पठेत् ॥ १८७ ॥

सर्वदुःखविनिर्मुक्तस्त्रैलोक्यविजयी कविः ।
मृतवन्ध्या काकवन्ध्या कन्यावन्ध्या च वन्ध्यका ॥ १८८ ॥

पुष्पवन्ध्या शूलवन्ध्या शृणुयात् स्तोत्रमुत्तमम् ।
सर्वसिद्धिप्रदातारं सत्कविं चिरजीवितम् ॥ १८९ ॥

पाण्डित्यकीर्तिसंयुक्तं लभते नात्र संशयः ।
स यं काममुपस्कृत्य कालीं ध्यात्वा जपेत् स्तवम् ॥ १९० ॥

तं तं कामं करे कृत्वा मन्त्री भवति नान्यथा ।
योनिपुष्पैर्लिङ्गपुष्पैः कुण्डगोलोद्भवैरपि ॥ १९१ ॥

संयोगामृतपुष्पैश्च वस्त्रदेवीप्रसूनकैः ।
कालिपुष्पैः पीठतोयैर्योनिक्षालनतोयकैः ॥ १९२ ॥

कस्तूरीकुङ्कुमैर्देवीं नखकालगुरुक्रमात् ।
अष्टगन्धैर्धूपदीपैर्यवयावकसंयुतैः ॥ १९३ ॥

रक्तचन्दनसिन्दूरैर्मत्स्यमांसादिभूषणैः ।
मधुभिः पायसैः क्षीरैः शोधितैः शोणितैरपि ॥ १९४ ॥

महोपचारैं रक्तैश्च नैवेद्यैः सुरसान्वितैः ।
पूजयित्वा महाकालीं महाकालेन लालिताम् ॥ १९५ ॥

विद्याराज्ञीं कुल्लुकां च जप्त्वा स्तोत्रं जपेच्छिवे ।
कालीभक्तस्त्वेकचित्तः सिन्दूरतिलकाञ्चितः ॥ १९६ ॥

ताम्बूलपूरितमुखो मुक्तकेशो दिगम्बरः ।
शवयोनिस्थितो वीरः श्मशानसुरतान्वितः ॥ १९७ ॥

शून्यालये बिन्दुपीठे पुष्पाकीर्णे शिवावने ।
शयानोत्थप्रभुञ्जानः कालीदर्शनमाप्नुयात् ॥ १९८ ॥

तत्र यद्यत् कृतं कर्म तदनन्तफलं भवेत् ।
ऐश्वर्ये कमला साक्षात् सिद्धौ श्रीकालिकाम्बिका ॥१९९॥

कवित्वे तारिणीतुल्यः सौन्दर्ये सुन्दरीसमः ।
सिन्धोर्धारासमः कार्ये श्रुतौ श्रुतिधरस्तथा ॥ २०० ॥

वज्रास्त्र इव दुर्धर्षः त्रैलोक्यविजयास्त्रभृत् ।
शत्रुहन्ता काव्यकर्ता भवेत् शिवसमः कलौ ॥ २०१ ॥

दिग्विदिक्चन्द्रकर्ता च दिवारात्रिविपर्ययी ।
महादेवसमो योगी त्रैलोक्यस्तम्भकः क्षणात् ॥ २०२ ॥

गानेन तुम्बुरुस्साक्षाद्दाने कर्णसमो भवेत् ।
गजाश्वरथपत्तीनामस्त्राणामधिपः कृती ॥ २०३ ॥

आयुष्येषु भुशुण्डी च जरापलितनाशकः ।
वर्षषोडशवान् भूयात् सर्वकाले महेश्वरी ॥ २०४ ॥

ब्रह्माण्डगोले देवेशि न तस्य दुर्लभं क्वचित् ।
सर्वं हस्तगतं भूयान्नात्र कार्या विचारणा ॥ २०५ ॥

कुलपुष्पयुतं दृष्ट्वा तत्र कालीं विचिन्त्य च ।
विद्याराज्ञीं तु सम्पूज्य पठेन्नामसहस्रकम् ॥ २०६ ॥

मनोरथमयी सिद्धिस्तस्य हस्ते सदा भवेत् ।
परदारान् समालिङ्ग्य सम्पूज्य परमेश्वरीम् ॥ २०७ ॥

हस्ताहस्तिकया योगं कृत्वा जप्त्वा स्तवम्पठेत् ।
योनिं वीक्ष्य जपेत्स्तोत्रं कुबेरादधिको भवेत् ॥ २०८ ॥

कुण्डगोलोद्भवं गृह्यवर्णाक्तं होमयेन्निशि ।
पितृभूमौ महेशानि विधिरेखाम्प्रमार्ज्जयेत् ॥ २०९ ॥

तरुणीं सुन्दरीं रम्यां चञ्चलाङ्कामगर्व्विताम् ।
समानीय प्रयत्नेन संशोध्य न्यासयोगतः ॥ २१० ॥

प्रसूनमञ्चं संस्थाप्य पृथिवीङ्कुशिताञ्चरेत् ।
मूलचक्रन्तु सम्भाव्य देव्याश्चारणसँय्युतम् ॥ २११ ॥

सम्पूज्य परमेशानि सङ्कल्प्य तु महेश्वरि ।
जप्त्वा स्तुत्वा महेशानीम्प्रणवं संस्मरेच्छिवे ॥ २१२ ॥

अष्टोत्तरशतैर्योनिं प्रमन्त्र्याचुम्ब्य यत्नतः ।
संयोगीभूय जप्तव्यं सर्वविद्याधिपो भवेत् ॥ २१३ ॥

शून्यागारे शिवारण्ये शिवदेवालये तथा ।
शून्यदेशे तडागे च गङ्गागर्भे चतुष्पथे ॥ २१४ ॥

श्मशाने पर्वतप्रान्ते एकलिङ्गे शिवामुखे ।
मुण्डयोनौ ऋतौ स्नात्वा गेहे वेश्यागृहे तथा ॥ २१५ ॥

कुट्टिनीगृहमध्ये च कदलीमण्डपे तथा ।
पठेत् सहस्रनामाख्यं स्तोत्रं सर्वार्थसिद्धये ॥ २१६ ॥

अरण्ये शून्यगर्ते च रणे शत्रुसमागमे ।
प्रजपेच्च ततो नाम काल्याश्चैव सहस्रकम् ॥ २१७ ॥

बालानन्दपरो भूत्वा पठित्वा कालिकास्तवम् ।
कालीं संचिन्त्य प्रजपेत् पठेन्नामसहस्रकम् ॥ २१८ ॥

सर्वसिद्धीश्वरो भूयाद् वाञ्छासिद्धीश्वरो भवेत् ।
मुण्डचूडकयोर्योनित्वचि वा कोमले शिवे ॥ २१९ ॥

विष्टरे शववस्त्रे वा पुष्पवस्त्रासनेऽपि वा ।
मुक्तकेशो दिशावासा मैथुनी शयने स्थितः ॥ २२० ॥

जप्त्वा कालीं पठेत् स्तोत्रं खेचरीसिद्धिभाग् भवेत् ।
चिकुरं योगमासाद्य शुक्रोत्सारणमेव च ॥ २२१ ॥

जप्त्वा श्रीदक्षिणां कालीं शक्तिपातशतं भवेत् ।
लतां स्पृशञ्जपित्वा च रमित्वा त्वर्चयन्नपि ॥ २२२ ॥

आलोकयन् दिशावासाः परशक्तिं विशेषतः ।
स्तुत्वा श्रीदक्षिणां कालीं योनिं स्वकरगां चरेत् ॥ २२३ ॥

पठेन्नामसहस्रं यः स शिवादधिको भवेत् ।
लतान्तरेषु जप्तव्यं स्तुत्वा कालीं निराकुलः ॥ २२४ ॥

दशावधानो भवति मासमात्रेण साधकः ।
कालरात्र्यां महारात्र्यां वीररात्र्यामपि प्रिये ॥ २२५ ॥

महारात्र्याञ्चतुर्दश्यामष्टम्यां संक्रमेऽपि वा ।
कुहूपूर्णेन्दुशुक्रेषु भौमामायां निशामुखे ॥ २२६ ॥

नवम्यां मङ्गलदिने तथा कुलतिथौ शिवे ।
कुलक्षेत्रे प्रयत्नेन पठेन्नामसहस्रकम् ॥ २२७ ॥

सौदर्शनो भवेदाशु किन्नरीसिद्धिभाग् भवेत् ।
पश्चिमाभिमुखं लिङ्गं वृषशून्यं पुरातनम् ॥ २२८ ॥

तत्र स्थित्वा जपेत्स्तोत्रं सर्वकामाप्तये शिवे ।
भौमवारे निशीथे वा अमावस्यादिदिने शुभे ॥ २२९ ॥

माषभक्तबलिं छागं कृसरान्नं च पायसम् ।
दग्धमीनं शोणितं च दधिदुग्धं गुडार्द्रकम् ॥ २३० ॥

बलिं दत्त्वा जपेत्तत्र त्वष्टोत्तरसहस्रकम् ।
देवगन्धर्वसिद्धौघैः सेवितां सुरसुन्दरीम् ॥ २३१ ॥

लभेद्देवेशि मासेन तस्य चासनसंहतिः ।
हस्तत्रयं भवेदूर्ध्वं नात्र कार्या विचारणा ॥ २३२ ॥

हेलया लीलया भक्त्या कालीं स्तौति नरस्तु यः ।
ब्रह्मादींस्स्तम्भयेद्देवि माहेशीं मोहयेत् क्षणात् ॥ २३३ ॥

आकर्षयेन्महाविद्यां दशपूर्वां त्रियामतः ।
कुर्वीत विष्णुनिर्माणं यमादीनां तु मारणम् ॥ २३४ ॥

ध्रुवमुच्चाटयेन्नूनं सृष्टिनूतनतान्नरः ।
मेषमाहिषमार्जारखरच्छागनरादिकैः ॥ २३५ ॥

खड्गीशूकरकापोतैर्दृष्टिभैश्शशकैः पलैः ।
शोणितैः सास्थिमांसैश्च कारण्डैर्दुग्धपायसैः ॥ २३६ ॥

कादम्बरीसिन्धुमद्यैः सुरारिष्टैश्च सासवैः ।
योनिक्षालिततोयैश्च योनिलिङ्गामृतैरपि ॥ २३७ ॥

स्वजातकुसुमैः पूज्यां जपान्ते तर्पयेच्छिवाम् ।
सर्वसाम्राज्यनाम्ना तु स्तुत्वा नत्वा स्वशक्तितः ॥ २३८ ॥

शक्त्या जपन् पठेत् स्तोत्रं कालीरूपो दिनत्रयात् ।
दक्षिणा कालिका तस्य गेहे तिष्ठति नान्यथा ॥ २३९ ॥

वेश्यालतागृहे गत्वा तस्याश्चुम्बनतत्परः ।
तस्या योनौ मुखं दत्त्वा तद्रसं विलिहञ्जपेत् ॥ २४० ॥

तदन्ते नामसाहस्रं पठेद् भक्तिपरायणः ।
कालिकादर्शनं तस्य भवेदेव त्रियामतः ॥ २४१ ॥

नृत्यपात्रगृहे गत्वा मकारपञ्चकान्वितः ।
प्रसूनमञ्चे संस्थाप्य शक्तिन्यासपरायणः ॥ २४२ ॥

पात्राणां साधनं कृत्वा दिग्वस्त्रान्तां समाचरेत् ।
संभाव्य चक्रं तन्मूले तत्र सावरणां जपेत् ॥ २४३ ॥

शतं भाले शतं केशे शतं सिन्दूरमण्डले ।
शतत्रयं कुचद्वन्द्वे शतं नाभौ महेश्वरि ॥ २४४ ॥

शतं योनौ महेशानि संयोगे च शतत्रयम् ।
जपेत्तत्र महेशानि तदन्ते प्रपठेत्स्तवम् ॥ २४५ ॥

शतावधानो भवति मासमात्रेण साधकः ।
मातङ्गिनीं समानीय किं वा कापालिनीं शिवे ॥ २४६ ॥

दन्तमाला जपे कार्या गले धार्या नृमुण्डजा ।
नेत्रपद्मे योनिचक्रं शक्तिचक्रं स्ववक्त्रके ॥ २४७ ॥

कृत्वा जपेन्महेशानि मुण्डत्रयं प्रपूजयेत् ।
मुण्डासनस्थितो वीरो मकारपञ्चकान्वितः ॥ २४८ ॥

अन्यामालिङ्ग्य प्रजपेदन्यां संचुम्ब्य वै पठेत् ।
अन्यां संपूजयेत्तत्र त्वन्यां संमर्दयञ्जपेत् ॥ २४९ ॥

अन्या योनौ शिवं दत्त्वा पुनः पूर्ववदाचरेत् ।
अवधानसहस्रेषु शशिपातशतेषु च ॥ २५० ॥

राजा भवति देवेशि मासपञ्चकयोगतः ।
यवनीशक्तिमानीय गानशक्तिपरायणाम् ॥ २५१ ॥

कुलाचारमतेनैव तस्या योनिं विकासयेत् ।
तत्र जिह्वां प्रदत्त्वा तु जपेन्नामसहस्रकम् ॥ २५२ ॥

नृकपाले तत्र दीपं ज्वाल्य यत्नेन वै जपेत् ।
महाकविवरो भूयान्नात्र कार्या विचारणा ॥ २५३ ॥

कामार्तो शक्तिमानीय योनौ तु मूलचक्रकम् ।
विलिख्य परमेशानि तत्र मन्त्रं लिखेच्छिवे ॥ २५४ ॥

तल्लिहन् प्रजपेद् देवि सर्वशास्त्रार्थतत्त्ववित् ।
अश्रुतानि च शास्त्राणि वेदादीद् पाठयेद् ध्रुवम् ॥ २५५ ॥

विना न्यासैर्विना पाठैर्विना ध्यानादिभिः प्रिये ।
चतुर्वेदाधिपो भूत्वा त्रिकालज्ञस्त्रिवर्षतः ॥ २५६ ॥

चतुर्विधं च पाण्डित्यं तस्य हस्तगतं क्षणात् ।
शिवाबलिः प्रदातव्या सर्वदा शून्यमण्डले ॥ २५७ ॥

कालीध्यानं मन्त्रचिन्ता नीलसाधनमेव च ।
सहस्रनामपाठश्च कालीनामप्रकीर्तनम् ॥ २५८ ॥

भक्तस्य कार्य्यमेतावदन्यदभ्युदयं विदुः ।
वीरसाधनकं कर्म्म शिवापूजा बलिस्तथा ॥ २५९ ॥

सिन्दूरतिलको देवि वेश्यालापो निरन्तरम् ।
वेश्यागृहे निशाचारो रात्रौ पर्य्यटनं तथा ॥ २६० ॥

शक्तिपूजा योनिदृष्टि खड्गहस्तो दिगम्बरः ।
मुक्तकेशो वीरवेष कुलमूर्तिधरो नरः ॥ २६१ ॥

कालीभक्तो भवेद्देवि नान्यथा क्षोभमाप्नुयात् ।
दुग्धस्वादी योनिलेहो संविवदासवघूर्णितः ॥ २६२ ॥

वेश्यालतासमायोगान्मासात्कल्पलता स्वयम् ।
वेश्याचक्रसमायोगात्कालीचक्रसमस्स्वयम् ॥ २६३ ॥

वेश्यादेहसमायोगात्कालीदेहसमस्स्वयम् ।
वेश्यामध्यगतं व्वीरं कदा पश्यामि साधकम् ॥ २६४ ॥

एवं व्वदति सा काली तस्माद्वेश्या वरा मता ।
वेश्याकन्या तथा पीठ-जातिभेदकुलक्रमात् ॥ २६५ ॥

अकुलक्रमभेदेन ज्ञात्वा चापि कुमारिकाम् ।
कुमारीं पूजयेद् भक्त्या जपान्ते भवनं प्रिये ॥ २६६ ॥

पठेन्नामसहस्रं य‿कालीदर्शनभाग्भवेत् ।
भक्त्या पूज्य कुमारीश्च वेश्याकुलसमुद्भवाम् ॥ २६७ ॥

वस्त्रहेमादिभिस्तोष्य यत्नात्स्तोत्रं पठेच्छिवे ।
त्रैलोक्यविजयी भूयाद्दिवाचन्द्रप्रकाशकः ॥ २६८ ॥

यद्यद्दत्तं कुमार्य्यै तु तदनन्तफलं भवेत् ।
कुमारीपूजनफलं मया वक्तुं न शक्यते ॥ २६९ ॥

चाञ्चल्यादुदितं किञ्चित्क्षम्यतामयमञ्जलिः ।
एका चेत्पूजिता बाला द्वितीया पूजिता भवेत् ॥ २७० ॥

कुमार्य्यश्शक्तयश्चैव सर्व्वमेतच्चराचरम् ।
शक्तिमानीय तद्गात्रे न्यासजालं प्रविन्यसेत् ॥ २७१ ॥

वामभागे च संस्थाप्य जपेन्नामसहस्रकम् ।
सर्व्वसिद्धीश्वरो भूयान्नात्र कार्य्या विचारणा ॥ २७२ ॥

श्मशानस्थो भवेत्स्वस्थो गलितञ्चिकुरञ्चरेत् ।
दिगम्बरः सहस्रश्च सूर्य्यपुष्पं समानयेत् ॥ २७३ ॥

स्ववीर्येण युतं कृत्वा प्रत्येकं प्रजपन् हुनेत् ।
पूज्य ध्यात्वा महाभक्त्या क्षमापालो नर पठेत् ॥ २७४ ॥

नखकेशं स्ववीर्य्यञ्च यद्यत्सम्मार्ज्जनीगतम् ।
मुक्तकेशो दिवावासो मूलमन्त्रपुरःसरः ॥ २७५ ॥

कुजवारे मध्यरात्रे होमं कृत्वा श्मशानके ।
पठेन्नामसहस्रं य्य पृथ्वीशाकर्षणं भवेत् ॥ २७६ ॥

पुष्पयुक्ते भगे देवि सँय्योगानन्दतत्परः ।
पुनश्चिकुरमासाद्य मूलमन्त्रं जपञ्छिवे ॥ २७७ ॥

चितावह्नौ मध्यरात्रे वीर्य्यमुत्सार्य्य यत्नतः ।
कालिकां पूजयेत्तत्र पठेन्नामसहस्रकम् ॥ २७८ ॥

पृथ्वीशाकर्ष्षणं कुर्य्यान्नात्र कार्य्या विचारणा ।
कदलीवनमासाद्य लक्षमात्रं जपेन्नरः ॥ २७९ ॥

मधुमत्या स्वयं देव्या सेव्यमानः स्मरोपमः ।
श्रीमधुमतीत्युक्त्वा तथा स्थावरजङ्गमान् ॥ २८० ॥

आकर्ष्षिणीं समुच्चार्य्य ठंठंस्वाहा समुच्चरेत् ।
त्रैलोक्याकर्ष्षिणी विद्या तस्य हस्ते सदा भवेत् ॥ २८१ ॥

नदीं पुरीञ्च रत्नानि हेमस्त्रीशैलभूरुहान् ।
आकर्षयत्यम्बुनिधिं सुमेरुञ्च दिगन्ततः ॥ २८२ ॥

अलभ्यानि च वस्तूनि दूराद्भूमितलादपि ।
वृत्तान्तञ्च सुरस्थानाद्रहस्यं व्विदुषामपि ॥ २८३ ॥

राज्ञाञ्च कथयत्येषा सत्यं सत्वरमादिशेत् ।
द्वितीयवर्षपाठेन भवेत्पद्मावती शुभा ॥ २८४ ॥

ॐ ह्रींपद्मावतिपदं ततस्त्रैलोक्यनाम च ।
वार्त्ताञ्च कथय द्वन्द्वं स्वाहान्तो मन्त्र ईरितः ॥ २८५ ॥

ब्रह्मविष्ण्वादिकानाञ्च त्रैलोक्यो यादृशो भवेत् ।
सर्व्वं व्वदति देवेशी त्रिकालज्ञ कविश्शुभः ॥ २८६ ॥

त्रिवर्ष्षं पठतो देवि लभेद्भोगवतीं कलाम् ।
महाकालेन दंष्टोऽपि चितामध्यगतोऽपि वा ॥ २८७ ॥

तस्या दर्शनमात्रेण चिरञ्जीवी नरो भवेत् ।
मृतसञ्जीवनीत्युक्त्वा मृतमुत्थापय द्वयम् ॥ २८८ ॥

स्वाहान्तो मनुराख्यातो मृतसञ्जीवनात्मकः ।
चतुर्व्वर्ष्षं पठेद्यस्तु स्वप्नसिद्धस्ततो भवेत् ॥ २८९ ॥

ॐ ह्रींस्वप्नवाराहि कालि स्वप्ने कथयोच्चरेत् ।
अमुकस्यामुकं देहि क्लींस्वाहान्तो मनुर्म्मतः ॥ २९० ॥

स्वप्नसिद्धा चतुर्व्वर्ष्षात्तस्य स्वप्ने सदा स्थिता ।
चतुर्वर्ष्षस्य पाठेन चतुर्व्वेदाधिपो भवेत् ॥ २९१ ॥

तद्धस्तजलसँय्योगान्मूर्ख काव्यं करोति च ।
तस्य वाक्यपरिचयान्मूर्तिर्व्विन्दति काव्यताम् ।। २९२ ।।

मस्तके तु करं कृत्वा वद वाणीमिति ब्रुवन् ।
साधको वाञ्छया कुर्य्यात्तत्तथैव भविष्यति ।। २९३ ।।

ब्रह्माण्डगोलके याश्च याः काश्चिज्जगतीतले ।
समस्तास्सिद्धयो देवि करामलकवद्भवेत् ।। २९४ ।।

साधकस्मृतिमात्रेण यावन्त्यस्सन्ति सिद्धयः ।
स्वयमायान्ति पुरतो जपादीनान्तु का कथा ।। २९५ ।।

विदेशवर्तिनो भूत्वा वर्त्तन्ते चेटका इव ।
अमायाञ्चन्द्रसन्दर्शश्चन्द्रग्रहणमेव च ।। २९६ ।।

अष्टम्याम्पूर्णचन्द्रत्वं चन्द्रसूर्य्याष्टकं तथा ।
अष्टदिक्षु तथाष्टौ च करोत्येव महेश्वरी ।। २९७ ।।

अणिमाखेचरत्वञ्च चराचरपुरीगतिम् ।
पादुकाखड्गवेतालयक्षिणीगुह्यकादयः ।। २९८ ।।

तिलको गुप्तताट्टश्यञ्चराचरकथानकम् ।
मृतसञ्जीविनीसिद्धिर्गुटिका च रसायनम् ।। २९९ ।।

उड्डीनसिद्धिर्देवेशि षष्टिसिद्धीश्वरत्वकम् ।
तस्य हस्ते वसेद्देवि नात्र कार्य्या विचारणा ।। ३०० ।।

केतौ वा दुन्दुभौ वस्त्रे विताने वेष्टने गृहे ।
भित्तौ च फलके देवि लेख्यं पूज्यञ्च यत्नतः ।। ३०१ ।।

मध्ये चक्रं दशाङ्गोक्तं परितो नामलेखनम् ।
तद्धारणान्महेशानि त्रैलोक्यविजयी भवेत् ॥ ३०२ ॥

एको हि शतसाहस्रं निर्जित्य च रणाङ्गणे ।
पुनरायाति च सुखं स्वगृहं प्रति पार्व्वति ॥ ३०३ ॥

एको हि शतसन्दर्शी लोकानां भवति ध्रुवम् ।
कलशं स्थाप्य यत्नेन नामसाहस्रकं पठेत् ॥ ३०४ ॥

सेकः कार्य्यो महेशानि सर्व्वापत्तिनिवारणे ।
भूतप्रेतग्रहादीनां रक्षसां ब्रह्मरक्षसाम् ॥ ३०५ ॥

वेतालानां भैरवाणां स्कन्दवैनायकादिकान् ।
नाशयेत् क्षणमात्रेण नात्र कार्य्या विचारणा ॥ ३०६ ॥

भस्माभिमन्त्रितं कृत्वा ग्रहग्रस्ते विलेपयेत् ।
भस्मसङ्क्षेपणादेव सर्व्वग्रहविनाशनम् ॥ ३०७ ॥

नवनीतञ्चाभिमन्त्र्य स्त्रीणां दद्यान्महेश्वरि ।
वन्ध्या पुत्रप्रदा देवि नात्र कार्य्या विचारणा ॥ ३०८ ॥

कण्ठे वा वामबाहौ वा योनौ वा धारणाच्छिवे ।
बहुपुत्रवती नारी सुभगा जायते ध्रुवम् ॥ ३०९ ॥

पुरुषो दक्षिणाङ्गे तु धारयेत्सर्व्वसिद्धये ।
बलवान्कीर्तिमान् धन्यो धार्मिकः साधकः कृती ॥ ३१० ॥

बहुपुत्रो रथानाञ्च गजानामधिपः सुधीः ।
कामिनीकर्ष्षणोद्युक्तः क्रीञ्च दक्षिणकालिके ॥ ३११ ॥

क्रींस्वाहा प्रजपेन्मन्त्रमयुतं नामपाठकः ।
आकर्षणं चरेद् देवि जलखेचरभूगतान् ॥ ३१२ ॥

वशीकरणकामो हि हूं हूं ह्रीं ह्रीं च दक्षिणे ।
कालिके पूर्व्वबीजानि पूर्व्ववत्प्रजपन् पठेत् ॥ ३१३ ॥

उर्व्वशीमपि वशयेन्नात्र कार्य्या विचारणा ।
क्रींश्च दक्षिणकालिके स्वाहायुक्तं जपेन्नरः ॥ ३१४ ॥

पठेन्नामसहस्रन्तु त्रैलोक्यं मारयेद्ध्रुवम् ।
सद्भक्ताय प्रदातव्या विद्या राज्ञि शुभे दिवे ॥ ३१५ ॥

सद्विनीताय शान्ताय दान्तायातिगुणाय च ।
भक्ताय ज्येष्ठपुत्राय गुरुभक्तिपराय च ॥ ३१६ ॥

वैष्णवाय प्रशुद्धाय शिवाबलिरताय च ।
वेश्यापूजनयुक्ताय कुमारीपूजकाय च ॥ ३१७ ॥

दुर्ग्गाभक्ताय रौद्राय महाकालप्रजापिने ।
अद्वैतभावयुक्ताय कालीभक्तिपराय च ॥ ३१८ ॥

देयं सहस्रनामाख्यं स्वयं काल्या प्रकाशितम् ।
गुरुदैवतमन्त्राणां महेशस्यापि पार्व्वति ॥ ३१९ ॥

अभेदेन स्मरेन्मन्त्रं स शिवः स गणाधिपः ।
यो मन्त्रं भावयेन्मन्त्री स शिवो नात्र संशयः ॥ ३२० ॥

स शाक्तो वैष्णवस्सौरः स एव पूर्णदीक्षितः ।
अयोग्याय न दातव्यं सिद्धिरोधः प्रजायते ॥ ३२१ ॥

वेश्यास्त्रीनिन्दकायाथ सुरासँव्वित्प्रनिन्दके ।
सुरामुखीमनुं स्मृत्वा सुराचारो भविष्यति ।। ३२२ ।।

आसां वाग्देवता घोरे परघोरे च हूँ व्वदेत् ।
घोररूपे महाघोरे मुखी भीमपदँ व्वदेत् ।। ३२३ ।।

भीषण्यमुपषष्ठचन्तं हेतुर्व्वामयुगे शिवे ।
शिववह्नियुगास्त्रं हूँहूँकवचमनुर्भवेत् ।। ३२४ ।।

एतस्य स्मरणादेव दुष्टानाञ्च मुखे सुरा ।
अवतीर्णा भवेद्देवी दुष्टानाम्भद्रनाशिनी ।। ३२५ ।।

खलाय परतन्त्राय परनिन्दापराय च ।
भ्रष्टाय दुष्टसत्त्वाय परवादरताय च ।। ३२६ ।।

शिवाभक्ताय दुष्टाय परदाररताय च ।
न स्तोत्रं दर्शयेद्देवि शिवाहत्याकरो भवेत् ।। ३२७ ।।

कालिकानन्दहृदयः कालिकाभक्तिमानसः ।
कालीभक्तो भवेत्सो हि धन्यरूपस्स एव तु ।। ३२८ ।।

कलौ काली कलौ काली कलौ काली वरप्रदा ।
कलौ काली कलौ काली कलौ काली तु केवला ।। ३२९ ।।

बिल्वपत्रसहस्राणि करवीराणि वै तथा ।
प्रतिनाम्ना पूजयेद्धि तेन काली वरप्रदा ।। ३३० ।।

कमलानां सहस्रन्तु प्रतिनाम्ना समर्पयेत् ।
चक्रं संपूज्य देवेशि कालिकावरमाप्नुयात् ।। ३३१ ।।

मन्त्रक्षोभयुतो नैव कलशस्थजलेन च ।
नाम्ना प्रसेचयेद् देवि सर्वक्षोभविनाशकृत् ॥ ३३२ ॥

तथा मदनकं देवि सहस्रमाहरेद् व्रती ।
सहस्रनाम्ना संपूज्य कालीवरमवाप्नुयात् ॥ ३३३ ॥

चक्रं विलिख्य देहस्थं धारयेत् कालिकातनुः ।
काल्यै निवेदितं यद्यत् तदंशं भक्षयेच्छिवे ॥ ३३४ ॥

दिव्यदेहधरो भूत्वा कालीदेहे स्थिरो भवेत् ।
नैवेद्यनिन्दकान् दुष्टान् दृष्ट्वा नृत्यन्ति भैरवाः ॥ ३३५ ॥

योगिन्यश्च महावीरा रक्तपानोद्यताः प्रिये ।
मांसास्थिचर्मणोद्युक्ता भक्षयन्ति न संशयः ॥ ३३६ ॥

तस्मान्न निन्दयेद्देवि मनसा कर्मणा गिरा ।
अन्यथा कुरुते यस्तु तस्य नाशो भविष्यति ॥ ३३७ ॥

क्रमदीक्षायुतानां च सिद्धिर्भवति नान्यथा ।
मन्त्रक्षोभश्च वा भूयात् क्षीणायुर्वा भवेद्ध्रुवम् ॥ ३३८ ॥

पुत्रहारी स्त्रियोहारी राज्यहारी भवेद्ध्रुवम् ।
क्रमदीक्षायुतो देवि क्रमाद् राज्यमवाप्नुयात् ॥ ३३९ ॥

एकवारं पठेद् देवि सर्वपापविनाशनम् ।
द्विवारं च पठेत् यो हि वाञ्छां विन्दति नित्यशः ॥ ३४० ॥

त्रिवारं च पठेद् यस्तु वागीशसमतां व्रजेत् ।
चतुर्वारं पठेद् देवि चतुर्वर्णाधिपो भवेत् ॥ ३४१ ॥

पञ्चवारं पठेद् देवि पञ्चकामाधिपो भवेत् ।
षड्वारं च पठेद् देवि षडैश्वर्याधिपो भवेत् ॥ ३४२ ॥

सप्तवारं पठेत्सप्तकामनाश्चिन्तितं लभेत् ।
वसुवारं पठेद्देवि दिगीशो भवति ध्रुवम् ॥ ३४३ ॥

नववारं पठेद्देवि नवनाथसमो भवेत् ।
दशवारं कीर्त्तयेद्यो दशार्हः खेचरेश्वरः ॥ ३४४ ॥

विंशद्वारं कीर्तयेद्यः सर्व्वैश्वर्य्यमयो भवेत् ।
पञ्चविंशतिवारैस्तु सर्व्वचिन्ताविनाशकः ॥ ३४५ ॥

पञ्चाशद्वारमावर्त्य पञ्चभूतेश्वरो भवेत् ।
शतवारं कीर्त्तयेद्यः शताननसमानधीः ॥ ३४६ ॥

शतपञ्चकमावर्त्य राजराजेश्वरो भवेत् ।
सहस्रावर्त्तनाद्देवि लक्ष्मीरावृणुते स्वयम् ॥ ३४७ ॥

त्रिसहस्रं समावर्त्य त्रिनेत्रसदृशो भवेत् ।
पञ्चसाहस्रमावर्त्य कामकोटिविमोहनः ॥ ३४८ ॥

दशसहस्रावर्त्तनैर्भवेद् दशमुखेश्वरः ।
पञ्चविंशतिसाहस्रैश्चतुर्विंशतिसिद्धिधृक् ॥ ३४९ ॥

लक्षावर्त्तनमात्रेण लक्ष्मीपतिसमो भवेत् ।
लक्षत्रयावर्त्तनात्तु महादेवं व्विजेष्यति ॥ ३५० ॥

लक्षपञ्चकमावर्त्य कलापञ्चकसँय्युतः ।
दशलक्षावर्तनात्तु दशविद्याभिरुत्तमा ॥ ३५१ ॥

पञ्चविंशतिलक्षैस्तु दशविद्येश्वरो भवेत् ।
पञ्चाशल्लक्षमावृत्य महाकालसमो भवेत् ॥ ३५२ ॥

कोटिमावर्त्तयेद्यस्तु कालीं पश्यति चक्षुषा ।
वरदानोद्युक्तकरां महाकालसमन्विताम् ॥ ३५३ ॥

प्रत्यक्षं पश्यति शिवे तस्या देहो भवेद् ध्रुवम् ।
श्रीविद्या-कालिका-तारा-त्रिशक्तिविजयी भवेत् ॥ ३५४ ॥

विधेर्ल्लिपिञ्च सम्मार्ज्य किङ्करत्वँ विसृज्य च ।
महाराज्यमवाप्नोति नात्र कार्य्या विचारणा ॥ ३५५ ॥

त्रिशक्तिविषये देवि क्रमदीक्षा प्रकीर्त्तिता ।
क्रमदीक्षायुतो देवि राजा भवति निश्चितम् ॥ ३५६ ॥

क्रमदीक्षाविहीनस्य फलं पूर्व्वमिहेरितम् ।
क्रमदीक्षायुतो देवि शिव एव न चापरः ॥ ३५७ ॥

क्रमदीक्षासमायुक्तः काल्योक्तसिद्धिभाग्भवेत् ।
क्रमदीक्षाविहीनस्य सिद्धिहानिः पदे-पदे ॥ ३५८ ॥

अहो जन्मवतां मध्ये धन्यः क्रमयुतः कलौ ।
तत्रापि धन्यो देवेशि नामसाहस्रपाठकः ॥ ३५९ ॥

दशकालीविधौ देवि स्तोत्रमेतत्सदा पठेत् ।
सिद्धिं विन्दति देवेशि नात्र कार्य्या विचारणा ॥ ३६० ॥

काली काली महाविद्या कलौ काली च सिद्धिदा ।
कलौ काली च सिद्धा कलौ काली वरप्रदा ॥ ३६१ ॥

कलौ काली साधकस्य दर्शनार्थं समुद्यता ।
कलौ काली केवला स्यान्नात्र कार्य्या विचारणा ।। ३६२ ।।

नान्यविद्या नान्यविद्या नान्यविद्या कलौ भवेत् ।
कलौ कालीं व्विहायाथ यः कश्चित्सिद्धिकामुकः ।। ३६३ ।।

स तु शक्तिं व्विना देवि रतिसम्भोगमिच्छति ।
कलौ कालीं व्विना देवि यः कश्चित्सिद्धिमिच्छति ।।३६४।।

स नीलसाधनं त्यक्त्वा परिभ्रमति सर्व्वतः ।
कलौ कालीं व्विहायाथ यः कश्चिन्मोक्षमिच्छति ।। ३६५ ।।

गुरुध्यानं परित्यज्य सिद्धिमिच्छति साधकः ।
कलौ कालीं व्विहायाथ यः कश्चिद्राज्यमिच्छति ।। ३६६ ।।

स भोजनं परित्यज्य भिक्षुवृत्तिमभीप्सति ।
स धन्यः स च विज्ञानी स एव सुरपूजितः ।। ३६७ ।।

स दीक्षितः सुखी साधुः सत्यवादी जितेन्द्रियः ।
स वेदवक्ता स्वाध्यायी नात्र कार्य्या विचारणा ।। ३६८ ।।

शिवरूपं गुरुं ध्यात्वा शिवरूपं गुरुं स्मरेत् ।
सदाशिवः स एव स्यान्नात्र कार्य्या विचारणा ।। ३६९ ।।

स्वस्मिन् कालीं तु सम्भाव्य पूजयेज्जगदम्बिकाम् ।
त्रैलोक्यविजयी भूयान्नात्र कार्य्या विचारणा ।। ३७० ।।

गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ।
रहस्यातिरहस्यञ्च रहस्यादिरहस्यकम् ।। ३७१ ।।

श्लोकार्द्धं पादमात्रं व्वा पादार्द्धञ्च तदर्द्धकम् ।
नामार्द्धं यः पठेद्देवि न वह्न्यादिभयैस्त्रसेत् ।। ३७२ ।।

पुस्तकं पूजयेद्भक्त्या त्वरितं फलसिद्धये ।
न च मारीभयं तत्र न चाग्निर्व्वायुसम्भवम् ।। ३७३ ।।

न भूतादिभयं तत्र सर्व्वत्र सुखमेधते ।
कुङ्कुमालक्तकेनैव रोचनागुरुयोगतः ।। ३७४ ।।

भूर्ज्जपत्रे लिखेत्पुस्तं सर्व्वकामार्थसिद्धये ।। ३७५ ।।

इति गदितमशेषं कालिकावर्णरूपं
प्रपठति यदि भक्त्या सर्व्वसिद्धीश्वरः स्यात् ।। ३७६ ।।

इति सङ्क्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ।। ३७७ ।।

।। इति कालीसहस्रनामस्तोत्रम् ।।

# काली-स्तवः*

## [ कर्पूरस्तोत्रं वा ]

ओं कर्पूरं मध्यमान्त्यस्वरपरिरहितं सेन्दुवामाक्षियुक्तं
बीजं ते मातरेतत् त्रिपुरहरवधुभिः कृतं ये जपन्ति ।
तेषां गद्यानि पद्यानि च मुखकुहरादुल्लसन्त्येव वाचः
स्वच्छन्दं ध्वान्तधाराधररुचिरुचिरे सर्वसिद्धिगतानाम् ॥ १ ॥

ईशानः सेन्दुवामश्रवणपरिगतो बीजमन्यन्महेशि
द्वन्द्वन्ते मन्दचेता यदि जपति जनो वारमेकं कदाचित् ।
जित्वा वाचामधीशं धनदमपि चिरं मोहयन्नम्बुजाक्षी-
वृन्दं चन्द्रार्धचूडे प्रभवति स महाघोरबालावतंसे ॥ २ ॥

ईशो वैश्वानरस्थः शशधरविलसद्वामनेत्रेण युक्तो
बीजं ते द्वन्द्वमन्यद् विगलितचिकुरे कालिके ये जपन्ति ।
द्वेष्टारं घ्नन्ति ते च त्रिभुवनमपि ते वश्यभावं नयन्ति
सृक्कद्वन्द्वास्रधाराद्वयधरवदने दक्षिणे कालिकेति[1] ॥ ३ ॥

ऊर्ध्वे वामे कृपाणं करकमलतले छिन्नमुण्डं तथाधः
सव्ये चाभीर्वरञ्च त्रिजगदघहरे दक्षिणे कालिके च ।
जप्त्वैतन्नाम ये वा तव मनुविभवं भावयन्त्येतदम्ब
तेषामष्टौ करस्थाः प्रकटितवदने[2] सिद्धयस्त्र्यम्बकस्य ॥ ४ ॥

---

* एषा स्तुतिः 'वीरतन्त्रे' परमरहस्ये स्वरूपाख्यस्तोत्रनाम्ना वर्तते ।
१. 'त्र्यक्षरेति' इति पाठः; २. 'रदने' इति पाठः ।

वर्गाद्यं वह्नियुक्तं[1] विधुरतिवलितं तत्त्रयं कूर्चयुग्मं
लज्जाद्वन्द्वञ्च पश्चात् स्मितमुखि तदधष्ठद्वयं योजयित्वा ।
मातर्ये ये जपन्ति स्मरहरमहिले भावयन्तः स्वरूपं
ते लक्ष्मीलास्यलीलाकमलदलदृशः कामरूपा भवन्ति ॥ ५ ॥

प्रत्येकं वा त्रयं वा[2] द्वयमपि च परं बीजमत्यन्तगुह्यं
त्वन्नाम्ना योजयित्वा सकलमपि सदा भावयन्तो जयन्ति ।
तेषां नेत्रारविन्दे विहरति कमला [3]रक्तशुभ्रांशुबिम्बे
वाग्देवी देविमुण्डस्त्रगतिशय लसत्कण्ठि पीनस्तनाढ्ये ॥ ६ ॥

गतासूनां बाहुप्रकरकृतकाञ्चीपरिलस-
न्नितम्बां दिग्वस्त्रां त्रिभुवनविधात्रीं त्रिनयनाम् ।
श्मशानस्थे तल्पे शवहृदि महाकालसुरत-
प्रसक्तां त्वां ध्यायन् जननि जडचेता अपि कविः ॥ ७ ॥

शिवाभिर्घोराभिः शवनिवहमुण्डास्थिनिकरैः
परं संकीर्णायां प्रकटितचितायां हरवधूम् ।
प्रविष्टां सन्तुष्टामुपरि सुरतेनातियुवतीं
सदा त्वां ध्यायन्ति क्वचिदपि न तेषां परिभवः ॥ ८ ॥

वदामस्ते किं वा जननि वयमुच्चैर्जडधियो
न धाता नापीशो हरिरपि न ते वेत्ति परमम् ।
तथापि त्वद्भक्तिर्मुखरयति चास्माकमसिते
तदेतत् क्षन्तव्यं न खलु पशुरोषः समुचितः ॥ ९ ॥

---

१. 'संस्थं' इति पाठः; २. 'द्वयं वा त्रयमपि' इति पाठः ।
३. 'वक्त्र-' इति पाठः ।

समन्तादापीनस्तनजघनधृग् यौवनवती
रतासक्तौ नक्तं यदि जपति भक्तस्तव मनुम् ।
विवासास्त्वां ध्यायन् गलितचिकुरस्तस्य वशगाः
समस्ताः सिद्धौघा भुवि चिरतरं जीवति कविः ॥ १० ॥

समाः सुस्थीभूतां जपति विपरीतां यदि सदा
विचिन्त्य त्वां ध्यायन्नतिशयमहाकालसुरताम् ।
तदा तस्य क्षौणीतलविहरमाणस्य विदुषः
कराम्भोजे वश्या हरवधु महासिद्धिनिवहाः ॥ ११ ॥

प्रसूते संसारं जननि जगतीं पालयति च
समस्तं क्षित्यादि प्रलयसमये संहरति च ।
अतस्त्वं धातापि त्रिभुवनपतिः श्रीपतिरहो
महेशोऽपि प्रायः सकलमपि किं स्तौमि भवतीम् ॥ १२ ॥

अनेके सेवन्ते भवदधिकगीर्वाणनिवहान्
विमूढास्ते मातः किमपि न हि जानन्ति परमम् ।
समाराध्यामाद्यां हरिहरविरञ्च्यादिविबुधैः
प्रपन्नोऽस्मि स्वैरं रतिरसमहानन्दरसिकाम् ॥ १३ ॥

धरित्री कीलालं शुचिरपि समीरोऽपि गगनं
त्वमेका कल्याणी गिरिशरमणी कालि सकलम् ।
स्तुतिः का ते मातस्तव करुणया मामगतिकं
प्रसन्ना त्वं भूया भवमनु न भूयान्मम जनुः ॥ १४ ॥

श्मशानस्थः सुस्थो गलितचिकुरो दिक्पटधरः
सहस्रं त्वर्काणां निजगलितवीर्येण कुसुमम् ।
जपंस्त्वत्प्रत्येकं मनुमपि तव ध्याननिरतो
महाकालि स्वैरं स भवति धरित्रीपरिवृढः ॥ १५ ॥

गृहे संमार्जन्या परिगलितवीर्यं हि चिकुरं
समूलं मध्याह्ने वितरति चितायां कुजदिने ।
समुच्चार्य प्रेम्णा मनुमपि सकृत् कालि सततं
गजारूढो याति क्षितिपरिवृढः सत्कविवरः ॥ १६ ॥

स्वपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो
पुरो ध्यायं ध्यायं यदि जपति भक्तस्तव मनुः ।
स गन्धर्वश्रेणीपतिरपि कवित्वामृतनदी
न दीनः पर्यन्ते परमपदलीनः प्रभवति ॥ १७ ॥

त्रिपञ्चारे पीठे शवशिवहृदि स्मेरवदनां
महाकालेनोच्चैर्मदनरसलावण्यनिरताम् ।
समासक्तो नक्तं स्वयमपि रतानन्दनिरतो
जनो यो ध्यायेत्त्वां मयि जननि स स्यात् स्मरहरः ॥१८॥

स्वलोमास्थि स्वैरं पललमपि मार्जारमसि ते
परं चौष्ट्रं मैषं नरमहिषयोश्छागमपि वा ।
बलिं ते पूजायामपि वितरतां मर्त्यवसतां
सतां सिद्धिः सर्वा प्रतिपदमपूर्वा प्रभवति ॥ १९ ॥

वशी लक्षं मन्त्रं प्रजपति हविष्याशनरतो
दिवा मातर्युष्मच्चरणयुगलध्याननिपुणः ।
परं नक्तं नग्नो निधुवनविनोदेन च मनुं
जपेल्लक्षं सम्यक् स्मरहरसमानः क्षितितले ॥ २० ॥

इदं स्तोत्रं मातस्तव मनुसमुद्धारणजनु
स्वरूपाख्यं पादाम्बुजयुगलपूजाविधियुतम् ।
निशार्धं वा पूजासमयमथवा यस्तु पठति
प्रलापस्तस्यापि प्रसरति कवित्वामृतरसः ॥ २१ ॥

कुरङ्गाक्षीवृन्दं तमनुसरति प्रेमतरलं
वशस्तस्य क्षोणीपतिरपि कुबेरप्रतिनिधिम् ।
रिपुः कारागारं कलयति च तं केलिकलया
चिरं जीवन्मुक्तः स भवति भक्तः प्रतिजनुः ॥ २२ ॥

॥ इति श्रीमहाकालविरचितं काल्याः स्तोत्रं सम्पूर्णम् ॥

# कालिकास्तवराजः

ब्रह्माशक्रादिवन्द्यः शशधरकमलालङ्कृताङ्घ्रिस्त्रिमूर्तिः
सर्वक्षः सेन्दुखण्डो मधुमथनसमालिङ्गितोऽसौ द्विमूर्तिः ।
हंसेशानत्रपाग्निर्विधुरतिललितो दक्षिणे कालिके त्वां
भूयस्ते सर्वसिद्धा दहनललनया संगतां प्रोद्गृणन्ति ॥ १ ॥

पिङ्गोग्राभिर्जटाभिः शशधरशकलोत्तंसमंशानुसक्तां
.................................................. ।
व्यालाङ्कं शूलहस्तं शशिकरविशदं प्रेतभूतेशमङ्घ्रि-
द्वन्द्वेनाक्रम्य तस्योरसि हसितमहाकालरुद्राग्रसंस्थाम् ॥ २ ॥

कालीप्राप्ताङ्कदारप्रसृमरललितोन्मुक्तधम्मिल्लभारा-
मारक्तोष्ठां त्रिनेत्रामभयवरनरच्छिन्नमुण्डालिहस्ताम् ।
दिग्वस्त्रां नारहस्तोच्चयकृतरशनां प्रेतयुग्मावतंसाम्
अन्योन्यप्रेक्षिकेशग्रथितगलदसृक्तुण्डमालाभिदीप्ताम् ॥ ३ ॥

लोलज्जिह्वोग्रद्रंष्ट्राननकमलवलद्घोररावाट्टहासां
पीनोत्तुङ्गस्तनाढ्यां (पुरहरतरुणी) योगिनीभिः समेताम् ।
यस्त्वां मातः कदापि स्वमनसि कुरुते तस्य पुण्यैः किमन्यैः
तीर्थस्नानैस्तपोभिर्गुरुभिरपि महादानदीक्षादिभिर्वा ॥ ४ ॥

हेलालोलाभिरावर्जितकुटिलघनोन्मुक्तकेशव्रजाभि-
र्मेघश्यामाभिरुद्यद्दिनकरकिरणैस्तिग्मभिर्भीषणाभिः ।
दक्षे पाणौ कृपाणं शितमितरकरे तर्जनीं बिभ्रतीभि-
र्दंष्ट्राघोराननाभिर्युवतिभिरभितो योगिनीभिः समेताम् ।। ५ ।।

फेत्कुर्वत्फेरुवर्गध्वनिजनितमुदस्मेरवक्त्रारविन्दां
मन्दस्तोकप्रसन्नस्मितवदनमहाकालरुद्राग्रसंस्थाम् ।
ये त्वां ध्यायन्ति मातः क्वचिदपि न भवन्त्यापदां भागिनस्ते
तेषां दासा भवन्ति क्षितिसुरपतयः सर्वसिद्ध्यर्जितानाम् ।।६।।

तीर्थे वा शून्यदेशे शिखरिणि सरितासंगमे गह्वरे वा
शून्यागारे श्मशाने शवहृदि सुरते चत्वरे वा प्रदेशे ।
स्वेच्छाचारा जपन्तस्स्तवमिममखिलं चिन्तयन्तोऽम्बिके त्वां
जुह्वन्तः[1] कामयन्ते यदिह किमपि तत् सिद्ध्यति स्वेच्छयैषाम् ।।७।।

आवं वा छागलं वा नरमहिषवरं नागजं वा खरं वा
वैडालं वापि नारं पलमथ हविषा माक्षिकेणाभिषिक्तम् ।
कृत्वा कुण्डे त्रिकोणे स्मरसदनसमे वापि लक्षं जितेन्द्रो
ना चा वाचामधीशं जयति चिरतरं जीवति क्ष्मातलेऽस्मिन् ।।८।।

ये त्वां तृप्त्यै कदाचिन्निशि दधिपयसी कुण्डगोलोद्भवाक्तै-
र्जप्तैः पर्णैरपर्णे पितृवनदहने जुह्वति श्रद्दधानाः ।
तेषां तुष्टा युगानामचिरमपनयन्ती तदङ्के विधातृ-
न्यस्तान् दुष्कर्मभावान् परिलिखसि वरैश्वर्यवाचस्पतित्वे ।।९।।

---

१. आर्षः ।

यस्त्वां चन्द्रार्धचूडां कपिलतरजटां नागयज्ञोपवीतां
चन्द्रापीडाग्रहस्तां भगवति सततं ध्यायति श्यामवर्णाम् ।
स्वं सन्त्यज्याशु कान्तं कुसुमशरभयोत्कम्पमानाङ्गयष्टयः
कान्ताः कान्तालकान्ता रतिपतिमिव तं मन्यमाना भजन्ते ॥१०॥

ये त्वां शूलं कपालं वरदमभयदं बिभ्रतीं भावयन्ति
त्रैलोक्याकर्षसिद्धिर्भवति सुमनसां क्षिप्रमीशानि तेषाम् ।
ये त्वां कर्त्रीकपालोद्यतकरयुगलां पिङ्गलां कालरात्रिं
ध्यायन्तस्त्वां भजन्ते भगवति सरुषा ते रिपून् नाशयन्ति ॥११॥

ब्रूमः किं वा स्वरूपं जननि तव मनोः सर्वमेतेन साध्यं
विद्याबुद्धिप्रदाता जगति तव मनुः सिद्धिदः साधकानाम् ।
वश्याकर्षप्रमोहप्रहरणमिलनद्वेषणोच्चाटनानि
क्षिप्रं सिद्ध्यन्ति तेषां किमपरमनुना सिद्धयोऽष्टौ करस्थाः ॥१२॥

षट्कोणो भूपुरान्तस्थितमथ कमलं तत्र षट्कोणमन्य-
दस्रं चास्मिन् निजं ते स्मरहरमहिले यन्त्रमाराधनायाः ।
अस्मिन्नाराध्यपीठे भगवति भवती भावनामात्रगम्या
विश्वाराध्यत्वसिद्धिर्भवति सुमनसां सर्वसिद्ध्युद्भवानाम् ॥१३॥

जगन्मातः कालि त्रिगुणमपि रुद्राणि गिरिजे
भवानि श्रीकण्ठप्रणयिनि शिवे विश्वमहिले ।
उदञ्चत्कारुण्ये भगवति तवाख्यां गुणमयीं
गुणातीते नित्ये स्फुटमिति वदन् मेऽस्तु वदनम् ॥ १४ ॥

इदं त्वन्मात्राङ्कं . सकलदुरितध्वंसनकरं
स्तवं यः श्रद्धावान् पिपठिषति कल्याणजनकम् ।
चिरं तस्य क्षोणीतलविहरमाणस्य विषयो
भवातीते नित्ये भवतु भवदाराधनफलम् ॥ १५ ॥

॥ इति रुद्रयामले कालिकास्तवराजः समाप्तः ॥

[ इदं स्तोत्रं हस्तलिखितरूपेण सरस्वतीभवनपुस्तकालयादवाप्तं मया। जीर्णमिदं पुस्तकं त्रुटियुतञ्चातो द्वितीयश्लोकः पादोनः, यत्र यत्र च रेखाङ्कितशब्दास्ते मया योजितास्तत्र विमर्शः करणीयो बुधैः । ]

# कालरात्रिस्तवः

अथ कालीस्तवं वक्ष्ये यथाऽवदन् पूर्वशः ।
बीजमुच्चारयेत् पूर्वं वाचकेन[1] पठेत् स्तवम् ॥ १ ॥

ओं देवि जय चामुण्डे जय भूतापहारिणि ।
जय सर्वगते देवि कालरात्रि नमोऽस्तु ते ॥ २ ॥

विश्वमूर्ते शुभे शुद्धे विरूपाक्षे त्रिलोचने ।
भीमरूपे शिवरूपे विद्ये महाकाये महोदये ॥ ३ ॥

मनोभवे जये जम्भे भूताक्षि भीतभीक्षये ।
महामारि विचित्राङ्गि गीतनृत्यप्रिये शुभे ॥ ४ ॥

विकरालि महाकालि कालिके पापहारिणि ।
पाशहस्ते दण्डहस्ते भीमरूपे भयानके ॥ ५ ॥

चामुण्डे ज्वलमालास्थे तीक्ष्णदंष्ट्रे महाबले ।
शवासनस्थिते देवि प्रेतासनगते गिरौ ॥ ६ ॥

भीमाक्षि भीषणे देवि सर्वभूतभयङ्करि ।
करालि विकरालीति महाकाल कपालिनि ॥ ७ ॥

कालि करालविक्रान्ते [2]कालरात्रि नमोऽस्तु ते ।
सर्वशस्त्रभृते देवि सर्वदेवनमस्कृते ॥ ८ ॥

---

१. 'वाचिकेन' इति पाठोऽस्ति ।
२. 'कलिरात्रि' इति पाठः ।

सर्वज्ञानप्रदे भद्रे कालरात्रि नमोऽस्तु ते ।
व्याघ्रचर्माम्बरवृते कर्त्रि खर्परधारिणि ॥ ९ ॥

वज्रपुष्पप्रिये शुभ्रे कालरात्रि नमोऽस्तु ते ।
स्तोत्रेणानेन देवि त्वां ये स्तुवन्ति वरानने ॥ १० ॥

तेषां त्वं वरदानेन भव सर्वगता सती ।
यश्चेदं श्रावयेद् भक्त्या स्नात्वा वै पौष्करे जले ॥ ११ ॥

सर्वमेतत् फलं प्राप्य ब्रह्मलोके महीयते ।
यश्चेदं पूजयेद् भक्त्या पुस्तकेऽपि स्थितं बुधः ॥ १२ ॥

तेन त्विष्टं भवेत् सर्वं त्रैलोक्यं सचराचरम् ।
जायन्ते बहवः पुत्राः धनधान्यवरस्त्रियः ॥ १३ ॥

रत्नान्यश्वाः गजाश्चाग्र्यास्तेषामाशु भवन्त्युत ।
यश्चेदं तिष्ठति गेहे तस्येदं जायते ध्रुवम् ॥ १४ ॥

॥ इति वराहतन्त्रे कालरात्रिस्तवः ॥

# कालरात्रिमातृका

कालरात्रिर्महारात्रिः कटुका सुभगा शिवा ।
मोहिनी मोहरात्रिश्च विद्या कटुकपत्रिका ॥ १ ॥

आथर्वणस्य दुहिता रञ्जिनी विश्वमोहिनी ।
मोहनास्त्रा मोहरूपा सौभाग्या मोहवर्धिनी ॥ २ ॥

स्वराणां शक्तयस्त्वेताः साधकाभीष्टहेतवः ।
कामिनी कमनप्रीता द्राविणी क्षोभिणी परा ॥ ३ ॥

मदनोन्मादिनी चैव मन्मथा च मनोन्मनीं ।
मनस्विनी मनोवासिन्यरुणा मदनोत्सवा ॥ ४ ॥

मादिनी मदसन्ताना मधुवाणी मनोहरा ।
मनोरमा प्रिया कान्ता मञ्जुघोषा मदप्रिया ॥ ५ ॥

कामवर्धनिका चैव दारुणा दमनप्रिया ।
दण्डिनी विश्वनटिनी नलिनी विश्वमालिनी ॥ ६ ॥

हावा भावा भावगम्या भावातीता विनोदिनी ।
पञ्चबाणा परोत्साहा कादीनां शक्तयः क्रमात् ॥ ७ ॥

# कालीमातृका

काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी ।
विप्रचित्ता तथोग्रोग्रप्रभा दीप्ता तथैव च ॥ १ ॥

नीला घना वलाका च मात्रा मुद्रा मिता तथा ।
ब्राह्मी तथैव सम्प्रोक्ताः षोडश स्वरशक्तयः ॥ २ ॥

नारायणी च माहेशी चामुण्डा च ततः परम् ।
कौमारी च तथैवोक्ता पञ्चमी चापराजिता ॥ ३ ॥

वाराही नारसिंही च भैरवी तदनन्तरम् ।
महदाद्या भैरवी च प्रोक्ता सा सिंहभैरवी ॥ ४ ॥

तथा धूम्राभैरवी च सम्प्रोक्ता भीमभैरवी ।
उन्मत्तभैरवी चैव वशीकरणभैरवी ॥ ५ ॥

मोहनाद्या भैरवी च ऐन्द्रचाग्नेयी ततः परम् ।
याम्या च राक्षसी चैव वारुणी वायवी तथा ॥ ६ ॥

कौबेरी च तथेशानी ब्रह्माणी वैष्णवी तथा ।
वज्रिणी शक्तिनी चैव दण्डिनी खड्गिनी तथा ॥ ७ ॥

पाशिन्यङ्कुशिनी चैव गदिनी शूलिनी तथा ।
मालिनी चक्रिणी चैव प्रोक्ता व्यञ्जनशक्तयः ॥ ८ ॥

# कालीकवचम्

[ भद्रकाल्याः ]

**नारद उवाच—**

कवचं श्रोतुमिच्छामि तां च विद्यां दशाक्षरीम् ।
नाथ त्वत्तो हि सर्वज्ञ भद्रकाल्याश्च साम्प्रतम् ॥ १ ॥

**नारायण उवाच—**

श्रृणु नारद वक्ष्यामि महाविद्यां दशाक्षरीम् ।
गोपनीयं च कवचं त्रिषु लोकेषु दुर्लभम् ॥ २ ॥

ओं ह्रीं श्रीं क्लीं कालिकायै स्वाहेति दशाक्षरीम् ।
दुर्वासा हि ददौ राज्ञे पुष्करे सूर्यपर्वणि ॥ ३ ॥

दशलक्षजपेनैव मन्त्रसिद्धिः कृता पुरा ।
पञ्चलक्षजपेनैव पठन् कवचमुत्तमम् ॥ ४ ॥

बभूव सिद्धकवचोऽप्ययोध्यामाजगाम सः ।
कृत्स्नां हि पृथिवीं जिग्ये कवचस्य प्रसादतः ॥ ५ ॥

**नारद उवाच—**

श्रुता दशाक्षरी विद्या त्रिषु लोकेषु दुर्लभा ।
अधुना श्रोतुमिच्छामि कवचं ब्रूहि मे प्रभो ॥ ६ ॥

**नारायण उवाच—**

श्रृणु वक्ष्यामि विप्रेन्द्र कवचं परमाद्भुतम् ।
नारायणेन यद् दत्तं कृपया शूलिने पुरा ॥ ७ ॥

त्रिपुरस्य वधे घोरे शिवस्य विजयाय च ।
तदेव शूलिना दत्तं पुरा दुर्वाससे मुने ॥ ८ ॥

दुर्वाससा च यद् दत्तं सुचन्द्राय महात्मने ।
अतिगुह्यतरं तत्त्वं सर्वमन्त्रौघविग्रहम् ॥ ९ ॥

ओं ह्रीं श्रीं क्लीं कालिकायै स्वाहा मे पातु मस्तकम् ।
क्लीं कपालं सदा पातु ह्रीं ह्रीं ह्रीमिति लोचने ॥ १० ॥

ओं ह्रीं त्रिलोचने स्वाहा नासिकां मे सदाऽवतु ।
क्लीं कालिके रक्ष स्वाहा दन्तान् सदाऽवतु ॥ ११ ॥

क्लीं भद्रकालिके स्वाहा पातु मेऽधरयुग्मकम् ।
ओं ह्रीं ह्रीं क्लीं कालिकायै स्वाहा कण्ठं सदाऽवतु ॥ १२ ॥

ओं ह्रीं कालिकायै स्वाहा कर्णयुग्मं सदाऽवतु ।
ओं क्रीं क्रीं क्लीं काल्यै स्वाहा स्कन्धं पातु सदा मम ॥ १३ ॥

ओं क्रीं भद्रकाल्यै स्वाहा मम वक्षः सदाऽवतु ।
ओं क्लीं कालिकायै स्वाहा मम नाभिं सदाऽवतु ॥ १४ ॥

ओं ह्रीं कालिकायै स्वाहा मम पृष्ठं सदाऽवतु ।
रक्तबीजविनाशिन्यै स्वाहा हस्तौ सदाऽवतु ॥ १५ ॥

ओं ह्रीं क्लीं मुण्डमालिन्यै स्वाहा पादौ सदाऽवतु ।
ओं ह्रीं चामुण्डायै स्वाहा सर्वाङ्गं मे सदाऽवतु ॥ १६ ॥

प्राच्यां पातु महाकाली चाग्नेय्यां रक्तदन्तिका ।
दक्षिणे पातु चामुण्डा नैर्ऋत्यां पातु कालिका ॥ १७ ॥

श्यामा च वारुणे पातु वायव्यां पातु चण्डिका ।
उत्तरे विकटास्या चाप्यैशान्यां साट्टहासिनी ॥ १८ ॥

पातूर्ध्वं लोलजिह्वा सा मायाद्या पात्वधः सदा ।
जले स्थले चान्तरिक्षे पातु विश्वप्रसूः सदा ॥ १९ ॥

इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् ।
सर्वेषां कवचानां च सारभूतं परात्परम् ॥ २० ॥

सप्तद्वीपेश्वरो राजा सुचन्द्रोऽस्य प्रसादतः ।
कवचस्य प्रसादेन मान्धाता पृथिवीपतिः ॥ २१ ॥

प्रचेता लोमशश्चैव यतः सिद्धो बभूव ह ।
यतो हि योगिनां श्रेष्ठः सौभरिः पिप्पलायनः ॥ २२ ॥

यदि स्यात् सिद्धकवचः सर्वसिद्धेश्वरो भवेत् ।
महादानानि सर्वाणि तपांस्येवं व्रतानि च ।
निश्चितं कवचस्यास्य कलां नार्हन्ति षोडशीम् ॥ २३ ॥

इदं कवचमज्ञात्वा भजेत् कालीं जगत्प्रसूम् ।
शतलक्षं प्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ २४ ॥

॥ इति श्रीब्रह्मवैवर्तमहापुराणे गणपतिखण्डे नारदनारायणसंवादे
भद्रकालीकवचनिरूपणं नाम सप्तत्रिंशोऽध्यायः ॥

# क्रमस्तोत्रम्

[ गुह्यकाल्याः ]

[ सम्प्रति गुह्यकाल्या अपि विशेष उक्तस्तत्रैव ( विश्वसारतन्त्रे ) षष्ठपटले तत्कवचात् परम्— ]

क्रमस्तवं प्रवक्ष्यामि शृणुष्व कमलानने ।
ब्राह्मे मुहूर्त्ते उत्थाय गुरुदेवान्नमेत् सदा ॥ १ ॥

वारुणीमुखमाश्रित्य नमस्कुर्याद्रुपर्यधः ।
गुरुभ्योऽपि नमो नित्यं नमस्तत्पादुकाय[1] च ॥ २ ॥

परं परेभ्यः परापरेभ्यः परात्परेभ्योऽपि नमोऽस्तु ते ।
आधारशक्ति नमस्कृत्य कुलाचलान् नमस्करेत् ॥३॥

धर्मकर्मणे नमस्कृत्य कूर्मराजाय वै नमः ।
अनन्ताय नमो नित्यं वराहाय नमो नमः ॥ ४ ॥

पृथिव्यै च नमो नित्यं कुलाचलेभ्यो नमो नमः ।
समुद्रेभ्यो नमो नित्यं सरत्नैरमृतैर्जलैः ॥ ५ ॥

कुलवृक्षेभ्यो नमो नित्यं कल्पवृक्षेभ्यो नमो नमः ।
स्वर्णसिंहासनेभ्यश्च मणिवेद्यै नमो नमः ॥ ६ ॥

चतुर्दिशि नमस्याथ सर्वदेवान् नमस्करेत् ।
वेदेभ्योऽपि नमो नित्यं वेदार्थेभ्यो नमो नमः ॥ ७ ॥

शाखाभ्यस्तस्य वै नित्यं तत्पादेभ्यो नमो नमः ।
तद्वर्णेभ्यो नमो नित्यं वर्णार्थेभ्यो नमो नमः ॥ ८ ॥

असंस्कारपदेभ्यश्च नमो वै परमात्मने ।
विद्याभ्योऽपि नमो नित्यमविद्याभ्यो नमो नमः ॥ ९ ॥

शास्त्रेभ्योऽपि नमो नित्यमशास्त्रेभ्यो नमो नमः ।
धर्मेभ्योऽपि नमो नित्यमधर्मेभ्यो नमो नमः ॥ १० ॥

भागवतेभ्यो नमो नित्यं विद्याभ्योऽपि नमो नमः ।
शक्तिभ्योऽपि नमो नित्यं श्रुत्यर्थेभ्यो नमो नमः ॥ ११ ॥

श्रीरामभागवतेभ्यश्च दण्डवत् प्रणमेत् सदा ।
भागवतेभ्यो नमो नित्यं भागवतार्थेभ्यो नमो नमः ॥१२॥

तत्त्वार्थेभ्यो नमो नित्यं तत्त्वेभ्योऽपि नमो नमः ।
योगेभ्योऽपि नमो नित्यं योगार्थेभ्यो नमो नमः ॥ १३ ॥

संहिताभ्यो नमो नित्यं तदर्थेभ्यो नमो नमः ।
मातृकाभ्यो नमो नित्यं तदर्थेभ्यो नमो नमः ॥ १४ ॥

कलाभ्योऽपि नमो नित्यं शक्तिभ्योऽपि नमो नमः ।
स्वरेभ्योऽपि नमो नित्यं रागेभ्योऽपि नमो नमः ॥१५॥

रागिनीभ्यो नमो नित्यं तदर्थेभ्यो नमो नमः ।
अस्त्रेभ्योऽपि नमो नित्यं शस्त्रेभ्योऽपि नमो नमः ॥१६॥

जीवेभ्योऽपि नमो नित्यं बीजेभ्योऽपि नमो नमः ।
भूचरेभ्यो नमो नित्यं खेचरेभ्यो नमो नमः ॥ १७ ॥

योगेभ्योऽपि नमो नित्यं करणेभ्यो नमो नमः ।
मुहूर्तेभ्यो नमो नित्यं यामेभ्योऽपि नमो नमः ॥ १८ ॥

ऋतुभ्योऽपि नमो नित्यं वत्सरेभ्यो नमो नमः ।
डाकिनीभ्यो नमो नित्यं रुद्रेभ्योऽपि नमो नमः ॥ १९ ॥

भूतेभ्योऽपि नमो नित्यं प्रेतेभ्योऽपि नमो नमः ।
यक्षेभ्योऽपि नमो नित्यं विघ्नेभ्योऽपि नमो नमः ॥२० ॥

भूतेभ्योऽपि नमो नित्यं महाभूतेभ्यो नमो नमः ।
आचार्येभ्यो नमो नित्यं शङ्करेभ्यो नमो नमः ॥ २१ ॥

वैष्णवेभ्यो नमो नित्यं ये च मायाविमोहिताः ।
मायायै प्रणमेन्नित्यं तत्त्वेभ्योऽपि नमो नमः ॥ २२ ॥

शरीरेभ्यो नमो नित्यं व्यापकेभ्यो नमो नमः ।
मन्त्रेभ्योऽपि नमो नित्यं मन्त्रार्थेभ्यो नमो नमः ॥ २३ ॥

नमो वर्णात्मिकाभ्यश्च देवताभ्यो नमो नमः ।
तत्पदेभ्यो नमो नित्यं सत्पदेभ्यो नमो नमः ॥ २४ ॥

भावनाभ्यो नमो नित्यं भावशास्त्रेभ्य एव च ।
स्तवेभ्यः कवचेभ्यश्च नामभ्योऽपि नमो नमः ॥ २५ ॥

आगमेभ्यो नमो नित्यं तदर्थेभ्यो नमो नमः ।
तत्क्रियाभ्यो नमो नित्यं श्रेष्ठशास्त्रेऽपि कीर्त्यते ॥ २६ ॥

रसेभ्योऽपि नमो नित्यं गन्धेभ्योऽपि नमो नमः ।
पीठेभ्योऽपि नमो नित्यं तत्स्थेभ्योऽपि नमो नमः ॥२७॥

१०

सत्त्वेभ्योऽपि नमो नित्यं राजसेभ्यो नमो नमः ।
तामसेभ्यो नमो नित्यं गुणेभ्योऽपि नमो नमः ॥ २८ ॥

सर्वविद्यावतारेभ्यः सिद्धेभ्योऽपि नमो नमः ।
आनन्दाय नमस्कृत्य कन्दनाय नमो नमः ॥ २९ ॥

सर्वतत्त्वात्मकबलाय प्रकृतिपत्रेभ्य एव च ।
सिद्धपीठाय सत्त्वस्य शवरूपशिवाय च ॥ ३० ॥

त्रिपश्चाराय चक्राय नमो नित्यं नमो नमः ।
तत्रस्थायै कालिकायै गुह्यायै कामरूपिण्यै ॥ ३१ ॥

कुरुकुल्लादिशक्तिभ्यः कालिकायै नमो नमः ।
नमो नमो नमस्तेऽस्तु परापराभ्यो नमो नमः ॥ ३२ ॥

विशालनेत्रां सुरसंघवन्दितां सुरासुराभ्यर्चितपादपद्माम् ।
नृमुण्डमालाकलिताशताङ्गैः परावरे ते प्रभवन्ति सिद्धाः ॥३३॥

स्थूलेति केचित् प्रवदन्ति सिद्धाः सूक्ष्मेति केचिन्मुनयो वदन्ति ।
तामम्बिकां नौमि विशालनेत्रे सुमङ्गलं धेहि मदीयदेहे ॥३४॥

त्वदीयपादाम्बुजमेवमेतत् निषेव्य सिद्धाः प्रभवं प्रयान्ति ।
मातस्तवायं पापात् सर्वशोकदुःखाज्जगज्जनरस्ये ॥
तत् त्वां ध्यायेन्मनसि विधानाः सर्वे ते सफलफलाः ॥३५॥

॥ इति विश्वसारतन्त्रे गुह्यकाल्याः क्रमस्तवो नाम षष्ठः पटलः ॥

# वैरिहरं कवचम्

## (श्मशानकाल्याः)

॥ श्रीगणेशाय नमः ॥

कैलाशशिखरारूढं शङ्करं वरदं शिवम् ।
देवी पप्रच्छ सर्वज्ञं सर्वदेवमहेश्वरम् ॥ १ ॥

देव्युवाच—

भगवन् सर्वदेवेश देवानां भोगद प्रभो ।
प्रब्रूहि मे महादेव गोप्यं यद्यपि च प्रभो ॥ २ ॥

शत्रूणां येन नाशः स्यादात्मनो रक्षणं भवेत् ।
परमैश्वर्यमतुलं लभेद् येन हि तद् वद ॥ ३ ॥

भैरव उवाच—

वक्ष्यामि ते महादेवि सर्वधर्मविदां वरे ।
अद्भुतं कवचं देव्याः सर्वकामप्रसाधकम् ॥ ४ ॥

विशेषतः शत्रुनाशकरं रक्षाकरं नृणाम् ।
सर्वारिष्टप्रशमनमतिचारविनाशनम् ॥ ५ ॥

सुखदं भोगदं चैव वशीकरणमुत्तमम् ।
शत्रुसंघाः क्षयं यान्ति भवन्ति व्याधिपीडिताः ॥ ६ ॥

दुःखिनो ज्वरिणश्चैव स्वाभीष्टप्रच्युतास्तथा ।
ध्यायेत् कालीं महामायां त्रिनेत्रां बहुरूपिणीम् ॥ ७ ॥

अस्य श्रीकालिकाकवचस्य भैरव ऋषिः, अनुष्टुप् छन्दः, श्रीकालिका देवता शत्रुसंघनाशे विनयोगः ।

चतुर्भुजां लोलजिह्वां पूर्णचन्द्रनिभाननाम् ।
नीलोत्पलदलप्रख्यां[1] शत्रुसंघविदारिणीम् ॥ ८ ॥

नरमुण्डं तथा खड्गं कमलं च वरं तथा[2] ।
विभ्राणां रक्तवसनां दंष्ट्राली घोररूपिणीम् ॥ ९ ॥

अट्टाट्टहासनिरतां सर्वदा च दिगम्बराम् ।
शवासनस्थितां देवीं मुण्डमालाविभूषिताम् ॥ १० ॥

इति ध्यात्वा महादेवीं पुनस्तु कवचं पठेत् ।
ओं कालिका घोररूपाढ्या सर्वकामप्रदा शुभा ॥ ११ ॥

सर्वतः संस्तुता[3] देवी शत्रुनाशं करोतु सा ।
ह्रीं ह्रीं स्वरूपिणी चैव ह्रां ह्रां ह्रूं रूपिणी तथा[4]॥१२॥

ह्रां ह्रां क्षौं क्षौं स्वरूपा सा सदा शत्रून् प्रशास्तु मे ।
श्रीं ह्रीं रीं रूपिणी देवीं भवबन्धविमोचनी ॥१३॥

ह स क ह ल ह्रीं-स्वरूपासौ रिपून् सा हन्तु सर्वदा ।
यथा शुम्भो हतो दैत्यो निशुम्भश्च महासुरः ॥ १४ ॥

वैरिनाशाय वन्दे तां कालिकां शङ्करप्रियाम् ।
ब्राह्मी शैवी वैष्णवी च वाराही नारसिंहिका ॥ १५ ॥

---

१. 'प्रेक्ष्याम्' इति पाठः, कै० नं० २३००८ ।

२. 'करवालं वरं तथा' इति पाठः, कै० नं० २३०१३ ।

३. 'सर्वदेवस्तुता' इति पाठः ।

४. 'ओं ह्रां ह्री स्वरूपिणी चैव ह्रीं ह्रीं ह्रूं स्वरूपिणी तथा' इति पाठः ।

कौमार्यैन्द्री च चामुण्डा खादयन्तु मम द्विषः ।
सुरेश्वरी घोररूपा चण्डमुण्डविनाशिनी ॥ १६ ॥

मुण्डमालावृताङ्गी च सर्वतः मातु मां सदा ।
ह्रीं ह्रीं कालिके घोरदंष्ट्रे रुधिरप्रिये ॥

रुधिरवक्त्रे रुधिरावृतस्तनि ममामुकशत्रुं खादय खादय छेदय छेदय हिंस य् हिंस य् मारय मारय भिन्धि भिन्धि छिन्धि छिन्धि उच्चाटयोच्चाटय शोषय शोषय द्रावय द्रावय स्वाहा ।

एंर्रीं कालिकायै मदीयशत्रून् समर्पयामि स्वाहा ।

जय जय किरि किरि किटि किटि कट्ट कट्ट मर्दय मर्यद मोहय मोहय हर हर मम रिपून् ध्वंस ध्वंस भक्ष भक्ष त्रोटय त्रोटय यातुधानि चामुण्डे सर्वजनान् राज्ञो राजपुरुषान् स्त्रियो मम वश्याः कुरु कुरु तनु तनु धान्यं धनमश्वान् गजानन्नानि दिव्यकामिनीः पुत्रान् राजप्रियं देहि देहि यच्छ यच्छ क्षां क्ष्रीं क्षूं क्षैं क्षौं क्षः स्वाहा ।

इत्येतत् कवचं दिव्यं कथितं शम्भुना पुरा ॥ १७ ॥

ये पठन्ति सदा तेषां ध्रुवं नश्यन्ति शत्रवः ।
वैरिणः प्रलयं यान्ति व्याधिताश्च भवन्ति हि ॥ १८ ॥

धनहीनाः पुत्रहीनाः शत्रवस्तस्य सर्वदा ।
सहस्रपठनात् सिद्धिः कवचस्य भवेत्तदा ॥ १९ ॥

ततः कार्याणि सिध्यन्ति तद्धि शङ्करभाषितम् ।
श्मशानाङ्गारमादाय चूर्णं कृत्वा प्रयत्नतः ॥ २० ॥

पादोदकेन पिष्ट्वा च लिखेल्लोहशलाकया ।
भूमौ शत्रून् हीनरूपान् उत्तराशिरसस्तथा ॥ २१ ॥

हस्तं दत्त्वा तद्हृदये कवचं तु स्वयं पठेत् ।
शत्रोः प्राणप्रतिष्ठां च कुर्याद् मन्त्रेण मन्त्रवित् ॥ २२ ॥

हन्यादस्त्रप्रहारेण शत्रुर्गच्छेद् यमक्षयम् ।
ज्वलिताङ्गारतापेन ज्वरी भवति तादृशः ॥ २३ ॥

प्रोञ्छनैर्वामपादेन दरिद्रो भवति ध्रुवम् ।
वैरिनाशकरं प्रोक्तं कवचं वश्यकारकम् ॥ २४ ॥

परमैश्वर्यदं चैव पुत्रपौत्रादिवृद्धिदम् ।
प्रभातसमये चैव पूजाकाले विशेषतः ॥

सायंकाले तथा पाठात् सर्वसिद्धिर्भवेद्ध्रुवम् ।
शत्रुरुच्चाटनं याति देशाच्च विच्युतो भवेत् ॥ २५ ॥

पश्चात् किङ्करतामेति सत्यं सत्यं न संशयः ।
शत्रुनाशकरे देवि सर्वसम्पत्करे शुभे ॥
सर्वदेवस्तुते देवि कालिके त्वां नमाम्यहम् ॥ २६ ॥

॥ इति श्रीरुद्रयामले वैरिहरं श्मशानकाल्याः कवचं सम्पूर्णम् ॥

# सम्मोहनकवचम्

(श्रीक्रियोड्डीशतन्त्रे चतुर्दशपटले)

श्रीभैरव उवाच—

त्रिकालं गोपितं देवि कलिकाले प्रकाशितम् ।
न वक्तव्यं न द्रष्टव्यं तव स्नेहात् प्रकाश्यते ॥ १ ॥

कालीं दिगम्बरी देवी जगन्मोहनकारिणी ।
तच्छृणुष्व महादेवि त्रैलोक्यमोहनं त्विदम् ॥ २ ॥

अस्य महाकालभैरव ऋषिरनुष्टुप् छन्दः श्मशानकालिका देवता सर्वमोहने विनियोगः ।

ऐं क्रीं क्रूं क्रः स्वाहा विवादे मातु मां सदा ।
क्लीं दक्षिणकालिकादेवतायै सभामध्ये जयप्रदा ॥ ३ ॥

क्रीं क्रीं श्यामाङ्गिन्यै शत्रुं मारय मारय ।
ह्रीं क्रीं क्रीं क्लीं त्रैलोक्यं वशमानय ॥ ४ ॥

ह्रीं श्रीं क्रीं मां रक्ष रक्ष विवादे राजगोचरे ।
द्वाविंशत्यक्षरी रक्ष सर्वत्र रक्ष मां सदा ॥ ५ ॥

कवचे वर्जितं यत्र तत्र मां पातु कालिका ।
सर्वत्र रक्ष मां देवि श्यामात्युग्रस्वरूपिणी ॥ ६ ॥

एतेषां परमं मोहं भवद्भाग्ये प्रकाशितम् ।
सदा यस्तु पठेद् वापि त्रैलोक्यं वशमानयेत् ॥ ७ ॥

इदं कवचमज्ञात्वा पूजयेद् घोररूपिणीम् ।
सर्वदा स महाव्याधिपीडितो नात्र संशयः ॥ ८ ॥

अल्पायुः स भवेद् रोगी कथितं तव नारद ।
धारणं कवचस्यास्य भूर्जपत्रे विशेषतः ॥
सयन्त्रं कवचं धृत्वा इच्छासिद्धिः प्रजायते ॥ ९ ॥

शुक्लाष्टम्यां लिखेन्मन्त्री धारयेत् स्वर्णपत्रके ।
कवचस्यास्य माहात्म्यं नाहं वक्तुं महामुने ॥ १० ॥

शिखायां धारयेद् योगी फलार्थी दक्षिणे भुजे ।
इदं कल्पद्रुमं देवि तव स्नेहात् प्रकाश्यते ॥ ११ ॥
गोपनीयं प्रयत्नेन पठनीयं महामुने ।

श्रीविष्णुरुवाच—

इत्येवं कवचं नित्यं महालक्ष्मि प्रपठ्यताम् ॥ १२ ॥
अवश्यवशमायाति त्रैलोक्यं सचराचरम् ।
शिवेन कथितं पूर्वं नारदे कलहास्पदे ॥
तत्पाठान्नारदेनापि मोहितं सचराचरम् ॥ १३ ॥

॥इति श्रीक्रियोड्डीशे महातन्त्रराजे पार्वतीपरमेश्वरसंवादे चतुर्दशः पटलः॥

# श्रीदक्षिणकालिकास्तोत्रम्

ओं कृशोदरि महाचण्डि मुक्तकेशि बलिप्रिये ।
कुलाचारप्रसन्नास्ये नमस्ते शङ्करप्रिये ॥ १ ॥

घोरदंष्ट्रे कोटराक्षि शब्दप्रसाधनि ।
घुरघोररवास्फारे नमस्ते चिद्वासिनि ॥ २ ॥

बन्धूकपुष्पसङ्काशे त्रिपुरे भयनाशिनि ।
भाग्योदयसमुत्पन्ने नमस्ते वरवन्दिनि ॥ ३ ॥

जय देवि जगद्धात्रि त्रिपुराद्ये त्रिदेवते ।
भक्तेभ्यो वरदे देवि महिषघ्नि नमोऽस्तु ते ॥ ४ ॥

घोरविघ्नविनाशाय कुलाचारसमृद्धये ।
नमामि वरदे देवि मुण्डमालाविभूषिते ॥ ५ ॥

रक्तधारासमाकीर्णे करकाञ्चीविभूषिते ।
सर्वविघ्नहरे कालि नमस्ते भैरवप्रिये ॥ ६ ॥

नमस्ते दक्षिणामूर्ते कालि त्रिपुरभैरवि ।
भिन्नाञ्जनचयप्रख्ये प्रवीणशवसंस्थिते ॥ ७ ॥

गलच्छोणितधाराभिः स्मेराननसरोरुहे ।
पीनोन्नतकुचद्वन्द्वे नमस्ते घोरदक्षिणे ॥ ८ ॥

आरक्तमुखशान्ताभिर्नेत्रालिभिर्विराजिते ।
शवद्वयकृतोत्तंसे नमस्ते मदविह्वले ॥ ९ ॥

पञ्चाशन्मुण्डघटितमालालोहितलोहिते ।
नानामणिविशोभाढ्ये नमस्ते ब्रह्मसेविते ॥ १० ॥

शवास्थिकृतकेयूरशङ्खकङ्कणमण्डिते ।
शववक्षःसमारूढे नमस्ते विष्णुपूजिते ॥ ११ ॥

शवमांसकृतग्रासे साट्टहासे मुहुर्मुहुः ।
मुखशीघ्रस्मितामोदे नमस्ते शिववन्दिते ॥ १२ ॥

खड्गमुण्डधरे वामे सव्येऽभयवरप्रदे ।
दन्तुरे च महारौद्रे नमस्ते चण्डनादिते ॥ १३ ॥

त्वं गतिः परमा देवि त्वं माता परमेश्वरि ।
त्राहि मां करुणासान्द्रे नमस्ते चण्डनायिके ॥ १४ ॥

नमस्ते कालिके देवि नमस्ते भक्तवत्सले ।
मूर्खतां हर मे देवि प्रतिभा जयदायिनी ॥ १५ ॥

गद्यपद्यमयीं वाणीं तर्कव्याकरणादिकाम् ।
अनधीतगतां विद्यां देहि दक्षिणकालिके ॥ १६ ॥

जयं देहि सभामध्ये धनं देहि धनागमे ।
देहि मे चिरजीवित्वं कालिके रक्ष दक्षिणे ॥ १७ ॥

राज्यं देहि यशो देहि पुत्रान् दारान् धनं तथा ।
देहान्ते देहि मे मुक्तिं जगन्मातः प्रसीद मे ॥ १८ ॥

ओं मङ्गला भैरवी दुर्गा कालिका त्रिदशेश्वरी ।
उमा हेमवती कन्या कल्याणी भैरवेश्वरी ॥ १९ ॥

काली ब्राह्मी च माहेशी कौमारी वैष्णवी तथा ।
वाराही वासली चण्डी त्वां जगुर्मुनयः सदा ॥ २० ॥

उग्रतारेति तारेति शिवेत्येकजटेति च ।
लोकोत्तरेति कालेति गीयते कृतिभिः सदा ॥ २१ ॥

यथा काली तथा तारा तथा छिन्ना च कुल्लका ।
एकमूर्तिश्चतुर्भेदो देवि त्वं कालिका पुरा ॥ २२ ॥

एकद्वित्रिविधा देवि कोटिधानन्तरूपिणी ।
अङ्गाङ्गिकैर्नामभेदैः कालिकेति प्रगीयते ॥ २३ ॥

शम्भुः पञ्चमुखेनैव गुणान् वक्तुं न ते क्षमः ।
चापल्यैर्यत् कृतं स्तोत्रं क्षमस्व वरदा भव ॥ २४ ॥

प्राणान् रक्ष यशो रक्ष पुत्रान् दारान् धनं तथा ।
सर्वकाले सर्वदेशे पाहि दक्षिणकालिके ॥ २५ ॥

यः सम्पूज्य पठेत् स्तोत्रं दिवा वा रात्रिसन्ध्ययोः ।
धनं धान्यं तथा पुत्रं लभते नात्र संशयः ॥ २६ ॥

॥ इति श्रीमहाकालविरचितं श्रीमद्दक्षिणकालिकास्तोत्रं सम्पूर्णम् ॥

# श्रीमद्दक्षिणकालिकाकवचम्

## ( कालीकुलसर्वस्वे )

भैरव उवाच—

कालिका या महाविद्या कथिता भुवि दुर्लभा ।
तथापि हृदये शल्यमस्ति देवि कृपां कुरु ॥ १ ॥

कवचं तु महादेवि कथय स्वानुकम्पया ।
यदि नो कथ्यते मार्तविमुञ्चामि तदा तनुम् ॥ २ ॥

श्रीदेव्युवाच—

शङ्कापि जायते वत्स तव स्नेहात् प्रकाशितम् ।
न वक्तव्यं न द्रष्टव्यमतिगुह्यतरं महत् ॥ ३ ॥

कालिका जगतां माता शोकदुःखविनाशिनी ।
विशेषतः कलियुगे महापातकहारिणी ॥ ४ ॥

काली मे पूर्वतः पातु पृष्ठतश्च कपालिनी ।
कुल्ला मे दक्षिणे पातु कुरुकुल्ला तथोत्तरे ॥ ५ ॥

विरोधिनी शिरः पातु विप्रचित्ता तु चक्षुषी ।
उग्रा मे नासिकां पातु कर्णौ चोग्रप्रभा मता ॥ ६ ॥

वदनं पातु मे दीप्ता नीला च चिबुकं सदा ।
घना ग्रीवां सदा पातु बलाका बाहुयुग्मकम् ॥ ७ ॥

मात्रा पातु करद्वन्द्वं वक्षो मुद्रा सदाऽवतु ।
मिता पातु स्तनद्वन्द्वं योनिमण्डलदेवता ॥ ८ ॥

ब्राह्मी मे जठरं पातु नाभिं नारायणी तथा ।
ऊरू माहेश्वरी नित्या चामुण्डा पातु लिङ्गकम् ॥ ९ ॥

कौमारी च कटिं पातु तथैव जानुयुग्मकम् ।
अपराजिता च पादौ मे वाराही पातु चाङ्गुलीम् ॥१०॥

सन्धिस्थानं नारसिंही पत्रस्था देवताऽवतु ।
रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु ॥ ११ ॥

तत्सर्वं रक्ष मे देवि कालिके घोरदक्षिणे ।
ऊर्ध्वमधस्तथा दिक्षु पातु देवी स्वयं वपुः ॥ १२ ॥

हिंस्रेभ्यः सर्वदा पातु साध्यत्वञ्च जलाधिकात् ।
दक्षिणा कालिका देवी व्यापकत्वे सदाऽवतु ॥ १३ ॥

इदं कवचमज्ञात्वा यो जपेद्देवदक्षिणाम् ।
न पूजाफलमाप्नोति विघ्नस्तस्य पदे पदे ॥ १४ ॥

कवचेनावृतो नित्यं यत्र यत्रैव गच्छति ।
तत्र तत्राभयं तस्य न क्षोभो विद्यते क्वचित् ॥ १५ ॥

॥ इति श्रीकालीकुलसर्वस्वे श्रीमद्दक्षिणकालिकाकवचम् ॥

# विश्वसारीयस्तुतिः

ओं किं किं दुःखं सकलजननि क्षीयते न स्मृतायां
का का कीर्तिः कुलकमलिनि प्राप्यते न स्मृतायाम् ।
किं किं सौख्यं सुरवरनुते प्राप्यते न स्मृतायां
कं कं योगं त्वयि न तनुते वित्तमालम्बिकायाम् ॥१॥

स्मृता भवभयं हंसि पूजितासि शुभङ्करी ।
स्तुता त्वं वाञ्छितं देवि ददासि करुणाकरे ॥ २ ॥

परमानन्दबोधाब्धिरूपे तेजःस्वरूपिणि ।
देववृन्दशिरोरत्ननिघृष्टचरणाम्बुजे ॥ ३ ॥

चिद्विश्रान्तिमहासत्त्तामात्रे देवि नमोऽस्तु ते ।
सृष्टिस्थित्युपसंहारहेतुभूते सनातनि ॥ ४ ॥

गुणत्रयात्मिकासि त्वं जगतः कारणेच्छया ।
अनुग्रहाय भक्तानां गृहीतदिव्यविग्रहे ॥ ५ ॥

भक्तस्य मे नित्यपूजायुक्तस्य परमेश्वरि ।
ऐहिकामुष्मिकीं सिद्धिं देहि त्रिदशवन्दिते ॥ ६ ॥

तापत्रयपरिम्लानभाजनं त्राहि मां शिवे ।

नान्यं वदामि न शृणोमि न चिन्तयामि
न भजामि न चाश्रयामि ।
त्यक्त्वा त्वदीयचरणाम्बुजमादरेण
मां त्राहि देवि कृपया मयि देहि सिद्धिम् ॥ ७ ॥

अज्ञानाद् वा प्रमादाद् वा वैकल्यात् साधनस्य च ।
यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हसि ॥ ८ ॥
द्रव्यहीनं क्रियाहीनं श्रद्धामन्त्रविवर्जितम् ।
तत् सर्वं कृपया देवि क्षमस्व त्वं दयानिधे ॥ ९ ॥
यन्मया क्रियते पापं तन्महत् स्वल्पमेव वा ।
तत् सर्वं च जगद्धात्रि क्षन्तव्यमयमञ्जलिः ॥ १० ॥

॥ इति विश्वसारतन्त्रे देव्याः स्तुतिः समाप्ता ॥

# कालीकवचम्

अस्य दक्षिणकालीकवचस्य महाकालभैरव ऋषिः, अनुष्टुप् छन्दः, श्रीश्मशानकाली देवता सर्वार्थसाधने विनियोगः ।

श्मशानकालिका पातु पूर्वस्यां दिशि सर्वतः ।
द्वाविंशद्वर्णरूपा च भक्तिवश्या दिगम्बरी ॥ १ ॥

भद्रकाली तथाग्नेय्यां पायान्नित्यं जगन्मयी ।
रुद्रकाली महाकाली काली त्वन्ता स्तवप्रिया ॥ २ ॥

वागीश्वरी पातु याम्यां मम भीतिविनाशिनी ।
वदद्वन्द्वं वाग्वादिनि वह्निजायास्वरूपिणी ॥ ३ ॥

नित्यं रक्षतु मां देवी नैऋत्यां चण्डिका तथा ।
लज्जा श्रीभुवनेश्वरी बीजरूपा चण्डहन्त्री ॥ ४ ॥

महाकाली पश्चिमायां मां पातु शिवप्रिया ।
ओं क्रें क्रें क्रौं युगं पशुं पशुं गृहाण हूँ फडग्नायी ॥५॥

त्रिपुरा पातु वायव्ये रक्तचन्दनसुन्दरी ।
वागद्वन्द्वकन्दर्पत्रयसौस्त्रितयवचोदेहा ॥ ६ ॥

कौबेर्यां मां महामाया पातु त्राणपरायणा ।
कामसौर्वाणी लज्जा श्रीरमाग्निजाया ॥ ७ ॥

भैरवी च तथैशान्यां पातु नित्यं सुरप्रिया ।
हस्त्रैं हसकलरीं हस्त्रौं मन्त्रस्वरूपिणी ॥ ८ ॥

ऊर्ध्वे मां पातु मातङ्गी द्रुतसिद्धिकरी सदा ।
उच्छिष्टशब्दचाण्डाली मातङ्गी सर्वशङ्करी ॥ ९ ॥

धनञ्जयसुन्दरी वर्णशरीरा ?············ ।
पात्वधस्त्रिपुटा देवी श्रीलज्जाकामरूपिणी ॥ १० ॥

दुर्गा मे मस्तकं पातु दुर्गदानवनाशिनी ।
दुर्गे युग्मं रक्षिणि कृष्णवर्त्मप्रियातनुः ॥ ११ ॥

भालं मे पातु बाला च बालिकारूपधारिणी ।
वाणी कन्दर्पसौरूपा सिन्दूरारुणविग्रहा ॥ १२ ॥

अन्नपूर्णा पातु नेत्रे नित्यं मे सुरसुन्दरी ।
हस्त्रैं हसकलह्रीं शक्तिमाहेश्वरीतनुः ॥ १३ ॥

सुन्दरी पातु वक्त्रं मे सर्वाकर्षणकारिणी ।
क ए ई श भुवनेशी शिवशक्तिः कहलह्रीं ॥ १४ ॥

शक्तिमादनैन्द्रलज्जामन्त्रविराजितदेहा ।
जिह्वां मे सर्वदा पातु तारा संसारतारिणी ॥ १५ ॥

वेदादिबीजलज्जाकवचास्त्रस्वरूपिणी ।
कण्ठं पातु महालक्ष्मीर्वाणीं तथा माया ॥ १६ ॥

कामबीजस्वरूपा च सर्वलोकवरप्रदा ।
स्कन्धौ रक्षतु शूलिनी शूलहस्ता सदाशिवा ॥ १७ ॥

ज्वलद्वन्द्वं शूलिनी च दुष्टग्रहं हूं फट् स्वाहा ।
बाहू पद्मावती पातु माया पद्मावती तथा ॥ १८ ॥

करौ मे महिषमर्दिनी पातु महिषमर्दिनी स्वाहा ।
त्रिशक्तिर्हृदयं पातु सर्वशक्ति-विवर्द्धिनी ॥ १९ ॥

श्रीं ह्रीं क्रूं ऐं वज्रवैरोचनीये क्रूं फट् स्वाहा ।
नीलसरस्वती पातु मध्यं मे सर्वदैव हि ॥ २० ॥

गायत्री कवचरूपा वागीशत्वप्रदायिनी ।
नाभिं पायादेकजटा भुवनेशी त्रीं वर्मास्त्रा ॥ २१ ॥

कटिं कामेश्वरी पातु भक्तकामप्रपूरणी ।
वाणी······म नित्यक्लिन्ने मदद्रवे सौः स्वरूपा ॥ २२ ॥

भुवनेशी शङ्खिनी पायान्नित्यं बीजस्वरूपिणी ।
ऊरू पातु नित्या देवी नित्यानन्दस्वरूपिणी ॥ २३ ॥

ऐं कन्दर्पं नित्यक्लिन्ने मदद्रवे वैजाया ।
महात्रिपुरसुन्दरी जानुनी पातु मे सदा ॥ २४ ॥

भुवनेशी कामदेवः सौः विचित्रविग्रहा ।
अश्वारूढा तथा जङ्घां प्रचण्डासुरघातिनीं ॥ २५ ॥

आं ह्रीं क्रों एहि परमेश्वरि वैश्वानरप्रिया ।
पादौ सरस्वती पातु वीणापुस्तकधारिणी ॥ २६ ॥

ॐ ह्रीं ऐं ह्रीं वेदबीजं सरस्वत्यै नमस्तथा ।
सर्वतस्त्वरिता पातु त्वरितं फलदायिनी ॥ २७ ॥

ॐ ह्रीं हं खे च च्छे क्ष स्त्रीं हूं क्षें स्त्री फट्काररूपा ।
अग्रं ते षोडशी पातु देवी त्रिपुरसुन्दरी ॥ २८ ॥

महाषोडश्या अष्टबीजान्ते क ए ई ल भुवनेश्वरी ।
शिवशक्तिकलहह्लीं सकलह्लीं पुनस्तस्याश्चतुष्टयम् ।। २९ ।।

क्षीराब्धितनया चैव षोडशी वैश्वरूपिणी ।
पृष्ठभागे गुह्यकाली नित्यं रक्षतु शोभना ।। ३० ।।

कृष्णदेहो दक्षपार्श्वे नित्यं पातु सुरेश्वरी ।
वामपार्श्वे तथा पातु रक्तबीजविनाशिनी ।। ३१ ।।

खड्गात्पातु च मां नित्यं कालिका घोररूपिणी ।
रक्ष मां सर्वभूतेभ्यः सर्वत्र खड्गपाणिनी ।। ३२ ।।

ॐ सदा शैलपुत्री सर्वान् रागान् प्रसार्यंताम् ।
ॐ आं हं फडुग्रचण्डा खड्गरिपून् विमर्दताम् ।। ३३ ।।

इत्येतत् कवचं प्रोक्तं धर्मकामार्थसाधनम् ।
इदं रहस्यं परमं सर्वार्थसाधनं वरम् ।। ३४ ।।

यः सकृत् शृणुयादेतत् कवचं भैरवोदितम् ।
स सर्वान् लभते कामान् स एव शिवरूपताम् ।। ३५ ।।

सकृद् यस्तु पठेदेतत् कवचं भैरवोदितम् ।
स सर्वयज्ञस्य फलं लभते नात्र संशयः ।। ३६ ।।

संग्रामेषु जयेच्छत्रून् मातङ्गानिव केशरी ।
दहेत्तृणं यथा वह्निस्तथा शत्रून् दहेत्सदा ।। ३७ ।।

नास्त्राणि तस्य शस्त्राणि शरीरे प्रभवन्ति हि ।
न तस्य जायते व्याधिर्न च दुःखं कदाचन ।। ३८ ।।

गुटिकाञ्जन-पाताल-पादलेपरसायनम् ।
उच्चाटनाद्याः सर्वाः प्रसीदन्ति च सिद्धयः ॥ ३९ ॥

वायोरिव गतिस्तस्य भवेदन्यैरवारिता ।
दीर्घायुः कामभोगी च धनवान् हि स जायते ॥ ४० ॥

अष्टम्यां संयतो भूत्वा नवम्यां विधिवच्छिवाम् ।
पूजयित्वा विधानेन विचिन्त्य मनसा शिवाम् ॥ ४१ ॥

यो न्यसेत् कवचं देहे तस्य सम्यक् फलं शृणु ।
जितव्याधिः शतायुश्च रूपवान् गुणवान् सदा ॥ ४२ ॥

धनरत्नौघसम्पूर्णो विद्यावान् स च जायते ।
नाग्निर्दहति तत्कायं नापः संक्लेदयन्ति च ॥ ४३ ॥

शस्त्राणि नैव छिन्दन्ति न तापयति भास्करः ।
न तस्य जायते विघ्नो नास्ति तस्य च संज्वरः ॥ ४४ ॥

वेतालाश्च पिशाचाश्च राक्षसा गणनायकाः ।
सर्वे तस्य वशं यान्ति भूतग्रामाश्चतुर्विधाः ॥ ४५ ॥

नित्यं पठन्ति ये भक्त्या कवचं हरनिर्मितम् ।
सोऽहमेव महादेवो महाकाली च मातृका ॥ ४६ ॥

धर्मार्थकाममोक्षाश्च तस्य नित्यं करे स्थिताः ।
अन्यस्य वरदः सोऽपि नित्यं भवति पण्डितः ॥ ४७ ॥

कवित्वं सक्तवादित्वं सततं तस्य जायते ।
वदेत् श्लोकसहस्राणि भवेत् श्रुतिधरो नरः ॥ ४८ ॥

लिखितं यस्य गेहे तु कवचं भैरवोदितम् ।
न तस्य दुर्गतिः काचिज्जायते वापि भूषणम् ।। ४९ ।।

ग्रहाश्च सर्वे तुष्यन्ति वशं गच्छन्ति भूमिपाः ।
यद् राज्ये कवचं याति जायन्ते तत्र नेतयः ।।
एतत् ते सर्वमाख्यातं सभेदं कवचं शुभम् ।। ५० ।।

।। इति श्रीकालीकल्पे महारहस्ये शिवपार्वतीसंवादे कालीकवचं समाप्तम् ।।

# कालीकवचम्

## [ श्यामारहस्ये चतुर्थपरिच्छेदे ]

[ प्रथमं स्तुतिर्लिखिता, सैषा स्तुतिर्यामलोक्तेत्यपि निर्दिष्टा । अथ स्तुतिः—"कर्पूरं मध्यमान्त्यस्वरपरिरहितं सेन्दुवामाक्षियुक्तम्"—इत्यादि २२ श्लोकात्मिका । अन्ते पुष्पिकायाम् "इति महाकालविरचितं स्वरूपाख्यं स्तोत्रं समाप्तम्" इत्यपि निर्दिष्टम् । अनन्तरम्—अथोत्तरतन्त्रे कवचं लिख्यते- ]

कैलासशिखरारूढं भैरवं चन्द्रशेखरम् ।
वक्षःस्थले समासीना भैरवी परिपृच्छति ॥ १ ॥

भैरव्युवाच—

देवेश परमेशान लोकानुग्रहकारक ।
कवचं सूचितं पूर्वं किमर्थं न प्रकाशितम् ॥ २ ॥

यदि मे महती प्रीतिस्तवास्ति कुलभैरव ।
कवचं कालिकादेव्याः कथयस्वानुकम्पया ॥ ३ ॥

श्रीभैरव उवाच—

अप्रकाश्यमिदं देवि नरलोके विशेषतः ।
लक्षवारं वारितापि स्त्रीस्वभावाद्धि पृच्छसि ॥ ४ ॥

देव्युवाच—

सेवका बहवो नाथ कुलधर्मपरायणाः ।
यतस्ते त्यक्तजीवाशाः शवोपरि चितोपरि ॥ ५ ॥

तेषां प्रयोगसिद्ध्यर्थं स्वरक्षार्थं विशेषतः ।
पृच्छामि बहुशो देव कथयस्व दयानिधे ॥ ६ ॥

भैरव उवाच—

कथयामि शृणु प्राज्ञे कालिकाकवचं परम् ।
गोपनीयं पशोरग्रे स्वयोनिमपरे यथा ॥
सर्वविद्या महाराज्ञी सर्वदेवनमस्कृता ॥ ७ ॥

कालिकाकवचस्य भैरव ऋषिरुष्णिक् छन्दः, अद्वैतरूपिणी श्रीदक्षिणकालिका देवता, ह्रीं बीजम्, ह्रूं शक्तिः, क्रीं कीलकम्, सर्वार्थ-साधनपुरःसरमन्त्रसिद्धौ विनियोगः ॥

सहस्रारे महापद्मे कर्पूरधवलो गुरुः ।
वामोरुस्थिततच्छक्तिः सदा सर्वत्र रक्षतु ॥ १ ॥

परमेशो गुरुः पातु परापरगुरुस्तथा ।
परमेष्ठी गुरुः पातु दिवासिद्धश्च मानवः ॥ २ ॥

महादेवीं सदा पातु महादेवः सदावतु ।
त्रिपुरो भैरवः पातु दिव्यरूपधरः सदा ॥ ३ ॥

ब्रह्मानन्दः सदा पातु पूर्णदेवः सदावतु ।
चलच्चित्तः सदा पातु चेलाञ्चलश्च पातु माम् ॥ ४ ॥

कुमारः क्रोधनश्चैव वरदः स्मरदीपनः ।
माया मायावती चैव सिद्धौघाः पान्तु सर्वदा ॥ ५ ॥

विमलः कुशलश्चैव भीमसेनः सुधाकरः ।
मीनो गोरक्षकश्चैव भोजदेवः प्रजापतिः ॥ ६ ॥

कुलदेवो रन्तिदेवो विघ्नेश्वरहुताशनौ ।
सन्तोषः समयानन्दः पातु मां मानवाः सदा ॥ ७ ॥

सर्वेऽप्यानन्दनाथान्ता अम्बान्ता मातरः क्रमात् ।
गणनाथः सदा पातु भैरवः पातु मां सदा ॥ ८ ॥

वटुकेशः सदा पातु दुर्गा मां परिरक्षतु ।
शिरसः पादपर्यन्तं पातु मां घोरदक्षिणा ॥ ९ ॥

तथा शिरसि मां काली हृदि मूले च रक्षतु ।
सम्पूर्णविद्यया देवि सदा सर्वत्र रक्षतु ॥ १० ॥

क्रीं क्रीं क्रीं वदनं पातु हृदि हुं हुं सदावतु ।
ह्रीं ह्रीं पातु सदाधारे दक्षिणे कालिके हृदि ॥ ११ ॥

क्रीं क्रीं क्रीं पातु मे पूर्वे हुं हुं दक्षे सदावतु ।
ह्रीं ह्रीं मां पश्चिमे पातु हुं हुं पातु सदोत्तरे ॥ १२ ॥

पृष्ठे पातु सदा स्वाहा मूला सर्वत्र रक्षतु ।
षडङ्गे युवती पातु षडङ्गेषु सदैव माम् ॥ १३ ॥

मन्त्रराजः सदा पातु ऊर्ध्वाधो दिग्विदिक्स्थितः ।
चक्रराजः स्थिताश्चापि देवताः परिपान्तु माम् ॥ १४ ॥

उग्रा उग्रप्रभा दीप्ता पातु पूर्वे त्रिकोणके ।
नीला घना वलाका च तथा परत्रिकोणके ॥ १५ ॥

मात्रा मुद्रा मिता चैव तथा मध्यत्रिकोणके ।
काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी ॥ १६ ॥

बहिः षट्कोणगाः पान्तु विप्रचित्ता तथा प्रिये ।
सर्वाः श्यामाः खड्गधरा वामहस्ते च तर्जनाः ॥ १७ ॥

ब्राह्मी पूर्वदले पातु नारायणी तथाग्निके ।
माहेश्वरी दक्षदले चामुण्डा राक्षसेऽवतु ॥ १८ ॥

कौमारी पश्चिमे पातु वायव्ये चापराजिता ।
वाराही चोत्तरे पातु नारसिंही शिवेऽवतु ॥ १९ ॥

ऐं ह्रीं असिताङ्गः पूर्वे भैरवः परिरक्षतु ।
ऐं ह्रीं रुरुश्चाग्निकोणे ऐं ह्रीं चण्डस्तु दक्षिणे ॥ २० ॥

ऐं ह्रीं क्रोधो नैर्ऋतेऽव्याद् ऐं ह्रीं उन्मत्तकस्तथा ।
पश्चिमे ऐं ह्रीं मां कपाली बायुकोणके ॥ २१ ॥

ऐं ह्रीं भीषणास्यश्च उत्तरेऽवतु भैरवः ।
ऐं ह्रीं संहार ऐशान्यां मातॄणामङ्कगाः शिवाः ॥ २२ ॥

ऐं हेतुको वटुकः पूर्वदले पातु सदैव माम् ।
ऐं त्रिपुरान्तको वटुक आग्नेय्यां सर्वदाऽवतु ॥ २३ ॥

ऐं वह्निवेतालो वटुको दक्षिणे मां सदाऽवतु ।
ऐं अग्निजिह्ववटुकोऽव्याद् नैर्ऋत्यां पश्चिमे तथा॥ २४ ॥

ऐं कालवटुकः पातु ऐं करालवटुकस्तथा ।
वायव्यां ऐं एकपाद उत्तरे वटुकोऽवतु ॥ २५ ॥

ऐं भीमवटुकः पातु ऐशान्यां दिशि मां सदा ।
ऐं ह्रीं ह्रीं हुं फट् स्वाहान्ताश्चतुःषष्टिमातरः ॥ २६ ॥

ऊर्ध्वाधो दक्षवामाग्रे पृष्ठदेशे तु पान्तु माम् ।
ऐं हुं सिंहव्याघ्रमुखी पूर्वे मां परिरक्षतु ॥ २७ ॥

ऐं कां कीं सर्पसुमुखी अग्निकोणे सदाऽवतु ।
ऐं मां मां मृगमेषमुखी दक्षिणे मां सदाऽवतु ॥ २८ ॥

ऐं चौं चौं गजराजमुखी नैर्ऋत्यां मां सदाऽवतु ।
ऐं में में विडालमुखी पश्चिमे पातु मां सदा ॥ २९ ॥

ऐं खौं खौं क्रोष्टमुखी वायुकोणे सदाऽवतु ।
ऐं हां हां ह्रस्वदीर्घमुखी लम्बोदरमहोदरी ॥ ३० ॥

पातु मामुत्तरे कोणे ऐं ह्रीं ह्रीं शिवकोणके ।
ह्रस्वजङ्घ–तालजङ्घ–प्रलम्बोष्ठी सदाऽवतु ॥ ३१ ॥

एताः श्मशानवासिन्यो भीषणा विकृताननाः ।
पान्तु मां सर्वदा देव्यः साधकाभीष्टपूरिकाः ॥ ३२ ॥

इन्द्रो मां पूर्वतो रक्षेदाग्नेय्यामग्निदेवता ।
दक्षे यमः सदा पातु नैर्ऋत्यां निर्ऋतिश्च माम् ॥ ३३ ॥

वरुणोऽवतु मां पश्चात् वायुर्मां वायव्येऽवतु ।
कुबेरश्चोत्तरे पायाद् ऐशान्यां तु सदाशिवः ॥ ३४ ॥

ऊर्ध्वं ब्रह्मा सदा पातु अधश्चानन्तदेवता ।
पूर्वादिदिक्स्थिताः पान्तु वज्राद्याश्चायुधाश्च माम्॥३५॥

कालिका पातु शिरसि हृदये कालिकाऽवतु ।
दिक्षु मां कालिका पातु विदिक्षु कालिकाऽवतु ॥ ३६ ॥

ऊर्ध्वं मे कालिका पातु अधश्च कालिकाऽवतु ।
चर्मासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि मेऽवतु ॥ ३७ ॥

इन्द्रियाणि मनश्चैव देहं सिद्धिं च मेऽवतु ।
आकेशात् पादपर्यन्तं कालिका मे सदाऽवतु ।। ३८ ।।

वियति कालिका पातु पथि मां कालिकाऽवतु ।
शयने कालिका पातु सर्वकार्येषु कालिका ।। ३९ ।।

पुत्रान् मे कालिका पातु धनं मे पातु कालिका ।
यत्र मे संशयाविष्टास्तान् नाशयतु कालिका ।। ४० ।।

इतीदं कवचं देवि ब्रह्मलोकेऽपि दुर्लभम् ।
तव प्रीत्या मयाख्यातं गोपनीयं स्वयोनिवत् ।। ४१ ।।

तव नाम्नि स्मृते देवि सर्वयज्ञफलं लभेत् ।
सर्वपापं क्षयं याति वाञ्छा सर्वत्र सिध्यति ।। ४२ ।।

नाम्नः शतगुणं स्तोत्रं ध्यानं तस्मात् शताधिकम् ।
तस्मात् शताधिको मन्त्रः कवचं तच्छताधिकम् ।। ४३ ।।

शुचिः समाहितो भूत्वा भक्तिश्रद्धासमन्वितः ।
संस्थाप्य वामभागे तु भक्तिं स्वामिपरायणाम् ।। ४४ ।।

रक्तवस्त्रपरीधानां शिवमन्त्रधरां शुभाम् ।
या भक्तिः सा महादेवी हररूपश्च साधकः ।। ४५ ।।

अन्योन्यचिन्तनाद् देवि देवत्वमुपजायते ।
भक्तियुक्तो यजेद्देवीं चक्रे वा मनसापि वा ।। ४६ ।।

भोगैश्च मधुपर्काद्यैस्ताम्बूलैश्च सुवासितैः ।
ततश्च कवचं दिव्यं पठेदेकमनाः प्रिये ।। ४७ ।।

तस्य सर्वार्थसिद्धिः स्यान्नात्र कार्या विचारणा ।
इदं रहस्यं परमं परं स्वस्त्ययनं महत् ॥ ४८ ॥

यः सकृत्तु पठेद्देवि श्रृणुयाद् वा समाहितः ।
स सर्वान् लभते कामान् परे देवीपुरं व्रजेत् ॥ ४९ ॥

सकृद् यस्तु पठेद्देवि कवचं देवदुर्लभम् ।
सर्वयज्ञफलं तस्य भवेदेव न संशयः ॥ ५० ॥

संग्रामे च जयेत् शत्रून् मातङ्गानिव केसरी ।
नास्त्राणि तस्य शस्त्राणि शरीरे प्रभवन्ति च ॥ ५१ ॥

तस्य व्याधिः कदाचिन्न दुःखं नास्ति कदाचन ।
गतिस्तस्यैव सर्वत्र वायुतुल्यः सदा भवेत् ॥ ५२ ॥

दीर्घायुः कामभोगीशो गुरुभक्तः सदा भवेत् ।
अहो कवचमाहात्म्यं पठमानस्य नित्यशः ॥ ५३ ॥

विनापि नययोगेन योगीशसमतां व्रजेत् ।
भूर्जत्वचि समालिख्य चक्रं तन्त्रविनिर्मितम् ॥ ५४ ॥

मध्यत्रिकोणे संलिख्य साध्यसाधकयोर्लिपिम् ।
उद्धरेन्मूलमन्त्रञ्च मातृकार्णेन वेष्टयेत् ॥ ५५ ॥

लघुमिश्रेण चन्द्रेण चन्दनाभ्यां सुरेश्वरि ।
एतन्मन्त्रं महेशानि सुरासुरसुदुर्लभम् ॥ ५६ ॥

गोरोचनाकुङ्कुमाभ्यां तद्बाह्ये कवचं लिखेत् ।
श्वेतसूत्रेण संवेष्ट्य लाक्षया परिमण्डयेत् ॥ ५७ ॥

पञ्चामृतैः पञ्चगव्यैः स्नापयित्वा शुभेऽह्नि ।
सम्पूज्य देवतारूपं गुटिकां सर्वकामदाम् ॥ ५८ ॥

प्राणप्रतिष्ठामन्त्रेण प्राणं तत्र नियोजयेत् ।
अन्तर्योनिं ततो ध्यात्वा तत्र संस्थापयेद् बुधः ॥ ५९ ॥

एषा तु गुटिका देवि कण्ठलग्नाखिलप्रदा ।
शीर्षे वश्यकरी देवी नाभौ स्तम्भनकारिणी ॥ ६० ॥

बद्ध्वा वामभुजे एषा वैरिपक्षक्षयङ्करी ।
जठरे रोगदमनी पुत्रदा हृदि संस्थिता ॥ ६१ ॥

विद्याकरी ललाटस्था शिखायां तु यशःप्रदा ।
सर्वकामप्रदा देवी सर्वरोगक्षयङ्करी ॥ ६२ ॥

दक्षिणे बाहुमूले वै यदि तिष्ठति सर्वदा ।
तदा सर्वार्थसिद्धिः स्याद् यद् यन्मनसि वर्तते ॥ ६३ ॥

त्र्यहात्तु कवचस्यास्य पठनात् कारणात् प्रिये ।
सर्वान् कामानवाप्नोति तव स्नेहात् प्रकाशितम् ॥ ६४ ॥

गुरोः पादप्रसादेन सद्विद्या यदि लभ्यते ।
तथैव कवचं देवि त्रिषु लोकेषु दुर्लभम् ॥ ६५ ॥

स च देवो हरः साक्षात् तत्पत्नी परमेश्वरी ।
यस्य भक्तिर्गुरौ नित्यं वर्तते देववत् प्रिये ॥ ६६ ॥

तदा यन्त्रस्य मन्त्रस्य सिद्धिर्भवति नान्यथा ।
कवचस्य तथा सिद्धिर्गुटिकायाश्च सुन्दरि ॥ ६७ ॥

अज्ञात्वा कवचं देवि न चेष्ट्वा गुरुपादुकाम् ।
तत्फलं न समाप्नोति परे च नरकं व्रजेत् ॥ ६८ ॥

सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ।
न शक्नोमि प्रभावं तु कवचस्यास्य वर्णितुम् ॥ ६९ ॥

यस्मै कस्मै न दातव्यं कवचञ्च सुदुर्लभम् ।
न देयं परशिष्येभ्यः कृपणेभ्यः सुरेश्वरि ॥ ७० ॥

शिष्याय भक्तियुक्ताय सेवकाय तथैव च ।
गुरुभक्तिविहीनाय परदाररताय च ॥ ७१ ॥

निन्दकायाकुलीनाय दाम्भिकाय च सुन्दरि ।
यो ददाति निषिद्धेभ्यः कवचं मन्मुखोद्गतम् ॥ ७२ ॥

तस्य नश्यन्ति देवेशि आयुः कीर्तिर्यशः श्रियः ।
न हिंसन्ति सदा देवि योगिन्यो मातृमण्डलात् ॥ ७३ ॥

परे नरकमाप्नोति जन्मकोटिशतानि च ।
देयं शिष्याय शान्ताय गुरुभक्तिपराय च ॥
सर्वलक्षणयुक्ताय तत्तन्मन्त्रयुताय च ॥ ७४ ॥

॥ इत्युत्तरतन्त्रे कालीप्रस्तारे कालीभैरवसंवादे
श्रीमद्दक्षिणाकालिकाकवचं सम्पूर्णम् ॥

# कालीकवचम्

## [ प्रकारान्तरकवचम् ]

विरूपाक्ष उवाच—

नमामि गुरुमक्षोभ्यं मन्त्रशक्तिसमन्वितम् ।
प्रसन्नं ज्ञानविज्ञानहेतुं बुद्धिप्रकाशकम् ॥ १ ॥
गजेन्द्रवदनं नौमि रक्तं विघ्नविदारकम् ।
पाशाङ्कुशवराभीतिलसद्भुजचतुष्टयम् ॥ २ ॥
भैरवः सर्वदा पातु ऋषिर्मे शिरसोपरि ।
मुखे छन्दः सदा पातु त्रिष्टुप् च विजयात्मकम् ॥ ३ ॥
गुणत्रयमयी शक्तिः परशक्तिस्तु ईडिता ।
ब्रह्मस्वरूपिणी पातु हृदये मम कालिका ॥ ४ ॥

बीजस्वरूपिणी पातु क्रीङ्कारी शक्तिरूपिणी ।
हुं शक्तिः सर्वदा पातु सर्वरक्षास्वरूपिणी ॥ ५ ॥

महाकालः सदा पातु महाभीमपराक्रमः ।
ददातु मम कामानि सर्वसिद्धीश्वरो यतः ॥ ६ ॥

आदिलृवर्णपर्यन्ताः हृदये मम मातृकाः ।
एघान्ता ङादिठान्ताश्च रक्षन्तु बाहुयुग्मके ॥ ७ ॥

नभोमध्यगता वर्णा मादिक्षान्तास्तथैव च ।
सबिन्दवः सदा पान्तु जङ्घयोरुभयोर्मम ॥ ८ ॥

भूतप्रेतपिशाचाद्या विघ्नदेहास्तथा पुनः ।
पृथग्भावाः समध्याश्च वर्णा रक्षन्तु मां सदा ॥ ९ ॥

समस्तरोमकूपेषु मर्मस्थानेषु सन्धिषु ।
नाडीधातुविकारेषु रक्षन्तु मम मातृकाः ॥ १० ॥

शक्तिराधाररूपा या सा पातु परमेश्वरी ।
अनन्तः सर्वदा पातु सर्वदेवमयः स्वयम् ॥ ११ ॥

फणागतावनिः पातु समुद्रः पातु मां सदा ।
रत्नद्वीपः सदा पातु रक्षन्तु कल्पपादपाः ॥ १२ ॥

श्मशानपीठकः पातु ······मानवेदिका ।
सदाशिवमहाप्रेतासनं मां परिरक्षतु ॥ १३ ॥

द्वारदेशे द्वारपाला योगिन्यः पान्तु मां सदा ।
सिद्धयोऽष्टौ सदा पान्तु पूर्वादिबहुदिग्गताः ॥ १४ ॥

कालीं कपालिनीं कुल्लां कुरुकुल्लां तथैव च ।
विरोधिनीं विप्रचित्तां नमामि सर्वसिद्धये ॥ १५ ॥

एतास्तु वशयोगिन्यो बहिः षट्कोणके स्थिताः ।
रक्षन्तु मां सदा देव्यो मातरो भक्तवत्सलाः ॥ १६ ॥

उग्रामुग्रप्रभां दीप्तां नमास्यात्मविभूतये ।
सर्वसिद्धिं प्रयच्छन्तु पान्तु मां पुत्रवत् सदा ॥ १७ ॥

नीलां घनां बलाकाञ्च प्रणमामि समुत्सुकः ।
सर्वविघ्नान् समुत्सार्य रक्षन्तु कलुषार्णवात् ॥ १८ ॥

मात्रामुद्रामिनाञ्च नमामि चरणाम्बुजम् ।
देवीप्रेमसखीनाञ्च शरणं यामि सिद्धये ॥ १९ ॥

एताः पञ्चदशे कोणे एकैका वरदा सदा ।
तर्जनीं वामहस्तेन खड्गं दक्षिणपाणिना ॥ २० ॥

मुण्डमालाधराः शीर्षे नीलाञ्जनचयोपमाः ।
शत्रुभ्यः सिद्धिदाश्चण्डाः पान्तु मां कालिकाप्रियाः ॥२१॥

बहिः पद्मदलान्ते तु ब्रह्माण्याद्यष्टशक्तयः ।
रक्षन्तु मे प्रयच्छन्तु सर्वसिद्धि दयान्विताः ॥ २२ ॥

ब्रह्माणी पातु मां पूर्वे सर्वा शिववरप्रदा ।
वह्नौ नारायणी पातु सर्वकामार्थसिद्धिदा ॥ २३ ॥

माहेशी दक्षिणे पातु सर्वमङ्गलकारिणी ।
चामुण्डा नैर्ऋते पातु सर्वशत्रुप्रमर्दिनी ॥ २४ ॥

कौमारी पश्चिमे पातु शक्तिहस्ता विषूदनी ।
अपराजिता च वायव्ये पातु मां जयदा शुभा ॥ २५ ॥

उत्तरे पातु वाराही वरदा घोररूपिणी ।
नारसिंही सदा पातु ऐशान्यां भयनाशिनी ॥ २६ ॥

एतास्तु परविद्यायाः शक्तयश्चाष्टदेवताः ।
ब्रह्मविष्णुशिवादीनां तेजोभिन्नकलेवराः ॥ २७ ॥

सूर्येन्दुवह्निपीठे तु वैदन्ये परमेश्वरीम् ।
नमामि दक्षिणामूर्ति कालिकां परभैरवीम् ॥ २८ ॥

भिन्नाञ्जनचयप्रख्यां प्रवीणशवसंस्थिताम् ।
गलच्छोणितधाराभिः स्मेराननसरोरुहाम् ॥ २९ ॥

पीनोन्नतकुचद्वन्द्वां पीनवक्षोनितम्बिनीम् ।
दक्षिणे मुक्तकेशालीं दिगम्बरविनोदिनीम् ॥ ३० ॥

महाकालसमाविष्टां स्मेरानन्दोपरिस्थिताम् ।
सुखसान्द्रस्मितामोदमोहिनीं मदविह्वलाम् ॥ ३१ ॥

आरक्तसुखसान्द्राभिर्विराजिताम्········ ।
शवद्वयकृतोत्तंसां शिरतिलकोज्ज्वन्दूलाम् ॥ ३२ ॥

पञ्चाशन्मूर्तिघटितमालां शोणितलोहिताम् ।
नानामणिविशोभाढ्यां नानालङ्कारशोभिताम् ॥ ३३ ॥

शवास्थिकृतकेयूरशङ्खकङ्कणमण्डिताम् ।
शववक्षः समारूढां लेलिहानां शवं क्वचित् ॥ ३४ ॥

शवमांसकृतग्रासां साट्टहासां मुहुर्मुहुः ।
खड्गमुण्डधरां वामे सव्येऽभयवरप्रदाम् ॥ ३५ ॥

दन्तुराञ्च महारौद्रीं चण्डनादातिभीषणाम् ।
शिवाभिर्घोररावाभिर्वेष्टितां भयनाशिनीम् ॥ ३६ ॥

मा भैर्मा भैः स्वभक्तेषु जल्पन्तीं घोरनिस्वनैः ।
यूयं किमिच्छथ ब्रूथ ददामीति प्रभाषिणीम् ॥ ३७ ॥

त्वं गतिः शरणं देवि त्वं माता परमेश्वरि ।
पाहि मां करुणासान्द्रे नमस्ते परमेश्वरि ॥ ३८ ॥

नमस्ते कालिके देवि नमस्ते भक्तवत्सले ।
मूर्खतां हर मे देवि प्रतिभाप्रतिदायिके ॥ ३९ ॥

गद्यपद्यमयीं वाणीं तर्कव्याकरणात्मिकाम् ।
अनधीतगतां विद्यां देहि दक्षिणकालिके ॥ ४० ॥

जयं देहि सभामध्ये धनं देहि धनागमे ।
देहि मे चिरजीवित्वं कालिके रक्ष दक्षिणे ॥ ४१ ॥

राज्यं देहि यशो देहि पुत्रान् दारान् धनं तथा ।
देहान्ते देहि मे मुक्तिं जगन्मातर्नमोऽस्तु ते ॥ ४२ ॥

मङ्गला भैरवी दुर्गा कालिका त्रिदशेश्वरी ।
उमा हैमवती कन्या कल्याणी भैरवेश्वरी ॥ ४३ ॥

काली ब्राह्मीं च माहेशी कौमारी मधुसूदनी ।
वाराही वासवी चण्डा त्वां जगुर्मुनयो मुदा ॥ ४४ ॥

उग्रतारेति तारेति शिवेत्येकजटेति च ।
लोकोत्तरेति बालेति गीयते कृतभिः सदा ॥ ४५ ॥

यथा काली तथा तारा तथा छिन्ना च कुल्लुका ।
एकमूर्तिश्चतुर्भिश्च देवि त्वं कालिका परा ॥ ४६ ॥

एका त्वं त्रिविधा देवि कोटिधाऽनन्तरूपिणी ।
अंशांशैर्नामभेदैश्च कालिकेति प्रगीयते ॥ ४७ ॥

शम्भुः पञ्चमुखेनैव गुणान् वक्तुं क्षमो न ते ।
चापल्यं यत्कृतं सर्वं क्षमस्व शुभदा भव ॥ ४८ ॥

प्राणान् रक्ष यशो रक्ष पुत्रदारधनं तथा ।
सर्वकाले सर्वदेशे पाहि दक्षिणकालिके ॥ ४९ ॥

यः सम्पूज्य पठेद् रक्षां दिवा वा निशि सन्ध्ययोः ।
अवाप्य महतीं प्रज्ञां सर्वकामांस्ततो लभेत् ॥ ५० ॥

यद् यत् प्रार्थयते चित्ते तत्तदाप्नोति का कथा ।
स्वयं लक्ष्मीर्वसेद् गेहे मुक्तिः करगता पुनः ॥ ५१ ॥

कवचेन विना देव यो जपेत् कालिकामनुम् ।
जपपूजादिकं सर्वं निष्फलं तस्य जायते ॥ ५२ ॥

॥ इति रुद्रयामले उत्तरतन्त्रे दक्षिणाकालिकाकवचं समाप्तम् ॥

# अथ कालिकास्तोत्रम्

महाकालभैरव उवाच—

स्तवराजं शृणु राम सर्वकालमनोहरम् ।
यस्य स्मरणमात्रेण कालिका सम्प्रसीदति ॥ १ ॥

मदुक्तं त्वं यदेवासि भृगुवंशसमुद्भव ।
गोपनीयं प्रयत्नेन पठनीयं परात्परम् ॥ २ ॥

कालीस्तोत्रं मम प्रेयः कस्मैचिन्न प्रकाशितम् ।
कथ्यते त्वदनुरोधात् सर्वपापप्रणाशनम् ॥ ३ ॥

शृणु राम शृणु राम शृणु राम सदैव हि ।
गोपनीयं गोपनीयं गोपनीयं न संशयः ॥ ४ ॥

गणरात्रे मुक्तकेशो नग्नः शक्तिसुसंगतः ।
रक्तचन्दनसिन्दूरैस्तथा पञ्चोपचारकैः ॥ ५ ॥

मत्स्यमांससुराद्यैश्च ताम्बूलैश्च विशेषतः ।
पूजयित्वा महाकालीं महाकालरतातुराम् ॥ ६ ॥

तीर्थपानं विधायादौ ताम्बूलं भक्षयेत्ततः ।
भगलिङ्गामृतं मध्ये निवेदयेत् सुसाधकः ॥ ७ ॥

जपित्वा च महामन्त्रं कालीरूपं मनोहरम् ।
मनसा चिन्तयेत् कालीं पठन् स्तोत्रं तु साधकः ॥ ८ ॥

रक्षोयक्षपिशाचेभ्यो नित्यं रक्षाकरं परम् ।
प्रसन्ना कालिका तस्य पुत्रत्वेनानुकम्पते ॥ ९ ॥

दक्षिणे कालिके मातर्मुण्डमालाविभूषिते ।
भक्तत्राणव्यग्रचित्ते यमजाड्यं विनाशय ॥ १० ॥

ज्वलच्चिताग्निमध्यस्थे परिवारसमन्विते ।
त्वत्पदाम्भोजमापन्नं रक्ष मां पुत्रवत् सदा ॥ ११ ॥

महामेघच्छविन्यासे मुक्तकेशि जतुभुजे ।
पाण्डित्यं कविताञ्चैव मह्यं देहि महेश्वरि ॥ १२ ॥

वामोर्ध्वे च महाखड्गं विधारयसि शङ्करि ।
अधोलसच्छिन्नमुण्डे मम विघ्नं विनाशय ॥ १३ ॥

अभयं दक्षिणे चोर्ध्वे तथाधः पाणिना वरम् ।
कण्ठसंयुक्तमुण्डालि महाकालि नमोऽस्तु ते ॥ १४ ॥

सततं तव स्वरूपं ये स्मरन्ति साधकोत्तमाः ।
तेषां समस्तशास्त्रेषु गतिरव्याहता सदा ॥ १५ ॥

चिन्तयामि च तन्नाम रक्ष मां सर्वतः सदा ।
दिगम्बरीं करालास्यां घोरदंष्ट्रां भयानकाम् ॥ १६ ॥

कर्णमूले शवयुग्मां स्थूलतुङ्गपयोधराम् ।
महारौद्रीं महाघोरां श्मशानालयवासिनीम् ॥ १७ ॥

शवपाणिसमूहैश्च कृतकाञ्चीं हसन्मुखीम् ।
ओष्ठप्रान्तगलद्रक्तधाराविस्फुरिताननाम् ॥ १८ ॥

मुण्डालीसंस्रवद्रक्तैः सर्वाङ्गे चारुचर्चिताम् ।
शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम् ॥ १९ ॥

पूजाकाले पठेद् यस्तु सद्भावपुलको बुधः ।
स भवेत् कालिकापुत्र इति ख्यातिमुपागतः ॥ २० ॥

रजस्वलाभगं पश्यन् जप्त्वा कालींमहामनुम् ।
स्तवेनानेन संस्तुत्य साधकः किं न साधयेत् ॥ २१ ॥

अष्टोत्तरशतं जप्त्वा योनिमामन्त्र्य मन्त्रवित् ।
संगम्य पठनादस्य सर्वविद्येश्वरो भवेत् ॥ २२ ॥

मातेव दक्षिणा तस्य सर्वत्र हितकारिणी ।
तस्य देहे सदा काली वसेद् राम न संशयः ॥ २३ ॥

पूजाजपविहीनाय स्त्रीसुरनिन्दकाय च ।
सन्मार्गस्य च रुद्धायागुरुभक्ताय सर्वदा ॥ २४ ॥

शृणु वत्स प्रयत्नेन स्तवमेनं न दर्शयेत् ।
प्रमादाद्दर्शनाद्वापि तस्य सिद्धिर्भवेन्न हि ॥ २५ ॥

॥ इति कालिकापरमरहस्ये कालीहृदये महाकालभैरवपरशुरामसंवादे श्रीदक्षिणाकालिकास्तवः समाप्तः ॥

## दक्षिणकाल्याः क्रमस्तवकथनं फलञ्च

क्रमस्तवं पठेन्नित्यं विधिनानेन देशिकः ।
ओं नमो गुरुभ्यो देवेभ्यस्तथा परतराय च ॥ १ ॥

परापरेभ्यस्तद्वच्च तथा परात्परया च ।
क्षेत्रपालं नमस्कृत्य द्वारदेवान् विधानतः ॥ २ ॥

लक्ष्मीं सरस्वतीं दुर्गां गङ्गां गोदावरीं तथा ।
भोगवतीं नमस्कृत्य वास्तुदेवान् नमेत्तथा ॥ ३ ॥

विघ्नराजं च वास्त्वीशं क्षेत्रेशं प्रणमाम्यहम् ।
नैर्ऋतञ्चैव ब्रह्माणं ब्रह्मकर्मात्मकं प्रिये ॥ ४ ॥

विघ्नान् प्रणम्य विधिना तान् देवांश्च नमेत्ततः ।
आधारशक्तिं तां नत्वा पङ्कजद्वयधारिणीम् ॥ ५ ॥

नीलवर्णां महामायां द्वादशाक्षररूपिणीम् ।
ततो धर्मगणैः सेव्यां तां देवीं शक्तिरूपिणीम् ॥ ६ ॥

नीलवर्णं महाकायं कूर्मं हिमाद्रिसंस्थितम् ।
सर्वशक्तितनुं विष्णुं कूर्माकारं नमाम्यहम् ॥ ७ ॥

तस्य पृष्ठे स्थितं देवमनन्तं तं नमाम्यहम् ।
सहस्रफणसंयुक्तं सर्पाकारं हरिं नमः ॥ ८ ॥

हिमाद्रिसदृशं विष्णुमेकदन्तधरं विभुम् ।
फणासहस्रैर्मणिभिर्भूषितं तं नमाम्यहम् ॥ ९ ॥

तस्य कक्षगतं ध्यायेल्लाङ्गूलं चाशुभापहम् ।
मुद्गरं वामभागे च तत्रैकादशसंयुतम् ॥ १० ॥

तस्य मूर्ध्नि स्थितं ध्यायेद् वराहं विष्णुमव्ययम् ।
एकदन्तं महाकायं कालमेघसमप्रभम् ॥ ११ ॥

तस्य दन्ते सदा ध्यायेत् पृथिवीं पद्मपायिनीम् ।
नीलवर्णां महादेवीं शालिशुकविभूषिताम् ॥ १२ ॥

अणिमादिगुणैर्युक्तां सर्वतत्त्वविभूषिताम् ।
तस्या मूर्ध्नि सदा ध्यायेत् समुद्रान् रत्नसंयुतान् ॥१३॥

नानापर्वतसंयुक्तां पृथिवीं चिन्तयेद् धिया ।
पर्वतांश्चिन्तयेत्तस्यां सर्वत्र कुलभूषितान् ॥ १४ ॥

दिग्गजेभ्यो नमस्कृत्य योगेभ्यः प्रणमेत् सदा ।
मुनीन्द्रेभ्य ऋषिभ्यश्च योगशास्त्रधराय च ॥ १५ ॥

शाक्तेभ्यो वैष्णवेभ्यश्च शैवेभ्यः प्रणमेत् सदा ।
यन्त्रेभ्यो मन्त्रवेदेभ्यः सर्वशास्त्रपराय च ॥ १६ ॥

चन्द्राय चन्द्रवंशेभ्यः सूर्यवंशेभ्य एव च ।
मनुवंश-मनुष्येभ्यः पञ्चभूतेभ्य एव च ॥ १७ ॥

महाभूतेभ्यो भूतेभ्यः कलाभ्यः प्रणमेत् सदा ।
रसेभ्योऽपि नमस्कृत्य गन्धेभ्यः प्रणमेत् सदा ॥ १८ ॥

पुष्पेभ्यः पुष्पहासेभ्यो गन्धर्वेभ्यो नमो नमः ।
यक्षेभ्यो भूतवर्गेभ्यः प्रेतेभ्यः सर्वकर्मसु ॥ १९ ॥

शब्दब्रह्मस्वरूपेभ्यः प्रणमामि सदा प्रिये ।
रुद्रेभ्यो रुद्रवंशेभ्यो भैरवेभ्यो नमो नमः ॥ २० ॥

लिङ्गेभ्यो लिङ्गदेवेभ्यो वेदशास्त्रेभ्य एव च ।
वेदेभ्योऽपि च शास्त्रेभ्यस्तेभ्यो नित्यं नमो नमः॥ २१ ॥

स्थविरेभ्यो नमस्कृत्य ऋषिभ्यः प्रणमेत् सदा ।
प्रणमामि सदाऽर्थेभ्यो वेशेभ्योऽपि नमो नमः ॥ २२ ॥

मन्त्रेभ्योऽपि नमस्कृत्य मन्त्रार्थेभ्यो नमो नमः ।
पूजोपकरणेभ्यश्च ब्राह्मणेभ्यो नमो नमः ॥ २३ ॥

योगिनीभ्यो नमस्कृत्य शक्तिभ्योऽपि नमो नमः ।
रत्नेभ्योऽपि नमस्कृत्य नदीभ्यः प्रणमेत् सदा ॥ २४ ॥

पीठेभ्योऽपि नमस्कृत्य मातृभ्यः प्रणमेत् सदा ।
अन्नेभ्योऽपि नमस्कृत्य इन्द्रेभ्योऽपि नमो नमः ॥ २५ ॥

क्षेत्रेभ्योऽपि नमस्कृत्य क्षेत्रपालेभ्य एव च ।
कुलाचलेभ्यो नत्वा तु प्रादुर्भावेभ्य एव च ॥ २६ ॥

उक्तानुक्तञ्च यत् किञ्चित् तेभ्यो नित्यं नमो नमः ।
ओं नमामि कालिकां देवीं कलिकल्मषनाशिनीम् ॥२७॥

नमामि शम्भुपत्नीं च नमामि भवसुन्दरीम् ।
आद्यां देवीं नमस्कृत्य नमस्त्रैलोक्यमोहिनीम् ॥ २८ ॥

नमामि सत्यसङ्कल्पां सर्वपर्वतवासिनीम् ।
पार्वतीं च नमस्कृत्य नमो नित्यं नगात्मजे ॥ २९ ॥

मातस्त्वदीयचरणं शरणं सुराणां
ध्यानास्पदं दिशति वाञ्छितवाञ्छनीयम् ।
येषां हृदि स्फुरति तच्चरणारविन्दं
धन्यास्त एव नियतं सुरलोकपूज्याः ॥ ३० ॥

गन्धैः शुभैः कुङ्कुमपङ्कलेपै-
र्मातस्त्वदीयं चरणं हि भक्ताः ।
स्मरन्ति शृण्वन्ति लुठन्ति धीरा-
स्तेषां जरा नैव भवेद् भवानि ॥ ३१ ॥

तवाङ्घ्रिपद्मं शरणं सुराणां
परापरा त्वं परमा प्रकृष्टिः ।
दिने दिने देवि भवेत् करस्थः
किमन्यमुच्चैः कथयन्ति सन्तः ॥ ३२ ॥

कवीन्द्राणां दर्पं करकमलशोभापरिचितं
विधुन्वञ्जङ्घान्ये सकलगणमेतद् गिरिसुते ।
अतस्त्वत्पादाब्जं जननि सततं चेतसि मम
हितं नारीभूतं प्रणिहितपदं शाङ्करमपि ॥ ३३ ॥

ये ते दरिद्राः सततं हि मातस्त्वदीयपादं मनसा नमन्ति ।
देवासुराः सिद्धवराश्च सर्वे तव प्रसादात् सततं लुठन्ति ॥ ३४ ॥

हरिस्त्वत्पादाब्जं निखिलजगतां भूतिरभवत् ।
शिवो ध्यात्वा ध्यात्वा किमपि परमं तत्परतरम् ॥ ३५ ॥

प्रजानां नाथोऽयं तदनु जगतां सृष्टिविहितम् ।
किमन्यं ते मातस्तव चरणयुग्मस्य फलता ॥ ३६ ॥

इन्द्रः सुराणां शरणं शरण्यो प्रजापतिः काश्यप एव नान्यः ।
वरांपतिर्विष्णुभवः परेशि त्वदीयपादाब्जफलं समस्तम् ॥ ३७ ॥

त्वदीयनाभीनववल्लभेवा नवाङ्कुरैर्लभवरैः प्रफुल्लम् ।
सदा वरेण्यो शरणं विधेहि किं वा परं चित्तवर्यैर्विभाव्यम् ॥३८॥

त्वदीयपादार्चितवस्तुसम्भवः सुरासुरैः पूज्यमवाप शम्भुः ।
त्वदीयपादार्चनतत्परो हरिः सुदर्शनाधीश्वरतामुपालभेत् ॥३९॥

धरित्री गन्धरूपेण रसेन च जलं धृतम् ।
तेजो वह्निस्वरूपेण प्रणवे ब्रह्मरूपधृक् ॥ ४० ॥

मुखं चन्द्राकारं त्रिभुवनपदे यामसहितं
त्रिनेत्रं मे मातः परिहरति यः स्यात् स तु पशुः ।
न सिद्धिस्तस्य स्यात् सुरतसततं विश्वमखिलं
कटाक्षैस्ते मातः सफलपदपद्मं स लभते ॥ ४१ ॥

क्रतुस्त्वं हविष्ट्वं स्वधा त्वं मुरारेः
पुरा त्वं परा त्वं सदाशीर्मुरारेः ।
हरस्त्वं हरिस्त्वं शिवस्त्वं शिवानि
गतिस्त्वं गतिस्त्वं गतिस्त्वं भवानि ॥ ४२ ॥

न वाऽहं न वा त्वं न वा वा क्रियाया
वरस्त्वं वरुस्त्वं शरण्यं धरायाः ।
नदस्त्वं नदी त्वं गतिस्त्वं निधीनां
सुतस्त्वं सुता त्वं पिता त्वं गृहीणाम् ॥ ४३ ॥

त्वदीयमुण्डाख्ये भवानि मालां विधाय चित्ते भवपद्मजादयः ।
सुराधिपत्वं लभते मुनीन्द्रः शरण्यमेतत् किमपीह चान्यत् ॥४४॥

नरस्य मुण्डञ्च तथा हि खड्गं भुजद्वये ये मनसा जपन्ति ।
सव्योत्तरे देवि वराभयञ्च भवन्ति ते सिद्धजना मुनीन्द्राः ॥४५॥

शिवोपरि त्वां हृदये निधाय जपन्ति विद्यां हृदये कदाचित् ।
सदा भवेत् काव्यरसस्य वेत्ता अन्ते पदद्वन्द्वमुपाश्रयेत ॥ ४६ ॥

दिगम्बरीं त्वां मनसा विचिन्त्य
जपेत् पराख्यां जगतां जनीति ।
जपेत् पराख्यां जगतां मतिश्च
किं वा पराख्यां शरणं भजामः ॥ ४७ ॥

शिवाविरावैः परिवेष्टितां त्वां निधाय चित्ते सततं जपन्ति ।
भवेय देवेशि परापरादि निरीशतां देवि परा वदन्ति ॥ ४८ ॥

त्वदीयशृङ्गाररसं निधाय जपन्ति मन्त्रं यदि वेदमुख्याः ।
भवन्ति ते देवि जनापवादं कविः कवीनामपि चाग्रजन्मा ॥४९॥

विकीर्णकेशां मनसा निधाय
जपन्ति विद्यां चकितं कदाचित् ।
सुराधिपत्यं लभते नरः स
किमस्ति भूम्यां शृणु कालकालि ॥ ५० ॥

त्वदीयबीजत्रय[1] मातरेतज्जपन्ति सिद्धास्तु विमुक्तिहेतोः ।
तदेव मातस्तव पादपद्मगा भवन्ति सिद्धिश्च दिनत्रयेऽपि ॥५१॥

त्वदीयकूर्चद्वयजापकत्वात् सुरासुरेभ्योऽपि भवेच्च वर्णः ।
धनित्व-पाण्डित्य[2] लभन्ति सर्वे किं वा परा देवि परापराख्या ॥

त्वदीयलज्जाद्वयजापकत्वाद् भवेन्महेशानि चतुर्थसिद्धिः ।
त्वदीयसंसिद्धिवरप्रसादात्तवाधिपत्यं लभते नरेशः ॥ ५२ ॥

ततः स्वनाम्नः शृणु मातरेतत् फलं चतुर्वर्गं वदन्ति सन्तः ।
बीजत्रयं वै पुनरप्युपास्य सुराधिपत्यं लभते मुनीन्द्रः ॥ ५३ ॥

पुनस्तथा कूर्चयुगं जपन्ति
नमन्ति सिद्धा नरसिंहरूपाः ।
ततोऽपि लज्जाद्वयजापकत्वा-
ल्लभन्ति सिद्धिं मनसो जनास्ते ॥
अन्ते पदं क्षिप्य विभा विभाव-
सोस्त्वन्मन्त्रमुद्धारमिमं वदन्ति ॥ ५४ ॥

त्रिपक्षारे चक्रे जननि सततं सिद्धिसहितां
विचिन्वन् संचिन्वन् परममृतं दक्षिणपदम् ।
सदा कालीं ध्यात्वा विधिविहितपूजापरिकरां
विशेषाख्यानं ते न खलु भवभङ्गाभयपदः ॥ ५५ ॥

---

१. आर्षो विभक्तिलोपः ।

२. आर्षो विभक्तिलोपः ।

त्वं श्रीस्त्वमीश्वरी काली त्वं ह्रीस्त्वञ्च करालिका ।
लज्जा लक्ष्मीः सती गौरी नित्या चिन्ता चितिः क्रिया ॥
परा आद्या पराख्या च परमापरमा वसुः ॥ ५६ ॥

अकुल्याद्यैश्चित्ते प्रचयपदपत्यैः पदयुतैः
सदा जप्त्वा स्तुत्वा जपति हृदि मन्त्रं मनुविदा ।
न तेषां संसारे विभवपरिभवप्रमथने
क्षणं चित्तं देवि प्रभवति विरुद्धे परिकरन् ॥ ५७ ॥

त्रयस्त्रिंशैः श्लोकैर्यदि जपति मन्त्रं स्तवति च
नमेच्चैतानेतान् परममृतकल्पं सुरवरम् ।
भवेत् सिद्धिः शुद्धौ जगति शिरसा त्वत्पदयुगं
प्रणम्य प्राकाम्यं परसुरजनैः पूज्यविततिम् ॥ ५८ ॥

[यासां यासां क्रमस्तोत्रं तासां दक्षिणाप्रकृतिकत्वेनापवादविषयं परित्यज्योत्सर्गस्य प्रवृत्तिमत्त्वाद् दक्षिणकालिकाक्रमस्तोत्रपाठेनैव तत्फलनिर्वाहः ।]

॥ इति विश्वसारतन्त्रे दक्षिणकालिकाक्रमस्तोत्रं नाम चतुर्थः पटलः ॥

# शान्तिस्तोत्रम्

ओं नश्यन्तु प्रेतकूष्माण्डा नश्यन्तु दूषका नराः ।
साधकानां शिवाः सन्तु आम्नायपरिपालकाः ॥ १ ॥

जयन्ति मातरः सर्वाः जयन्ति योगिनीगणाः ।
जयन्ति सिद्धडाकिन्यो जयन्ति गुरुपङ्क्तयः ॥ २ ॥

यजन्ति साधवः सर्वे विशुद्धाः कौलिकाश्च ये ।
समयाचारसम्पन्ना जयन्ति पूजका नराः ॥ ३ ॥

यजन्तु अणिमाः सिद्धाः नन्दन्तु कुलदेवताः ।
ऐन्द्राद्या देवताः पान्तु तृप्यन्तु वास्तुदेवताः ॥ ४ ॥

चन्द्रसूर्यादयो देवास्तुष्यन्तु मम भक्तितः ।
नक्षत्राणि ग्रहा योगाः करणा राशयश्च ये ॥ ५ ॥

सर्वे ते सुखिनो यान्तु सर्पा नद्यश्च पक्षिणः ।
पशवश्चोरगाश्चैव पर्वताः कन्दरा गुहाः ॥ ६ ॥

ऋषयो ब्राह्मणाः सर्वे शान्तिं कुर्वन्तु मे सदा ।
शुभनिवेदिताः सन्तु मित्रास्तिष्ठन्तु पूजकाः ॥ ७ ॥

वेदाचारविमर्दनष्टहृदया भ्रष्टाश्च ये साधकाः ।
ये ये पापधिया विदूषणकरा मन्निन्दकाः पूजकाः ॥ ८ ॥

दृष्ट्वा चक्रमपूर्वमन्दहृदया ये लौकिका दूषकाः ।
ते ते यान्तु विनाशमत्र समये श्रीभैरवस्याज्ञया ॥ ९ ॥

साधकानां च ये हिंस्राः सदेवाम्नायदूषकाः ।
डाकिनीनां मुखे यान्तु मम निन्दाकराश्च ये ॥
द्वेष्टारः साधकानां च ते नश्यन्तु शिवाज्ञया ॥ १० ॥

॥ इति यामलोक्तं शान्तिस्तोत्रं समाप्तम् ॥

## मार्कण्डेयपुराणे योगनिद्रायाः स्तुतिः

[ दुर्गासप्तशत्यां प्रथमाध्याये ]

ब्रह्मोवाच—

त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ।
सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता ॥ १ ॥

अर्धमात्रास्थिता नित्या यानुच्चार्या विशेषतः ।
त्वमेव सन्ध्या सावित्री त्वं देवि जननी परा ॥ २ ॥

त्वयैतद् धार्यते विश्वं त्वयैतत् सृज्यते जगत् ।
त्वयैतत् पाल्यते देवि त्वमत्स्यन्ते च सर्वदा ॥ ३ ॥

विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ।
तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ॥ ४ ॥

महाविद्या महामाया महामेधा महास्मृतिः ।
महामोहा च भवती महादेवी महेश्वरी ॥ ५ ॥

प्रकृतिस्त्वञ्च सर्वस्य जगत्त्रयविभावनी ।
कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥ ६ ॥

त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ।
लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ॥ ७ ॥

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ॥ ८ ॥

सौम्या सौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ।
परापराणां परमा त्वमेव परमेश्वरी ॥ ९ ॥

यच्च किञ्चित् क्वचिद्वस्तु सदसद्वाखिलात्मके ।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ॥ १० ॥

यया त्वया जगत्स्रष्टा जगत् पात्त्यत्ति यो जगत् ।
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ ११ ॥

विष्णुः शरीरग्रहणमहमीशान एव च ।
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत् ॥ १२ ॥

सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ।
मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ १३ ॥

प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ।
बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ॥ १४ ॥

# देवीभागवते ब्रह्मकृता योगनिद्रास्तुतिः*
## ( तामस्याः स्तुतिः )

ब्रह्मोवाच—

देवि त्वमस्य जगतः किल कारणं हि
ज्ञातं मया सकलवेदवचोभिरम्ब ।
यद् विष्णुरप्यखिललोकविवेककर्ता
निद्रावशञ्च गमितः पुरुषोत्तमोऽद्य ॥ २७ ॥

को वेद ते जननि मोहविलासलीलां
मूढोऽस्म्यहं हरिरयं विवशश्च शेते ।
ईदृक्तया सकलभूतमनोनिवासे
विद्वत्तमो विबुधकोटिषु निर्गुणायाः ॥ २८ ॥

सांख्या वदन्ति पुरुषं प्रकृतिञ्च यां तां
चैतन्यभावरहितां जगतश्च कर्त्रीम् ।
किं तादृशाऽसि कथमत्र जगन्निवास-
श्चैतन्यताविरहितो विहितस्त्वयाऽद्य ॥ २९ ॥

नाट्यं तनोषि सगुणा विविधप्रकारं
नो वेत्ति कोऽपि तव कृत्यविधानयोगम् ।
ध्यायन्ति यां मुनिगणा नियतं त्रिकालं
सन्ध्येति नाम परिकल्प्य गुणान् भवानि ॥ ३० ॥

* देवीभागवते—१।७।२७-४७।

बुद्धिर्हि बोधकरणा जगतां सदा त्वं
श्रीश्चासि देवि सततं सुखदा सुराणाम् ।
कीर्तिस्तथा मतिधृती किल कान्तिरेव
श्रद्धारतिश्च सकलेषु जनेषु मातः ॥ ३१ ॥

नातः परं किल वितर्कशतैः प्रमाणं
प्राप्तं मया यदिह दुःखगतिं गतेन ।
त्वं चात्र सर्वजगतां जननीति सत्यं
निद्रालुतां वितरता हरिणाऽत्र दृष्टम् ॥ ३२ ॥

त्वं देवि वेदविदुषामपि दुर्विभाव्या
वेदोऽपि नूनमखिलार्थतया न वेद ।
यस्मात्तदुद्भवमसौ श्रुतिराप्नुवाना
प्रत्यक्षमेव सकलं तव कार्यमेतत् ॥ ३३ ॥

कस्ते चरित्रमखिलं भुवि वेद धीमा-
न्नाहं हरिर्न च भवो न सुरास्तथान्ये ।
ज्ञातुं क्षमाश्च मुनयो न ममात्मजाश्च
दुर्वाच्य एव महिमा तव सर्वलोके ॥ ३४ ॥

यज्ञेषु देवि यदि नाम न ते वदन्ति
स्वाहेति वेदविदुषो हवने कृतेऽपि ।
न प्राप्नुवन्ति सततं मखभागधेयं
देवास्त्वमेव विबुधेष्वपि वृत्तिदासि ॥ ३५ ॥

त्राता वयं भगवति प्रथमं त्वया वै
देवारिसम्भवभयादधुना तथैव ।
भीतोऽस्मि देवि वरदे शरणं गतोऽस्मि
घोरं निरीक्ष्य मधुना सह कैटभञ्च ॥ ३६ ॥

नो वेत्ति विष्णुरधुना मम दुःखमेत-
ज्जाने त्वयात्मविवशीकृतदेहयष्टिः ।
मुञ्चादिदेवमथवा जहि दानवेन्द्रौ
यद् रोचते तव कुरुष्व महानुभावे ॥ ३७ ॥

जानन्ति ये न तव देवि परं प्रभावं
ध्यायन्ति ते हरिहरावपि मन्दचित्ताः ।
ज्ञातं मयाद्य जननि प्रकटं प्रमाणं
यद्विष्णुरप्यतितरां विवशोऽथ शेते ॥ ३८ ॥

सिन्धूद्भवापि न हरिं प्रतिबोधितुं वै
शक्ता पतिं तव वशानुगमाद्यशक्त्या ।
मन्ये त्वया भगवति प्रसभं रमापि
प्रस्वापिता न बुबुधे विवशीकृतेव ॥ ३९ ॥

धन्यास्त एव भुवि भक्तिपरास्तवाङ्घ्रौ
त्यक्त्वान्यदेवभजनं त्वयि लीनभावाः ।
कुर्वन्ति देवि भजनं सकलं निकामं
ज्ञात्वा समस्तजननीं किल कामधेनुम् ॥ ४० ॥

धीकान्तिकीर्तिशुभवृत्तिगुणादयस्ते
विष्णोर्गुणास्तु परिहृत्य गताः क्व चाऽद्य ।
बन्दीकृतो हरिरसौ ननु निद्रयाऽत्र
शक्त्या तवैव भगवत्यतिमानवत्या ॥ ४१ ॥

त्वं शक्तिरेव जगतामखिलप्रभावा
त्वं निर्मितं च सकलं खलु भावमात्रम् ।
त्वं क्रीडसे निजविनिर्मितमोहजाले
नाटये यथा विहरते स्वकृते नटो वै ॥ ४२ ॥

विष्णुस्त्वया प्रकटितः प्रथमं युगादौ
दत्ता च शक्तिरमला खलु पालनाय ।
त्रातं च सर्वमखिलं विवशीकृतोऽद्य
यद् रोचते तव तथाम्ब करोषि नूनम् ॥ ४३ ॥

सृष्ट्वाऽत्र मां भगवति प्रविनाशितुं चे-
न्नेच्छास्ति ते कुरु दयां परिहृत्य मौनम् ।
कस्मादिमौ प्रकटितौ किल कालरूपौ
यद्वा भवानि हसितुं नु किमिच्छसे माम् ॥ ४४ ॥

ज्ञातं मया तव विचेष्टितमद्भुतं वै
कृत्वाखिलं जगदिदं रमसे स्वतन्त्रा ।
लीनं करोषि सकलं किल मां तथैव
हन्तुं त्वमिच्छसि भवानि किमत्र चित्रम् ॥ ४५ ॥

कामं कुरुष्व वधमद्य ममैव मात-<br>
र्दुःखं न मे मरणजं जगदम्बिकेऽत्र ।<br>
कर्ता त्वयैव विहितः प्रथमं स चाऽयं<br>
दैत्याहतोऽथ मृत इत्ययशो गरिष्ठम् ॥ ४६ ॥

उत्तिष्ठ देवि कुरु रूपमिहाद्भुतं त्वं<br>
मां वा त्विमौ जहि यथेच्छसि बाललीले ।<br>
नो चेत् प्रबोधय हरिं निहनेदिमौ य-<br>
स्त्वत्साध्यमेतदखिलं किल कार्यजातम् ॥ ४७ ॥

●

## देवीभागवतोक्ता ब्रह्मणा कृता देव्यास्तामस्याः स्तुतिः*

ब्रह्मोवाच—

तां देवीं शरणं यामि निद्रां सर्वप्रसूतिकाम् ।
देवदेवि जगद्धात्रि भक्ताभीष्टफलप्रदे ॥ १० ॥

जगन्माये महामाये समुद्रशयने शिवे ।
त्वदाज्ञावशगाः सर्वे स्वस्वकार्यविधायिनः ॥ ११ ॥

कालरात्रिर्महारात्रिर्मोहरात्रिर्मदोत्कटा ।
व्यापिनी वशगा मान्या महानन्दैकशेवधिः ॥ १२ ॥

महनीया महाराध्या माया मधुमती मही ।
परापराणां सर्वेषां परमा त्वं प्रकीर्तिता ॥ १३ ॥

लज्जा पुष्टिः क्षमा कीर्तिः कान्तिः कारुण्यविग्रहा ।
कमनीया जगद्वन्द्या जाग्रदादिस्वरूपिणी ॥ १४ ॥

परमा परमेशानी परानन्दपरायणा ।
एकाप्येकस्वरूपा च सा द्वितीया द्वयात्मिका ॥ १५ ॥

त्रयी त्रिवर्गनिलया तुर्या तुर्यपदात्मिका ।
पञ्चमी पञ्चभूतेशी षष्ठी षष्ठेश्वरीति च ॥ १६ ॥

सप्तमी सप्तवारेशी सप्तसप्तवरप्रदा ।
अष्टमी वसुनाथा च नवग्रहमयीश्वरी ॥ १७ ॥

---

* देवीभागवते—१ ।११।१०–२५ ।

नवरागकला रम्या नवसंख्या नवेश्वरो ।
दशमी दशदिक्पूज्या दशाशाव्यापिनी रमा ॥ १८ ॥

एकादशात्मिका चैकादशरुद्रनिषेविता ।
एकादशीतिथिप्रीता एकादशगणाधिपा ॥ १९ ॥

द्वादशी द्वादशभुजा द्वादशादित्यजन्मभूः ।
त्रयोदशात्मिका देवी त्रयोदशगणप्रिया ॥ २० ॥

त्रयोदशाभिधा भिन्ना विश्वेदेवाधिदेवता ।
चतुर्दशेन्द्रवरदा चतुर्दशमनुप्रसूः ॥ २१ ॥

पञ्चाधिकदशीवेद्या पञ्चाधिकदशी तिथिः ।
षोडशी षोडशभुजा षोडशेन्दुकलामयी ॥ २२ ॥

षोडशात्मकचन्द्रांशुव्याप्तदिव्यकलेवरा ।
एवंरूपासि देवेशि निर्गुणे तामसोदये ॥ २३ ॥

त्वया गृहीतो भगवान् देवदेवो रमापतिः ।
एतौ दुरासदौ दैत्यौ विक्रान्तौ मधुकैटभौ ॥ २४ ॥

एतयोश्च वधार्थाय देवेशं प्रतिबोधय ।

मुनिरुवाच—

एवं स्तुता भगवती तामसी भगवत्प्रिया ॥ २५ ॥

## महाकालीस्तुतिः

[कालिकापुराणे पञ्चमाध्याये १५–५० तथा ५४–५९ श्लोकेषु भगवत्या महामायायाः स्तुतिः शिवस्य मोहनाय ब्रह्मणा विहिता। एषा च स्तुतिः महाकाल्या एव। यद्यप्यत्र महाकाली-शब्देन निर्देशो नास्ति; अपि तु विष्णुमाया-महामायाशब्द-योरेव निर्देशस्तथापि योगमायादिशब्दनिर्दिष्टेऽपि स्तवान्ते– 'इत्याकर्ण्य वचस्तस्य काली लोकविमोहिनी' इति वचनेन निश्चीयते यत् काल्या एव स्तवः।]

ब्रह्मोवाच—

विद्याविद्यात्मिकां शुद्धां निरालम्बां निराकुलाम्।
स्तौमि देवीं जगद्धात्रीं स्थूलार्णोमयःस्वरूपिणीम् ॥ १५ ॥

यस्यामुदेति च जगत् प्रधानाख्यं जगत्परम्।
यस्यास्तदंशभूतां त्वां स्तौमि निद्रां सनातनीम् ॥ १६ ॥

त्वं चितिः परमानन्दा परमात्मस्वरूपिणी।
शक्तिस्त्वं सर्वभूतानां त्वं सर्वेषां च पावनी ॥ १७ ॥

त्वं सावित्री जगद्धात्री त्वं सन्ध्या त्वं रतिर्धृतिः।
त्वं हि ज्योतिःस्वरूपेण संसारस्य प्रकाशिनी ॥ १८ ॥

तथा तमःस्वरूपेण छादयन्ती सदा जगत्।
त्वमेव सृष्टिरूपेण संसारपरिपूरणी ॥ १९ ॥

स्थितिरूपेण च हरेर्जगतां च हितैषिणी।
तथैवान्तस्वरूपेण जगतामन्तकारिणी ॥ २० ॥

त्वं मेधा त्वं महामाया त्वं स्वधा पितृमोदिनी ।
त्वं स्वाहा त्वं नमस्कार-वषट्कारौ तथा स्मृतिः ॥ २१ ॥

त्वं पुष्टिस्त्वं धृतिर्मैत्री करुणा मुदिता तथा ।
त्वमेव लज्जा त्वं शान्तिस्त्वं कान्तिर्जगदीश्वरी ॥ २२ ॥

महामाया त्वं च स्वाहा स्वधा च पितृदेवता ।
या सृष्टिशक्तिरस्माकं स्थितिशक्तिश्च या हरेः ॥ २३ ॥

अन्तशक्तिस्तथैशानी सा त्वं शक्तिः सनातनी ।
एका त्वं द्विविधा भूत्वा मोक्षसंसारकारिणी ॥ २४ ॥

विद्याविद्यास्वरूपेण स्वप्रकाशाप्रकाशतः ।
त्वं लक्ष्मीः सर्वभूतानां त्वं छाया त्वं सरस्वती ॥ २५ ॥

त्रयीमयी त्रिमात्रा त्वं सर्वभूतस्वरूपिणी ।
उद्गीतिः सामवेदस्य या पितृगणरञ्जनी ॥ २६ ॥

त्वं वेदिः सर्वयज्ञानां सामिधेनी तथा हविः ।
यदव्यक्तमनिर्देश्यं निष्कलं परमात्मनः ॥ २७ ॥

रूपं तथैव तन्मात्रं सकलं च जगन्मयम् ।
या मूर्तिर्विततता सर्वधरित्री विभ्रती क्षितिम् ॥ २८ ॥

सा त्वं विश्वम्भरे लोके शक्तिभूतिप्रदा सदा ।
त्वं लक्ष्मीश्चेतना कान्तिस्त्वं पुष्टिस्त्वं सनातनी ॥ २९ ॥

त्वं कालरात्रिस्त्वं मुक्तिः शान्तिः प्रज्ञा तथा स्मृतिः ।
संसारसागरोत्तारतरणिः सुखमोक्षदा ॥ ३० ॥

प्रसीद सर्वजगतां त्वं गतिस्त्वं मतिः सदा ।
त्वं नित्या त्वमनित्या च त्वं चराचरमोहिनी ॥ ३१ ॥

त्वं सन्धिनी सर्वयोगसाङ्गोपाङ्गविभाविनी ।
चिन्ता कीर्तिर्यतीनां त्वं त्वं तदष्टाङ्गसंयुता ॥ ३२ ॥

त्वं खड्गिनी शूलिनी च चक्रिणी घोररूपिणी ।
त्वमीश्वरी जनानां त्वं सर्वानुग्रहकारिणी ॥ ३३ ॥

विश्वादिस्त्वमनादिस्त्वं विश्वयोनिरयोनिजा ।
अनन्ता सर्वजगतस्त्वमेवैकान्तकारिणी ॥ ३४ ॥

नितान्तनिर्मला त्वं हि तामसीति च गीयसे ।
त्वं हिंसा त्वमहिंसा च त्वं काली चतुरानना ॥ ३५ ॥

त्वं परा सर्वजननी दमनी दामिनी तथा ।
त्वय्येव लीयते विश्वं भाति तत्त्वं तद् बिभर्त्ति च ॥ ३६ ॥

त्वं सृष्टिहीना त्वं सृष्टिस्त्वमकर्णापि सश्रुतिः ।
तपस्विनी पाणिपादहीना त्वं नितरां ग्रहा ॥ ३७ ॥

त्वं द्यौस्त्वमापस्त्वं ज्योतिर्वायुस्त्वं च नमो नमः ।
अहङ्कारोऽपि जगतामष्टधा प्रकृतिः कृतिः ॥ ३८ ॥

जगन्नाभिर्मेरुरूपधारिणी नालिकापरा ।
परापरात्मिका शुद्धा माया मोहातिकारिणी ॥ ३९ ॥

कारणं कार्यभूतं च सत्यं शान्तं शिवाशिवे ।
रूपाणि तव विश्वार्थे रागवृक्षफलानि च ॥ ४० ॥

नितान्तह्रस्वा दीर्घा च नितान्ताणुबृहत्तनुः ।
सूक्ष्माप्यखिललोकस्य व्यापिनी त्वं जगन्मयी ॥ ४१ ॥

मानहीना विमानातिविमानोन्मानसम्भवा ।
यदष्टिव्यष्टिसम्भोगरागादिगलिताशया ॥ ४२ ॥

तत्ते महिम्नि तद्रूपं तव भ्रान्त्यादिकं च यत् ।
इष्टानिष्टविपाकज्ञा यथेष्टानिष्टकारणम् ॥ ४३ ॥

सर्गादिमध्यान्तमयं निम्नं रूपं तथैव च ।
विचाराष्टाङ्गयोगेन सम्पाद्यैवं मुहुर्मुहुः ॥ ४४ ॥

यत् स्थिरीक्रियते तत्त्वं तत्ते रूपं सनातनम् ।
बाह्याबाह्ये सुखं दुःखं ज्ञानाज्ञाने लयालयौ ॥ ४५ ॥

यस्याः प्रभावं नो वक्तुं शक्नोति भुवनत्रये ।
तस्यैव सम्मोहकरी सा त्वं किं स्तूयसे मया ॥ ४६ ॥

योगनिद्रा महानिद्रा मोहनिद्रा जगन्मयी ।
विष्णुमाया च प्रकृतिः कस्त्वां स्तुत्या विभावयेत् ॥ ४७ ॥

मम विष्णोः शङ्करस्य च वपुर्वहनात्मिका ।
तस्याः प्रभावं को वक्तुं गुणान् वेत्तुं च कः क्षमः ॥ ४८ ॥

प्रकाशकरणज्योतिः स्वरूपान्तरगोचरा ।
त्वमेव जङ्गमस्थेयरूपैका बाह्यगोचरा ॥ ४९ ॥

प्रसीद सर्वजगतां जननी स्त्रीस्वरूपिणी ।
विश्वरूपिणि विश्वेशे प्रसीद त्वं सनातनि ॥ ५० ॥

**तत्रैव ब्रह्मोवाच—**

नमो नमस्ते जगतः प्रवृत्तिनिवृत्तिरूपे स्थितिसर्गरूपे ।
चराचराणां भवती च शक्तिः सनातनी सर्वविमोहिनीति ॥५४॥

या श्रीः सदा केशवमूर्तिमाया विश्वम्भरा या सकलं बिभर्ति ।
ह्रीर्योगिनी या महिता मनोज्ञा सा त्वं नमस्ते परमात्मसारे ॥५५॥

वामादिपूर्वे हृदि योगिनीं यां विभावयन्ति प्रमितिप्रतीताम् ।
प्रकाशशुद्धादियुतां विरागां सा त्वं हि विद्या विविधावलम्बा ॥५६॥

कूटस्थमव्यक्तमचिन्त्यरूपं त्वं बिभ्रती कालमयं जगन्ति ।
विकारबीजं प्रकरोषि नित्यं प्रत्नानि नूत्नान्यथ मध्यमानि ॥५७॥

सत्त्वं रजोऽथ तम इत्यमीषां विकारहीना समवस्थितिर्या ।
सा त्वं गुणानां जगदेकहेतुर्बाह्यान्तरालं भवतीव याति ॥५८॥

अशेषजगतां बीजे ज्ञेयज्ञानस्वरूपिणी ।
जगद्धिताय जगतां विष्णुमाये नमोऽस्तु ते ॥ ५९ ॥

[अत्र भगवतः शङ्करस्य मोहनार्थं ब्रह्मणा विष्णुमाया-महामाया-योगनिद्राख्याया देव्याः स्तुतिर्विहिता । तत्र पूर्वस्तुतिकृते सति सा योगनिद्रा अञ्जनद्युतिश्चतुर्भुजा सिंहस्था खड्गनीलाब्जहस्ता मुक्तकेशा समक्षमाविर्भूता तदनन्तरं पुनः स्तुतौ कृतायां ब्रह्मोक्तकार्यसिद्धये तत्परा जाता । स्तुत्यनन्तरं ६०-६१ श्लोकयोः 'इत्याकर्ण्य वचस्तस्य काली लोकविमोहिनी' तथा 'अथ ब्रह्माणमाभाष्य काली योगमयी पुनः' वाक्याभ्यामिदमेव सिध्यति यदियं ब्रह्मस्तुतिः कालिकाया एव ।]

# विष्णुमायाया: (महामायाया:) स्तुति:

(कालिकापुराणेऽष्टमाध्याये ४९-५५ श्लोकेषु)

दक्ष उवाच—

शिवा शान्ता महामाया योगनिद्रा जगन्मयी ।
या प्रोच्यते विष्णुमाया तां नमामि सनातनीम् ॥ ४९ ॥

यया धाता जगत्सृष्टौ नियुक्तस्तां पुराऽकरोत् ।
स्थितिश्च विष्णुरकरोद् यन्नियोगाज्जगत्पतिः ॥ ५० ॥

शम्भुरन्तं ततो देवीं त्वां नमामि महीयसीम् ।
विकाररहितां शुद्धामप्रमेयां प्रभावतीम् ॥
प्रमाणमानमेयाख्यां प्रणमामि सुखात्मिकाम् ॥ ५१ ॥

यस्त्वां विचिन्तयेद् देवीं विद्याविद्यात्मिकां पराम् ।
तस्य भोग्यञ्च मुक्तिश्च सदा करतले स्थिता ॥ ५२ ॥

यस्त्वां प्रत्यक्षतो देवी सकृत् पश्यति पावनीम् ।
तस्यावश्यं भवेन्मुक्तिर्विद्याविद्याप्रकाशिका ॥ ५३ ॥

योगनिद्रे महामाये विष्णुमाये जगन्मयि ।
या प्रमाणार्थसम्पन्ना चेतना सा तवात्मिका ॥ ५४ ॥

ये स्तुवन्ति जगन्मातर्भवतीमम्बिकेति च ।
जगन्मयीति मायेति सर्वं तेषां भविष्यति ॥ ५५ ॥

# महामायास्तुतिः*

दक्ष उवाच—

आनन्दरूपिणीं देवीं जगदानन्दकारिणीम् ।
सृष्टिस्थित्यन्तरूपां तां स्तौमि लक्ष्मीं हरेः शुभाम् ॥ १२ ॥

सत्त्वोद्रेकप्रकाशेन यज्ज्योतिस्तत्त्वमुत्तमम् ।
स्वप्रकाशं जगद्धाम तत्तवांशं महेश्वरि ॥ १३ ॥

रजोगुणातिरेकेण यत् कामस्य प्रकाशनम् ।
रागस्वरूपं मध्यस्थं तत्तेंऽशांशं जगन्मयि ॥ १४ ॥

तमोगुणातिरेकेण यद्यन्मोहप्रकाशनम् ।
आच्छादनं चेतनानां तत्ते चांशांशगोचरम् ॥ १५ ॥

परापरात्मिका शुद्धा निर्मला लोकमोहिनी ।
त्वं त्रिरूपा त्रयी कीर्तिर्वार्ताऽस्य जगतो गतिः ॥ १६ ॥

बिभर्ति माधवो धात्रीं यया मूर्त्या निजोत्थया ।
सा मूर्तिस्तव सर्वेषां जगतामुपकारिणी ॥ १७ ॥

महानुभावा त्वं विश्वशक्तिः सूक्ष्मापराजिता ।
यदूर्ध्वाधोनिरोधेन व्यज्यते पवनैः परम् ॥ १८ ॥

तज्ज्योतिस्तव मात्रार्थे सात्त्विकं भावसन्मतम् ।
यद्योगिनो निरालम्बं निष्कलं निर्मलं परम् ॥ १९ ॥

---

* कालिकापुराणे—८।१२–२६ ।

आलम्बयन्ति तत्तत्त्वं त्वदन्तर्गोचरन्तु तत् ।
या प्रसिद्धा च कूटस्था सुप्रसिद्धातिनिर्मला ॥ २० ॥

सा ज्ञप्तिस्त्वन्निष्प्रपञ्चा प्रपञ्चापि प्रकाशिका ।
त्वं विद्या त्वमविद्या च त्वमालम्बा निराश्रया ।
प्रपञ्चरूपा जगतामादिशक्तिस्त्वमीश्वरी ॥ २१ ॥

ब्रह्मकण्ठालया शुद्धा वाग्वाणी या प्रगीयते ।
वेदप्रकाशनपरा सा त्वं विश्वप्रकाशिनी ॥ २२ ॥

त्वमग्निस्त्वं तथा स्वाहा त्वं स्वधा पितृभिः सह ।
त्वं नभस्त्वं कालरूपा त्वं काष्ठा त्वं बहिः स्थिता ॥ २३ ॥

त्वमचिन्त्या त्वमव्यक्ता तथा निर्देश्यरूपिणी ।
त्वं कालरात्रिस्त्वं शान्ता त्वमेव प्रकृतिः परा ॥ २४ ॥

यस्याः संसारलोकानां परित्राणाय यद्बहिः ।
रूपं जानन्ति धात्राद्यास्तत्त्वां ज्ञास्यन्ति के पराम् ॥ २५ ॥

प्रसीद भगवत्यम्बे प्रसीद योगरूपिणि ।
प्रसीद घोररूपे त्वं जगन्मयि नमोऽस्तु ते ॥ २६ ॥

## योगनिद्राया: (महामायाया:) स्तुति:*

देवा ऊचुः—

श्रीशक्तिं पावनीं तां तु पुष्टिं परमनिष्कलाम् ।
वयं स्तुमो महाभक्त्या महद्व्यक्तरूपिणीम् ॥ ९ ॥

शिवां शिवकरीं शुद्धां स्थूलां सूक्ष्मां परावराम् ।
अन्तर्विद्यामविद्याख्यां प्रीतिमेकाग्रयोगिनीम् ॥ १० ॥

त्वं मेधास्त्वं धृतिस्त्वं ह्रीस्त्वमेका सर्वगोचरा ।
त्वं दीधितिः सूर्यगता सुप्रपञ्चप्रकाशिनी ॥ ११ ॥

या तु ब्रह्माण्डसंस्थानं जगद्बीजेषु या जगत् ।
आप्याययति ब्रह्मादींस्स्तम्बान्तान् या त्वमापगा ॥ १२ ॥

य एकः सर्वजगतां प्राणभूतसदागतिः ।
देवानां च य आधारः स नभस्वांस्तवांशकः ॥ १३ ॥

एवं विसारि यत्तेजः सर्वत्रैव समिष्यते ।
तत्ते रूपं जगद्बीजं बहुधा यच्च दृश्यते ॥ १४ ॥

या ब्रह्मलोकपातालसान्तरालगता सदा ।
सा त्वं वियन्मध्यबहिर्ब्रह्माण्डस्य च सर्वतः ॥ १५ ॥

अचलाचलचक्रेण यन्त्रिता या प्रपञ्चसूः ।
जगद्धात्री लोकमाता सा च त्वं माधवी क्षितिः ॥ १६ ॥

---

* कालिकापुराणे-२४।९-२७ ।

त्वं बुद्धिस्त्वं तद्विषया त्वं माता छन्दसां गतिः ।
गायत्री त्वं वेदमाता त्वं सावित्री सरस्वती ॥ १७ ॥

त्वं वार्ता सर्वजगतां त्वं त्रयी कामरूपिणी ।
त्वं हि निद्रास्वरूपेण प्राणिनो निर्जरादयः ॥
ये स्वर्गाद्योकसः सर्वान् सुखयन्ती प्रमोहसि ॥ १८ ॥

त्वं लक्ष्मीः पुण्यकर्त्रीणां पापिनां त्वं हि यातना ।
तथा नीतिभृतां श्रीश्च सुखदा नैशिकी धृतिः ॥ १९ ॥

त्वं शान्तिः सर्वजगतां त्वं कान्तिश्चन्द्रगोचरा ।
त्वं धात्रीं सर्वभूतानां लक्ष्मीस्त्वं विष्णुमोहिनी ॥ २० ॥

त्वं तत्त्वरूपा भूतानां पञ्चानामपि सारकृत् ।
त्वं त्रिलोकी महामाया त्वं नीतिर्मोहकारिणी ॥ २१ ॥

संसारचक्रेष्वारोप्य सर्वभूतं महेश्वरः ।
भ्रामयन्नस्ति च यथा सा त्वं माया महेश्वरि ॥ २२ ॥

जयन्ती जययुक्तानां ह्रीर्विद्या नीतिरुत्तमा ।
गीतिस्त्वं सामवेदस्य ग्रन्थिस्त्वं यजुषां हुतिः ॥ २३ ॥

समस्तगीर्वाणगणस्य शक्ति-
स्तमोमयी सत्त्वगुणैकदृश्या ।
रजःप्रपञ्चानुभवैककारिणी
या न स्तुता भव्यकरीह साऽस्तु ॥ २४ ॥

संसारसागरकरालतरङ्गदुःख-
निस्तारकारितरणिश्चितिरीतिहीना ।
याष्टाङ्गरूपपरपावनकेलिगीत-
विक्षेपकारिणी गिरौ प्रणनाम तां वै ॥ २५ ॥

नासाक्षिवक्त्रभुजवक्षसि मानसे च
धृत्वा सुखानि विदधाति सदैव जन्तोः ।
निद्रेति याति सुभगा जगती भवानां
सा नः प्रसीदतु धृतिस्मृतिवृत्तिरूपा ॥ २६ ॥

सृष्टिस्थित्यन्तरूपा या सृष्टिस्थित्यन्तकारिणी ।
सृष्टिस्थित्यन्तशक्तिर्या सा माया नः प्रसीदतु ॥ २७ ।

●

# योगनिद्रायाः स्तुतिः*

ब्रह्मोवाच—

चितिशक्तिं निर्विकारां परब्रह्मस्वरूपिणीम् ।
प्रणमामि महामायां योगनिद्रां सनातनीम् ॥ ३१ ॥
त्वं विद्या योगिनां देवि त्वं गतिस्त्वं मतिः स्तुतिः ।
त्वं सृष्टिस्त्वं स्थितिः स्वाहा स्वधा त्वमिह गीतिका ॥३२॥
त्वं सामगीतिस्त्वं नीतिस्त्वं ह्रीः श्रीस्त्वं सरस्वती ।
योगनिद्रा महामाया मोहनिद्रा त्वमीश्वरी ॥ ३३ ॥
त्वं कान्तिः सर्वशक्तिस्त्वं त्वं तनुर्वैष्णवी शिवा ।
त्वं धात्री सर्वलोकानामविद्या त्वं शरीरिणाम् ॥ ३४ ॥
आधारशक्तिस्त्वं देवी त्वं हि ब्रह्माण्डधारिणी ।
त्वमेव सर्वजगतां प्रकृतिस्त्रिगुणात्मिका ॥ ३५ ॥
त्वं सावित्री च गायत्री सौम्यासौम्यातिशोभना ।
त्वं सिसृक्षा हरेर्नित्या सुषुप्ता त्वं सुषुप्तिका ॥ ३६ ॥
पुष्टिर्लज्जा क्षमा शान्तिस्त्वं धृतिः परमेश्वरी ।
त्वमेव क्षितिरूपेण ध्रियसे सचराचरम् ॥ ३७ ॥
त्वमापस्त्वमपां माता सर्वान्तर्गतचारिणी ।
स्तुतिः स्तुत्या च स्तोत्री स्तुतिशक्तिस्त्वमेव च ॥ ३८ ॥
त्वामहं किन्तु स्तोष्यामि प्रसीद परमेश्वरि ।
नमस्तुभ्यं जगन्मातः प्रबोधय जनार्दनम् ॥ ३९ ॥

---

* कालिकापुराणे—२७।३१-३९ ।

# योगनिद्रास्तुतिः*

मेनकोवाच—

ततः सा मेनका देवी कालिकां परमेश्वरीम् ।
तुष्टाव वाग्भिरिष्टाभिः शिवां प्रत्यक्षतः स्थिताम् ॥ १८ ॥

प्रेरयन्तीं जगद्धाम चण्डिकां लोकधारिणीम् ।
प्रणमामि जगद्धात्रीं सर्वकामार्थसाधिनीम् ॥ १९ ॥

नित्यानन्दां ज्ञानमयीं योगनिद्रां जगत्प्रसूम् ।
प्रणमामि शिवां शुद्धां विधिशौरिशिवात्मिकाम् ॥ २० ॥

मायामयीं महामायां भक्तशोकविनाशिनीम् ।
कामस्य वनितां भद्रां नमामि त्वां चितिं शिवाम् ॥ २१ ॥

सत्त्वोद्रेकाद् या भवित्रीह नित्या
नित्या चापि प्राणिनां बुद्धिरूपा ।
सा त्वं बन्धच्छेदहेतुर्यतीनां
कस्ते गद्यो मादृशीभिः प्रभावः ॥ २२ ॥

या त्वं साम्नां सिद्धिरुक्तिस्तथार्चा
या वृत्तिर्या यजुषां दीर्घरूपा ।
हिंसा या वाऽथ वेदस्य सा त्वं
नित्यं कामं त्वं ममेष्टं विधेहि ॥ २३ ॥

---

* कालिकापुराणे—४१।१८-२८।

नित्यानित्यैर्भागहीनैः पुरस्थै-
स्तन्मात्रैर्यैर्यत्यते भूतवर्गः ।
तेषां शक्तिस्त्वं सदा नित्यरूपा
का ते योषा भोग्यं वक्तुं समर्था ॥ २४ ॥

क्षितिर्धरित्री जगतां त्वमेव
त्वमेव नित्या प्रकृतिस्वरूपा ।
यया वशः क्रियते ब्रह्मरूपः
सा त्वं नित्या मे प्रसीदास्तु मातः ॥ २५ ॥

त्वं जातवेदोगतशक्तिरूपा
त्वं दाहिका सूर्यकरस्य शक्तिः ।
आह्लादिका त्वं बहु चन्द्रिकाया-
स्तां तामहं स्तौमि नमामि चाम्बिकाम् ॥ २६ ॥

योषा योषित्प्रियाणां त्वं विद्या त्वं चोर्ध्वरेतसाम् ।
वाञ्छा त्वं सर्वजगतां माया च त्वं तथा हरेः ॥२७॥

याऽनेकरूपाणि विधाय नित्यं
सृष्टिं स्थितिं हानिमपीह कर्त्री ।
ब्रह्माच्युतस्थाणुशरीरहेतुः
सा त्वं प्रसीदाद्य पुनर्नमस्ते ॥ २८ ॥

# महामायास्तुतिः*

## ( शिवपुराणे, उमासंहितायां ४५ अध्याये)

ब्रह्मोवाच—

रक्ष रक्ष महामाये शरणागतवत्सले ।
एताभ्यां घोररूपाभ्यां दैत्याभ्यां जगदम्बिके ॥ ५७ ॥

प्रणमामि महामायां योगनिद्रामुमां सतीम् ।
कालरात्रिं महारात्रिं मोहरात्रिं परात्पराम् ॥ ५८ ॥

त्रिदेवजननीं नित्यां भक्ताभीष्टफलप्रदाम् ।
पालिनीं सर्वदेवानां करुणावरुणालयाम् ॥ ५९ ॥

त्वत्प्रभावादहं ब्रह्मा माधवो गिरिजापतिः ।
सृजत्यवति संसारं काले संहरतीति च ॥ ६० ॥

त्वं स्वाहा त्वं स्वधा त्वं ह्रीस्त्वं बुद्धिर्विमला मता ।
तुष्टिः पुष्टिस्त्वमेवाम्ब शान्तिः क्षान्तिः क्षुधा दया ॥६१॥

विष्णुमाया त्वमेवाम्ब त्वमेव चेतना गता ।
त्वं शक्तिः परमा प्रोक्ता लज्जा तृष्णा त्वमेव च ॥ ६२ ॥

भ्रान्तिस्त्वं स्मृतिरूपा त्वं मातृरूपेण संस्थिता ।
त्वं लक्ष्मीर्भवने पुंसां पुण्याचारप्रवर्तिनाम् ॥ ६३ ॥

---

* अत्र मधुकैटभदानवाभ्यां त्रस्तो ब्रह्मा विष्णुप्रबोधनाय महामाया-मस्तौषीत् ।

त्वं जातिस्त्वं मता वृत्तिर्व्याप्तरूपा त्वमेव हि ।
त्वमेव चितिरूपेण व्याप्य कृत्स्नं प्रतिष्ठिता ॥ ६४ ॥

सा त्वमेतौ दुराधर्षावसुरौ मोहयाम्बिके ।
प्रबोधय जगद्योने नारायणमजं विभुम् ॥ ६५ ॥

ऋषिरुवाच—

ब्रह्मणा प्रार्थिता सेयं मधुकैटभनाशने ।
महाविद्या जगद्धात्रीं सर्वविद्याधिदेवता ॥ ६६ ॥

द्वादश्यां फाल्गुनस्यैव शुक्लायां समभून्नृप ।
महाकालीति विख्याता शक्तिस्त्रैलोक्यमोहिनी ॥ ६७ ॥

# काल्याः स्थानं माहात्म्यं स्तुतिश्च*

व्यास उवाच—

शैलोद्देशे महाभागाः क्षेत्रं काल्याः प्रशस्यते ।
कालिकेति च विख्याता शैलोद्देशेऽतिशोभने ॥ ३ ॥

वधाय दितिजेन्द्राणां कौशिकी याऽभवत्पुरा ।
तया चण्डश्च मुण्डश्च निहतौ दानवोत्तमौ ॥ ४ ॥

रक्तबीजस्य रुधिरं यया पीतं तपोधनाः ।
शैलोद्देशे महापुण्या कालिका कालनाशिनी ॥ ५ ॥

घोररूपा विशालाक्षी भक्तानां परिरक्षिणी ।
शैलस्य पूर्वभागे वै पूजिता देवनायकैः ॥ ६ ॥

तत्रावासं चकाराशु शैले देवप्रपूजिते ।
शक्तिभिर्देवमुख्यानां तथा षोडशमातृभिः ॥ ७ ॥

तथा विद्याधरैर्देवी पूजिता मुनिसत्तमाः ।
पापात्मानो महाकालीं न द्रष्टुं शक्नुवन्ति हि ॥ ८ ॥

प्रपश्यन्ति महाभागा धर्ममार्गरता नराः ॥ ९ ॥

स्मृत्वापि कालीं कलिकल्मषघ्नीं
बालग्रहा ये ग्रहनायकाश्च ।
द्रवन्ति रक्षांसि भयप्रदानि
सिद्धिं ह्यभीष्टां मनुजाः प्रयान्ति ॥ १० ॥

---

* स्कन्धपुराणे, मानसखण्डे—९७।३–४४ ।

सा देवमुख्यैर्विनिषेविता शिवा
ददात्यभीष्टं तुषिता महीतले ।
सैव प्ररुष्टा सकलापदप्रदा
सा एव गीता वरदा दिवौकसा ॥ ११ ॥

चराचरं व्याप्य इदं महीतले
महोद्भटा दैत्यभटा यया द्विजाः ।
निपातिता रङ्गगता महाबलाः
सा कालिका रङ्गगता विराजते ॥ १२ ॥

सूत उवाच—

शैलोद्देशे महादेव्याः वासं श्रुत्वा नृपोत्तम ।
व्यासदेवाय धर्मज्ञाः पप्रच्छुः पुनरेव हि ॥ १३ ॥

ऋषय ऊचुः—

शैलोद्देशे महाकाली विन्ध्यं च तुहिनं तथा ।
सन्त्यज्य मुनिशार्दूला न्यवसत् केन हेतुना ॥ १४ ॥

व्यास उवाच—

कदाचित् तां महाकालीं तुहिनाचलवासिनीम् ।
महेन्द्रप्रमुखा देवाः शुम्भेन च निराकृताः ॥ १५ ॥

देवा ऊचुः—

देव्या यथा त्रिभुवनं सचराचरं च
व्याप्तं बिभर्षि भुवनं च धराधरं च ।
शेषः फणाशतशतैरपि नम्रभूतो
सा वै धराधरसुताऽवतु देवपालम् ॥ १६ ॥

संस्तुता या महादेवी ब्रह्मणा परमेष्ठिना ।
योगनिद्रेति विख्याता विष्णोरतुलतेजसः ॥ १७ ॥

यया त्यक्तो जगन्नाथो जघान मधुकैटभौ ।
आत्मकर्णमलोद्भूतौ मोहितौ योगमायया ॥ १८ ॥

साऽस्मानवतु कल्याणी शुम्भदैत्येन निर्जितान् ।
ब्रह्मविष्णुमहेशानां तेजोराशिसमुद्भवा ॥ १९ ॥

संस्तुता देवगन्धर्वैर्दिव्यशूलप्रहारिणी ।
साऽस्मानवतु कल्याणी महिषासुरनाशिनी ॥ २० ॥

दक्षप्रजापतेर्गेहे अवतीर्य मनोरमा ।
या काली गीयते लोके साऽस्मानवतु शाङ्करी ॥ २१ ॥

व्यास उवाच—

इति संस्तुवतां तत्र देवानां परमेश्वरी ।
आविर्बभूव पुरतः संस्नात्वा जाह्नवीजले ॥ २२ ॥
उवाच सा महाभागा दुर्गा दुर्गतिनाशिनी ॥ २३ ॥

देव्युवाच—

स्तोत्रं ममैतत् क्रियते दैत्यराजनिराकृतैः ।
साम्प्रतं देवदेवेन्द्र सहैतैर्देवतागणैः ॥ २४ ॥

तत् त्वं कथय देवेन्द्र येन मां समुपागताः ।
हेतुना त्रिदिवं त्यक्त्वा सहैतैर्देवतागणैः ॥ २५ ॥

इन्द्र उवाच—

त्वत्प्रसादाज्जगन्मातस्तिष्ठन्ते त्रिदिवौकसः ।
स्वर्गे निरामयाः सर्वे मया संशासिताः शुभे ॥ २६ ॥

साम्प्रतं शुम्भदैत्येन निर्जिताश्छद्मकारिणा ।
देवताः समनुप्राप्ताः शरणं ते परमेश्वरि ॥ २७ ॥
कुरु तस्य वधोपायं सामात्यो विनशिष्यति ।
येनोपायेन देवानां स शत्रुः परमेश्वरि ॥ २८ ॥

व्यास उवाच—

तथेत्युक्त्वा महादेवी पुनर्वचनमब्रवीत् ।
महेन्द्रप्रमुखान् देवान् प्रणतान् कार्यसिद्धये ॥ २९ ॥

देव्युवाच—

हनिष्यामि दुराचारं सहमित्रं सबान्धवम् ।
शुम्भं चैव निशुम्भं च चण्डमुण्डावुभावपि ॥ ३० ॥
तावत् तत्र वसिष्यामि यावत् तं दितिजाधमम् ।
हनिष्यामि दुराचारं शैलोद्देशे न संशयः ॥ ३१ ॥

व्यास उवाच—

इत्युक्त्वा मुनिशार्दूला दुर्गा दुर्गार्तिनाशिनी ।
कोपेनातिगरिष्ठेन मसीवर्णमभूत्ततः ॥ ३२ ॥
देवानां कार्यसिद्ध्यर्थमाविर्भूता महेश्वरी ।
निवासं चकमे तत्र शैलोद्देशे सुशोभने ॥ ३३ ॥
निहत्य दानवान् मुख्यान् शुम्भादीन् परमेश्वरी ।
वरदा शैलभवने तस्थौ देवहिताय वै ॥ ३४ ॥
कालिकेति च तां प्राहुर्मुनयस्तत्त्वदर्शिनः ।
देवा अपि मुनिशार्दूलाः शैलोद्देशनिवासिनीम् ॥ ३५ ॥
दुर्गतेस्तरणोपायं नास्त्यन्यं मुनिसत्तमाः ।
सन्त्यज्य कालिकां देवीं शैलवासां हरप्रियाम् ॥ ३६ ॥

तावत् क्षेत्राणि सर्वाणि देव्याश्चान्यानि वै द्विजाः ।
कथितानि पुराणादौ यावच्छैलं न वर्णितम् ॥ ३७ ॥
शैले यैः कालिका देवी पूजिता मुनिसत्तमाः ।
धनधान्यादिभिः पूर्णा भवन्तीह परत्र च ॥ ३८ ॥
बलिपूजोपहारेण गन्धपुष्पाक्षतैः शुभैः ।
आगमोक्तविधानेन कालिकां ये समाहिताः ॥ ३९ ॥
पूजयन्ति महादेवीं पूजितां देवनायकैः ।
दुर्गतिं तेन पश्यन्ति तथा दारिद्रचजं भयम् ॥ ४० ॥
ग्रहरोगभयं चापि तथा शत्रुभयं महत् ।
वाम्रे हि कालिकातोयैः शैलोद्देशसमुद्भवैः ॥ ४१ ॥
संस्नाप्य कालिकां पूज्य नरः शिवपुरं व्रजेत् ॥ ४२ ॥
कालिकाया महाभागा माहात्म्यं कथितं मया ।
सर्वपापप्रशमनं समस्तभयनाशनम् ॥ ४३ ॥
अष्टम्यां च चतुर्दश्यां ये पठन्ति समाहिताः ।
शृण्वन्ति चैव ये भक्त्या ते यान्ति परमां गतिम् ॥ ४४ ॥

॥ इति श्रीस्कन्दपुराणे मानसखण्डे शैलपर्वत-
कालिकामाहात्म्ये सप्तनवतितमोऽध्यायः ॥

[दुर्गासप्तशत्याः पञ्चमाध्यायेऽपि ८४ मन्त्रतः ८८ मन्त्रं यावदेतत् समासेन निरूपितं यथा–'कालिकेति समाख्याता हिमाचलकृताश्रया'इति । पूर्वमत्र लिखितम्–"स्नातुमभ्याययौ तोये जाह्नव्या नृपनन्दन" इति । तत्र जाह्नवीपदेन न ग्राह्या गङ्गा; अपि तु तत्र जाह्नवीनामकं स्रोतो वर्तते । एवमेव शैलपदेन न पर्वतो ग्राह्यः; अपि तु पिथौरागढजनपदे शैलनामक एकः पर्वत एवास्ति । एषैव गतिः सप्तशत्याः 'शैलोद्देशेऽतिशोभने' (दुर्गा० ५।१०) इति वाक्येऽवगन्तव्या । ]

## पौराणिकशान्तिमन्त्राः

ओं सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणः प्रभुः ॥ १ ॥

प्रद्युम्नश्चानुरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा । २ ॥

वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥ ३ ॥

कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्षमा मतिः ।
बुद्धिर्लज्जा वपुः शान्तिःकान्तिस्तुष्टिश्च मातरः ॥ ४ ॥

एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ५ ॥

ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥

ओं ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो ग्रहा नागा दैत्याश्चाप्सरसोऽङ्गनाः ॥ ७ ॥

अस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च ।
ओषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥

सरितः सागराः शैलास्तीर्थानि जलदा नगाः ।
एते त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये ॥ ९ ॥

## अम्बास्तवः

जननि ते पदयोर्निजमर्पये
सकलया कलया विकलोऽनिशम् ।
न हि समर्पितवस्तुनि दृश्यते
ग्रहणयोग्यसमस्तसमर्हता ॥ १ ॥

न हि भवे क्वचनात्र निशम्यते
स्वजननीपदपद्मसमर्पणम् ।
अपि तु मातृतयैव समेन सा
वरसुतान् कुसुतानवतीक्षते ॥ २ ॥

सुतकृताकृतकर्मविचारणां
न कुरुते जननी न समीक्षते ।
अपि तु वाञ्छति तस्य सुखस्थितिं
जननि ते जननीत्वमिदं परम् ॥ ३ ॥

भवति ! मां यदि वीक्ष्य तवाननं
प्रमुदितं न हि किन्तु पराङ्मुखम् ।
वद तदा करुणावरुणालये !
क्व शरणं सुखमाश्रय संस्थितौ ॥ ४ ॥

जनकसोदरमित्रकुटुम्बिभि-
र्निकृत एति शिशुर्जननीपदम् ।
विमुखतां यदि साप्यवलम्बते
वद तदा क्व नु याति दयार्णवे ॥ ५ ॥

जगति चेदपराध्यति बालको
भवति मातृकुचस्तुतदुग्धपः ।
अपकृता निकृता जननीह ते
सुतसुखं मयि का विपरीतता ॥ ६ ॥

यदि शिशुर्निजकौतुकहेतवे
प्रहरते जननीं हरते धनम् ।
विकुरुते गृहकर्म विभाषते
परमसौ न हि रुष्यति तर्ह्यपि ॥ ७ ॥

जगति मातरि चेदसुकौ दशा
परममातरि किं न हि सम्भवा ।
वद शिवे किमुपेक्षितदृष्टिभि-
र्मयि विलोकनमम्ब तु शोभते ॥ ८ ॥

किमपि याचत ईप्सति वाऽर्भको
हठति लब्धुमलं परिलुण्ठति ।
तद् रुषैव ददाति यथा तथा
स्वजननी मयि का तु विडम्बना ॥ ९ ॥

शरणमस्ति भवे न हि यत्कृते
त्वमसि देवि सदाश्रयदायिनी ।
त्वदरुणाङ्घ्रियुगं श्रयतां नृणां
सकलसाधनतां वहसे भृशम् ॥ १० ॥

न हि कला कविता न मदन्तिके
न हि मतिर्न गतिस्तव संस्तवे ।
कतिपयाक्षरसंकलितामिमा-
मुपहरामि महेशि वचःस्रजम् ॥ ११ ॥

निखिलदृश्यमदृश्यमिदं जगद्
यदुदरे सविकाशमनारतम् ।
व्रजति तिष्ठति खेलति लीयते
जयति सा प्रकृतिर्नियतिर्हृतिः ॥ १२ ॥

यदमितानुपमामलशक्तिभिः
कमलजो बलिभिद् वृषभध्वजः ।
सृजति पाति विनाशयति प्रभु-
र्जयति सा त्रिगुणा भुवनेश्वरी ॥ १३ ॥

जनयितुं भुवनं परिरक्षितुं
गमयितुं प्रलयं समयागमे ।
स्वयमजापि हिताय तनूभृतां
त्रिविधमूर्तिधरा त्रिगुणात्मिका ॥ १४ ॥

विजयदे विजये जयदे जये
क्षितितले विजयस्व वरानने ।
जितविपक्षदले निजशक्तिभिः
कुरु वरं विजयं मम सर्वदा ॥ १५ ॥

अयि मृडानि भवानि भवस्तुते
भवसमृद्धिपराभवकारिणि ।
भवविमुक्तिविधायिनि भूतिदे
भवति ! ते पदयोर्नमनं सदा ॥ १६ ॥

हर रुजं जगदम्ब ममाखिलां
विकलतां यत आप्त इमां पराम् ।
त्वमसि वैद्यवरश्चरमौषधं
रुचिरपथ्यमनामयमीप्सितम् ॥ १७ ॥

हरिहरद्रुहिणादितिनन्दनैः
ऋषिमुनीन्द्रसुरारिनृसंवहैः ।
सततमुच्चरिते जपिते नुते
कुरु कृपां मयि सत्त्वरमीश्वरि ॥ १८ ॥

जहि जये द्विषतामनिशं बलं
वितर रूपमनुत्तममम्बिके ।
वितनु दिक्षु विदिक्षु यशोऽमलं
भव ममोपरि देवि कृपावती ॥ १९ ॥

त्रिनयनां लसदिन्दुशिरःस्रजं
नवदिनेशनिभद्युतिभास्वराम् ।
विहसितामभयं वरदाङ्कुशौ
धृतवतीं च भुजैः सृणिमाश्रये ॥ २० ॥

जगति या मतिमातृदयाक्षुधा-
चितिसुषुप्तितृषाशमवृत्तिभिः ।
भ्रमरुचिस्मृतिभिश्च खमश्नुते
तदरुणाब्जपदोः प्रणतोऽस्म्यहम् ॥ २१ ॥

न हि बलं प्रभुता धृतिराढ्यता
विमलबुद्धिविवेकविशालता ।
दमशमोपरतिप्रसहिष्णुता
जननि ते पद एव गतिर्मम ॥ २२ ॥

भजनमानमनं गमनं स्तवः
स्मृतिरुपायनमात्मनिवेदनम् ।
अपचितिर्मननं श्रवणेक्षणे
भवतु मे सकलं तव पादयोः ॥ २३ ॥

त्वमसि देवि पिता जननी गुरुः
प्रियवरो भगिनी च सहोदरः ।
विविधमूर्तिभिरावृणुते जगद्
निजजनान् परिपाति निरन्तरम् ॥ २४ ॥

अवर्गातं च मतिं प्रगतिं गतिं
चितिमतीव विभूतिमनामयम् ।
मयि विधेहि शिवे शिववल्लभे
हर विगीतिर्तातं विपदां वृतिम् ॥ २५ ॥

निगमशास्त्रपुराणकथागम-
स्मृतिपदादिषडङ्गनयात्मिका ।
निखिलवाङ्मयरूपविभूषिता
त्वमसि देवि परा तव का स्तुतिः ॥ २६ ॥

न दयिता न पुमान्न नपुंसकं
न विबुधो न नरो न हि दानवः ।
न च पशुर्न हि तिर्यगुदेशयौ
त्वमसि देवि निषेधसमुज्झिता ॥ २७ ॥

त्वमसि सन्न न चासदसीत्वरो
न हि जडो न बुधो न हि पामरः ।
न करणानि न चासव ईप्सिताः
त्वमनिषेधमयी सकलात्मिका ॥ २८ ॥

त्वयि न शेषलवस्तव शेषता
न हि कुतः क्व च भाति चराचरे ।
अपि तु सर्वत एव तव च्छटा
विजयसे त्वमशेषमयी शिवे ॥ २९ ॥

मम यदध्ययनं बहुचिन्तनं
सकलवाग्व्यवहारपरम्परा ।
तदपि सर्वमिदं तव संस्तवः
त्वमसि देवि परादिचतुर्विधा ॥ ३० ॥

बहुललोभविमोहितया धिया
विषयसंश्रितया यदि विस्मृता ।
तदपि विस्मरणं खलु संस्तवः
त्वमसि मातरनादिरहंमतिः ॥ ३१ ॥

स्वयमसि स्तुतिरेव वचोमयात्
प्रभुतया स्तवनीयपरा भवे ।
स्तवरता स्वयमेव जगन्मयात्
त्वमसि वाचकवाच्यवचोमयी ॥ ३२ ॥

पदपदार्थमयं सकलं जगत्
तव वपुर्जगदम्ब सुनिश्चितम् ।
इयमतोपचितिर्भुवि मामिका
व्यवहृतिः सकला सकला क्रिया ॥ ३३ ॥

भुजगशायिमनोरमविग्रहे
भुजगभूषणकान्तकलेवरे ।
अहिविषं न यदीयकरामृजाद्
अशिवतां तनुते प्रणमामि ताम् ॥ ३४ ॥

स्वयमजा हरिधूर्जटिवेधसाम्
उदधिजा गिरिजावचसां तनूः ।
धरति याऽखिलविश्वविलासिनी
भवपरां परमां प्रणमामि ताम् ॥ ३५ ॥

स्वयमजापि च नुश्च तनुं स्त्रियाः
समवधृत्य तनोति समं जगत् ।
न ललना न नरोऽसि परावरे
त्वमसि शेषनिषेधविवर्जिता ॥ ३६ ॥

स्वयमसि त्वमजा जगदम्बिके
निखिलमूर्तिभिरावृणुते जगत् ।
त्वमसि विश्वमतो जगदीश्वरि
स्तुतिरहो ........................ ॥ ३७ ॥

तव कृपैव तरीं भवसागरे
त्वमसि संविदुपायवरा यतः ।
न हि परे प्रभवन्त्यनुपद्रुता
अगममायिकतापदसेविनः ॥ ३८ ॥

भवति सापि विना वरहेतुभि-
र्न हि तदर्थमपेक्षित ईप्सितान् ।
यजनकीर्तनयोगतपोऽर्चना-
भजनभावविरागदमोद्यमान् ॥ ३९ ॥

तरुणिमा प्रभुता बलपौरुषे
धनसुहृत्प्रतिभावरविज्ञताः ।
सकलमेति तदैव फलं यदा
भवति पूर्णदया तव कालिके ॥ ४० ॥

अघटितं घटितं घटितं तथा
विघटितं क्रियते सुतरां त्वया ।
त्वमसि सर्वसमर्थपरे शिवे
विकरणे करणे करणेऽन्यथा ॥ ४१ ॥

अयि मनो निगदामि हितं परं
भज सखे गिरिजाचरणद्वयम् ।
यदरुणांशुनखद्युतिभिस्तमो
विलयमेति मतिश्च चकासते ॥ ४२ ॥

न हि जहाति जनं शरणागतं
मनुजनो दनुजोऽदितिजः सदा ।
वदति शास्त्रमिदं च परम्परा
जननि तर्ह्यपि कर्मकथा व्यथा ॥ ४३ ॥

समुचितं शरणागतरक्षणं
सृतिरसौ महनीयजनार्चिता ।
यदि तदीयविहापनमारभेः
क्व समेति धरा विषमा स्थितिः ॥ ४४ ॥

अयि दयस्व दयामयि देवते
नरसुरासुरसर्वसमृद्धिदे ।
स्वकृतकर्मफलं यदि लभ्यते
वद तदा कमले तव का दया ॥ ४५ ॥

कुरु कृपां मयि दीनजने निजे
भ्रुकुटिमात्रविलासलसद्भवे ।
त्यजति नोऽभिमुखं स्वजनं श्रितं
क्षितितलेऽधिवसन् नरपुङ्गवः ॥ ४६ ॥

धवलमालिकया गजमुक्तया
विलसितस्नुतवक्त्रकुचद्वयम् ।
जननि ते गणनायकवत् सदा
भवतु मह्यमतीव कृपापरम् ॥ ४७ ॥

दलितनीलसरोजरुचा दृशा
मयि दयस्व दयामयि का क्षतिः ।
जलदवृष्टिसमा जननीकृपा
भवति नात्र कुतोऽध्वविलङ्घनम् ॥ ४८ ॥

रामनारायणस्येयमम्बापदसमर्चना ।
प्रीत्यै भूयान्महादेव्या महादेवस्य विश्वपः ॥

# श्रीश्रीकर्पूरादिस्तोत्रम्

कर्पूरं मध्यमान्त्यस्वरपरिरहितं सेन्दुवामाक्षियुक्तं
बीजं ते मातरेतत्त्रिपुरहरवधु त्रिःकृतं ये जपन्ति ।
तेषां गद्यानि पद्यानि च मुखकुहरादुल्लसन्त्येव वाचः
स्वच्छन्दं ध्वान्तधाराधररुचिरुचिरे सर्वसिद्धिं गतानाम् ।। १ ।।

टीका

ॐ विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्द्धधारिणे ।। श्रीश्रीचण्डी ।
प्रणमामि महादेवीं तुरीयां ब्रह्मरूपिणीम् ।
यस्याः स्मरणमात्रेण भवाब्धौ न निमज्जति ।। गन्धर्वतन्त्रम् ।
कालीं कालहरां देवीं क्रीङ्कारबीजरूपिणीम् ।
कामरूपां कलातीतां कालिकां दक्षिणां भजे ।। कालीहृदयम् ।

**कर्पूरमिति ।** कर्पूरमित्यादिपञ्चभिः श्लोकैर्महादेव्याः सूक्ष्मरूपात्मकविद्याराज्ञीनाम द्वाविंशत्यक्षरं मन्त्रम् उद्धृतम्, तथा तस्याः साधनप्रकारं माहात्म्यञ्च क्रमेणोक्तम् । षष्ठश्लोके तस्या विविधमन्त्रोद्धारश्च कथितः । उक्तञ्च कालिकाश्रुतौ—"अथ हैनां ब्रह्मरन्ध्रे ब्रह्मस्वरूपिणीमाप्नोति सुभगां कामरेफेन्दिरासमष्टिरूपिणीम् । एतत्त्रिगुणितमादौ तदनु कूर्च्चद्वयम्, कूर्च्चबीजं तद्वद्योम पष्ठस्वरबिन्दुमेलनरूपम् । तदेव द्विरुच्चार्य्य तदनु भुवनाद्वयम्, भुवना तु व्योमज्वलनेन्दिराशून्यमेलनरूपा । तदेव द्विरुच्चार्य्य दक्षिणे कालिके चेत्यभिमुखं गता, तदनु बीजसप्तकमुच्चार्य्य बृहद्भानुजायामुच्चरेत् । अयं सर्वमन्त्रोत्तमोत्तमः" । तथा च निरुत्तरतन्त्रे—

अथ वक्ष्ये महेशानि दक्षिणाकालिकामनुम् ।
येन विज्ञानमात्रेण जीवन्मुक्तः प्रजायते ।।
ब्रह्मानलयुतं देवि नादबिन्दुसमन्वितम् ।
वामनेत्रेण संयुक्तं चित्स्वरूपं परात्परम् ।।
एकाक्षरी सिद्धविद्या मन्त्रराज्ञी कुलेश्वरि ।
त्रिगुणा च कूर्च्चयुग्मं लज्जायुग्मं ततः परम् ।।

**दक्षिणे कालिके चेति सप्तबीजानि योजयेत् ।**
**अन्ते वह्निवधूं दद्याद् विद्याराज्ञी प्रकीर्त्तिता ॥**
**सर्वमन्त्रमयी विद्या सृष्टिस्थित्यन्तकारिणी ॥**

अपरञ्च प्रथमश्लोके श्रीमत्कालिकाया एकाक्षरी मन्त्रराज्ञी क्रीँ-बीजमुद्धृतम्, द्वितीयश्लोके श्रीमत्ताराया एकाक्षरमन्त्रं हूँवीजमुद्धृतम् । तृतीयश्लोके श्रीमत्त्रिपुरसुन्दर्या एकाक्षरमन्त्रं ह्लींबीजमुद्धृतम्, तथा कालीतारासुन्दरीणां रहस्यसाधनप्रकरणञ्च वर्णितम्, तेन एतत्स्वरूपाख्य-स्तोत्रं ककारकूटस्तोत्रवत् त्रिशक्तिविषये पाठ्यम् इति क्रमदीक्षितसाध-केन्द्राणां मतम् । उक्तञ्च तारारहस्यतन्त्रे—

**यथा काली तथा तारा तथा नीलसरस्वती ।**
**सर्वाभीष्टफलप्रदा तथा त्रिपुरसुन्दरी ॥**
**अभेदमतमास्थाय यः कश्चित् साधयेन्नरः ।**
**त्रिलोके स तु पूज्यः स्यात्तारासुतश्च एव सः ॥**
**भेदं कृत्वा यदा मन्त्री साधयेदत्र साधनम् ।**
**न तस्य निष्कृतिर्देवि निरये पच्यते हि सः ॥**

उक्तञ्च ताराध्याने कवचे च—'हूङ्कारबीजोद्भवा', 'हूँ घाटां मे सदा पातु बीजैकाक्षररूपिणी' ॥ तथा श्रीसुन्दर्य्याः स्तोत्रे च—

**ह्लीङ्कारमेव तव नाम गृणन्ति ये वा**
**मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे ।**
**ह्लीं ह्लीमिति प्रतिदिनं जपतां तवाख्यां**
**किन्नाम दुर्लभमिह त्रिपुराभिधाने ॥**

तथा च महाकालसंहितायाम्—

**'श्रीविद्या कालिका तारा त्रिशक्तिविषये पठेत्' ।**

वस्तुतस्तु यद्वद्विभिन्नजातीयबीजेभ्य एकविधा लता कदापि न उत्पद्यते, तद्वत् क्रीङ्कार-हूङ्कार-ह्लीङ्कारादिभ्यो विभिन्न-बीजमन्त्रेभ्य एकरूपा मूर्त्तिर्न सम्भवति, अतः पूर्वोक्तैस्त्रिभिर्बीजैर्ब्रह्मविद्या श्रीमद्दक्षिणकालिकैव सर्व-रूपिणीति सूचिता ।

हे मातः! ध्वान्तधाराधर रुचि-रुचिरे नीलमेघकान्तिरिव मनोज्ञे नवीन-जलधरो यथा अमृतवारिवर्षणेन आतपतप्तपृथ्वीं शीतलां करोति, तद्वत्त्व-

मपि कृपामृतवर्षणेन त्रितापतप्तसाधकाय अमृतत्वं ददासीति भावः। त्रिपुरहरवधु स्वर्गमर्त्यपातालस्थैस्त्रिपुरैः सह त्रिपुराख्यासुरनाशकमहेशशक्ते। कर्पूरं मध्यमान्त्यस्वरपरिरहितं कर्पूरशब्दस्य मध्यमो रेफयुक्तः पकारः, अन्त्यम् अनुस्वारः, स्वरा अकारोकारान्तिमरेफस्थाकारास्तैः सर्वतोभावेन वर्जितम्, तेन 'क्र' इति स्थितम्। सेन्दु बिन्दुयुक्तार्द्धचन्द्रेण सह वर्तमानम्। वामाक्षियुक्तम् ईकारेण युक्तम्, तथा च 'क्रीँ' इति। ते तव बीजं मन्त्रात्मकशरीरस्य कारणम्। त्रिःकृतं त्रिगुणीकृतं ये जनाः जपन्ति मन्त्रार्थगतमानसाः सन्तो मनसा उच्चारयन्ति। सर्वसिद्धिं गतानां शिवस्य अणिमाद्यष्टसिद्धि प्राप्तानां साधकानां मुखकुहराद् आस्यबिवरात्। गद्यानि पद्यानि च वाचः गद्यपद्यमयानि वाक्यानि स्वच्छन्दम् अप्रयत्नसुलभमुल्लसन्ति प्रस्फुरन्ति इत्यर्थः। अपि च श्रूयते यत् श्रीमत्कालिकाया इदं 'क्रीँ'बीजम् इस्लामधर्मावलम्बिनः साधका मोक्षलाभकामनया आरबीयभाषया रूपान्तरितं 'करीम्' इति मन्त्रं जपन्ति, तथा खृष्टानधर्म्मावलम्बिनः साधका अपि 'क्राइष्ट' इति मन्त्रं मुक्तिकामनया सदैव जपन्ति ॥ १ ॥

## अथास्य स्वरूपव्याख्या ॥ १ ॥

**नत्वा श्रीपादुकां भक्त्या रामानन्दस्य योगिनः।**
**कृता स्वरूपव्याख्येयं विमलानन्ददायिनी ॥**

हे मातः (माति परिमितं ददातीति माता–मा + तृच्) सकामनिष्कामभेदेन भोगमोक्षदात्रि। ध्वान्तधाराधररुचि-रुचिरे[1] शुद्धसत्त्वगुणात्मकघनीभूततेजोमयत्वात् तथा चिदाकाशत्वाच्च नीलवर्णचिन्तनीये। [2]त्रिपुरहरवधु स्थूलसूक्ष्मकारणदेहान् हरतीति विदेहमुक्तिदायकत्रिपुरहरस्तस्य विदेहमुक्तिदातुर्या शक्तिः सा त्वमेव विदेहकैवल्यदात्रीति भावः। मध्यमान्त्यस्वरपरि-

---

१. शिवयोर्व्योमरूपत्वादसितं लक्ष्यते वपुः। (योग-वासिष्ठम्)
(शिवा च शिवश्च शिवौ, तयोः)

मोक्षे साक्षादपेताम्बुदगगननिभां भावयेद्भक्तिगम्याम् ॥
(त्रिपुरासारसमुच्चयः)

२. पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम्।
आधारमानन्दमखण्डबोधं यस्मिंल्लयं याति पुरत्रयञ्च ॥(कैवल्योपनिषद्)

रहितं[1] सत्त्वरजस्तमोगुणात्मिकाया मूलप्रकृतेर्मध्यम उकारात्मको रजोगुणः, अन्त्यं मकरात्मकस्तमोगुणः, ताभ्यां रहितं शुद्धसत्त्वगुणात्मकम् । सेन्दुवामाक्षियुक्तं[2] निर्वाणमोक्षदायिनी शक्तिस्तथा साधकाभीष्टदायिका शुद्धसत्त्वप्रधाना मायाशक्तिस्ताभ्यां युक्तम् । कर्पूरं कल्पयति जगत्प्रपञ्चं यत् तत् सगुणब्रह्म इत्यर्थः । ते तव बीजं[3] जगत्कारणभावं सच्चिदानन्दरूपिणी त्वं निर्गुणापि जोवकर्मकालविशिष्टया मायया युक्ता सती तत्तज्जीवतत्तत्कर्मफलभोगसमये प्राप्ते जगत्सर्जने बीजात्मतां गतासीति भावः । एतत् क्रीं वाच्यं तव शुद्धसत्त्वात्मकं सच्चिदानन्दरूपम् । ये साधकास्त्रिःकृतं त्रिगुणीकृतम्, सात्त्विकराजसिकतामसिकभेदेन, तथा स्थूल-सूक्ष्म-कारणभेदेन त्रिविधं त्रिशक्तिरूपञ्च । जपन्ति[4] स्वात्माभेदेन चिन्तयन्ति ते अनिच्छन्तोऽपि धर्मार्थकाममोक्षरूपचतुर्वर्गं लभन्त इति भावः । उक्तञ्च विश्वसारतन्त्रे दक्षिणकालिकायाः क्रमस्तोत्रे—

> त्वदीयबीजत्रयमेतदम्ब जपन्ति सिद्धास्तु विमुक्तिहेतोः ।
> तदेव मातस्तव पादपद्मगा भवन्ति सिद्धाश्च दिनत्रयेऽपि ॥ १ ॥

---

१. अकारः सात्त्विको ज्ञेय उकारो राजसः स्मृतः ।
मकारस्तामसः प्रोक्तस्त्रिभिः प्रकृतिरुच्यते ॥ (ज्ञानसङ्कलिनी)

स्वरेण सन्धयेद् योगमस्वरं भावयेत् परम् ॥ (ब्रह्मबिन्दूपनिषद्)

२. ककारोज्ज्वलरूपत्वात् केवलं ज्ञानचित्कला ।
ज्वलनार्णसमायोगात् सर्वतेजोमयी शुभा ॥
दीर्घेकारेण देवेशि साधकाभीष्टदायिनी ।
बिन्दूनां निष्कलत्वाच्च कैवल्यफलदायिनी ॥ (तन्त्रकल्पद्रुमः)

तोडलतन्त्रे च—

ककारं धर्म्मदं देवि ईकारं चार्थदायकम् ।
रकारं कामदं कान्ते मकारं मोक्षदायकम् ॥
एकत्रोच्चारणाद्देवि निर्वाणमोक्षदायिनी ॥

३. तादात्म्यरूपं चित्संवित् परब्रह्मैकनामकम् ।
स्वशक्तेश्च समायोगादहं बीजात्मतां गता ॥
अव्यक्तं कारणो देहः स चोक्तं पूर्वमेव हि ।
यस्मिन् जगद्बीजरूपं स्थितं लिङ्गोद्भवो यतः ॥ (देवीगीता)

४. सदा कालीरूपमात्मानं विभावयेत् ॥ (काल्युपनिषत्)

**ईशानः सेन्दुवामश्रवणपरिगतो बीजमन्यन्महेशि**
**द्वन्द्वन्ते मन्दचेता यदि जपति जनो वारमेकं कदाचित् ।**
**जित्वा वाचामधीशं धनदमपि चिरं मोहयन्नम्बुजाक्षी-**
**वृन्दं चन्द्रार्द्धचूडे प्रभवति स महाघोरबालावतंसे ॥ २ ॥**

**टीका**

हे महेशि ! ब्रह्मविष्णुरुद्राणामपि ईशो महेशस्तस्य शक्ते । हे चन्द्रार्द्ध-चूडे चन्द्रार्द्धाङ्कितमस्तके ! हे महाघोरबालावतंसे अतिभयानकशवबाल-कृतकर्णालङ्कारे ! मन्दचेता जनो मूढबुद्धिर्जनः । ते तव सेन्दुवामश्रवण-परिगतः चन्द्रबिन्दुसहितो यो दीर्घ ऊकारस्तेन युक्तः । ईशानो हकारः । एतेन 'हूँ' इति तव द्वितीयमूर्त्तेस्ताराया एकाक्षरबीजमन्त्रञ्च उद्धृतम् । द्वन्द्वमेतद् युग्मं कृत्वा । यदि कदाचिद् एकवारमपि जपति तदा स चिरं यावज्जीवं वाचामधीशं बृहस्पतिं धनदमपि कुबेरञ्च जित्वा पराभूय अम्बुजाक्षीवृन्दं सुन्दरीसमूहं मोहयन् प्रभवति मोहयितुं समर्थो भवति, स साधकोऽतीव विद्वान् धनवान् रूपवांश्च भवतीत्यर्थः । तथा च तारा-रहस्ये—

**'तारकत्वात् सदा तारा या काली सैव निश्चिता' ।**

क्रमस्तोत्रे च—

**त्वदीयकूर्च्चद्वयजापकत्वात् सुरासुरेभ्योऽपि भवेच्च पूज्यः ।**
**धनित्वं पाण्डित्यं लभन्ति सर्वे किं वापरं देवि परापराख्ये ॥ २ ॥**

**स्वरूपव्याख्या ॥ २ ॥**

हे महेशि सृष्टि-स्थिति विनाशात्मकमहैश्वर्य्यवति । चन्द्रार्द्धचूडे[1] निर्वाणमोक्षदायिनि । हे महाघोरबालावतंसे[2] महेश्वरसदृशनिर्विकार-

१. नित्यायाः कालरूपाया अरूपायाः शिवात्मनः ।
अमृतत्वाल्ललाटेऽस्याः शशिचिह्नं निरूपितम् ॥ (महानिर्वाणतन्त्रम्)

२. क्षुधां देहव्यथां त्यक्त्वा बालः क्रीडति वस्तुनि ।
तथैव विद्वान् रमते निर्ममो निरहं सुखी ॥ (विवेक-चूडामणिः)
तथा च ब्रह्मोपनिषदि—
यथा कुमारो निष्काम आनन्दमुपयाति ॥

बालकवन्निष्कामसाधकाभ्यां कृते अतिप्रिये कर्णभूषणे यया तत्सम्बोधने। बालकवन्निर्विकारतत्त्वश्च साधको ब्रह्मरूपिण्या अतीव प्रिय इत्यर्थः। सेन्दु-वामश्रवणपरिगत[1] इन्दुः अमृतत्वं वाग्दातृत्वं रूपकर्षिणोत्वञ्च तैर्युक्तः। ईशानः[2] ईश्वरः। इति ते अन्यद्वीजं[3] ह्रूँबीजात्मककारणभावम्। द्वन्द्वं[4] शिवशक्त्यात्मकं स्वरूपम्। यदि कदाचिद् एकवारमपि जपति मानसजपेन चिन्तयति। तर्हि स साधकः ज्ञान-विज्ञानवान् धनवांश्च भूत्वा सर्वं जगद् मोहयितुं शक्नोतीति भावः ॥ २ ॥

**ईशो वैश्वानरस्थः शशधरविलसद् वामनेत्रेण युक्तो**
**बीजन्ते द्वन्द्वमन्यद् विगलितचिकुरे कालिके ये जपन्ति।**
**द्वेष्टारं घ्नन्ति ते च त्रिभुवनमपि ते वश्यभावं नयन्ति**
**सृक्कद्वन्द्वास्रधाराद्वयधरवदने दक्षिणे त्र्यक्षरेति ॥ ३ ॥**

## टीका

हे विगलितचिकुरे मुक्तकेशि। हे कालिके ब्रह्मरूपिणि। हे सृक्क-द्वन्द्वास्रधाराद्वयधरवदने ओष्ठप्रान्तद्वयगलितरुधिरधाराशोभितानने। वैश्वानरस्थो रकारयुक्तः। शशधरविलसत् चन्द्रबिन्दुयुक्तः। वामनेत्रेण युक्त ईकारेण युक्तः। ईशो हकारः। अन्यत् 'ह्रीँ' इति त्रिपुरसुन्दरीबीजम्। द्वन्द्वम् उक्तबीजं द्विगुणीकृतम्। तथा 'दक्षिणे' इति नामात्मकत्र्यक्षरमन्त्रञ्च ये जनाः जपन्ति, ते द्वेष्टारं शत्रुं घ्नन्ति नाशयन्ति त्रिभुवनमपि स्वर्ग-मर्त्य-पातालस्थं देवनरनागादिकञ्च वश्यभावं नयन्ति अधीनत्वं प्रापयन्ति इत्यर्थः ॥ ३ ॥

---

१. ऊकारो भैरवः सूक्ष्मो दीर्घघोणा सरस्वती।
विलासिनी विघ्नकर्त्ता लक्ष्मणो रूपकर्षिणी ॥

२. अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवावधूमकः।
ईशानो भूतभव्यस्य स एवाद्यः स ईश्वरः ॥ (कठोपनिषद्)

३. शब्दबीजद्वयेनैव शब्दराशिप्रबोधिनी ॥ (यामलम्)

४. शिवशक्तिसमायोगाज्जनितो मन्त्रराजकः।
तन्मयीं परमानन्दनन्दितां मन्त्ररूपिणीम् ॥ (गन्धर्वतन्त्रम्)

## स्वरूपव्याख्या ॥ ३ ॥

हे विगलितचिकुरे केशविन्यासादिविलासविकाररहिते, निर्विकारे इत्यर्थः। कालिके क[1] ब्रह्म, आ[2] अनन्त, ल[3] विश्वात्मा, इ[4] सूक्ष्मा, क ब्रह्म, आ अनन्त इति कालिका, एतेन महादेव्या आद्यन्तरहितत्वम्, अनन्तत्वम्, सूक्ष्मत्वं विश्वात्मकत्वञ्च सूचितम्, हे अनाद्यनन्तब्रह्मरूपिणि इत्यर्थः। उक्तञ्च अद्भुतरामायणे श्रीरामकृतासितास्तोत्रे—

**आद्यन्तहीनं जगदात्मरूपं विभिन्नसंस्थं प्रकृतेः परस्तात्।**
**कूटस्थमव्यक्तवपुस्तवैव नमामि रूपं पुरुषाभिधानम् ॥**

सृक्कद्वन्द्वास्रधाराद्वयधरवदने सृक्कद्वयगलद्रक्तधाराविस्फुरिताननने, अत्र रक्तधारया रजोगुणः सूचितः, तस्माद् महादेवी रजोरहिता शुद्धसत्त्वात्मिका विरजा[5] इति निरूपिता। त्रिपुरसुन्दरीपक्षे तु रजोगुणेन महादेव्याः रक्तवर्णा मूर्त्तिः सूचिता। वैश्वानरस्थस्तेजोमयः शशधरविलसद् अमृतदातृशक्त्या सह वामनेत्रेण युक्तः शुद्धसत्त्वगुणात्मिकया मायया युक्तः। ईशः ईश्वरात्मकसूक्ष्मबीजात्मभावः, इति ते तव अन्यद् अपरं द्वन्द्वं [6]हृल्लेखावाच्यशिवशक्त्यात्मकं बीजात्मरूपम्। तथा 'दक्षिणे'[7] इति सम्बोधननामा-

---

१. कः क्रोधीशो महाकाली कामदेवः प्रकाशकः।
श्रीपुरं रमणो वज्रकुसुमा परमात्मकः॥

२. आकारो विजयानन्तः।

३. लश्चन्द्रः पूतना पृथ्वी माधवः शक्रवाचकः।
विश्वात्मा मन्दो बलवान् मेरुर्गिरिकलारसः॥

४. इः सूक्ष्मा शाल्मली विद्या चन्द्रः पूषा सुगुह्यकः॥ (तन्त्राभिधानम्)

५. हिरण्मये परे कोषे विरजं ब्रह्मनिष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्वदात्मविदो विदुः॥ (मस्तक-उप०)

६. हकारः स्थूलदेहः स्याद्रकारः सूक्ष्मदेहकः।
ईकारः कारणात्मासौ ह्रींकारोऽहं तुरीयकः॥ (देवीगीता)

७. दक्षिणस्यां दिशि स्थाने संस्थितश्च रवेः सुतः।
कालीनाम्ना पलायेत भीतियुक्तः समन्ततः॥

त्मकत्र्यक्षरं मन्त्रवाच्यं कैवल्यदायकसच्चिदानन्दरूपं ये साधकाः जपन्ति ध्यायन्ति, ते द्वेष्टारं साधनविघ्नकरकामक्रोधादिकं घ्नन्ति नाशयन्ति, त्रिभुवनमपि वश्यभावं नयन्ति वश्यतां प्रापयन्ति। श्रीसुन्दरीपक्षे तु हे कालिके रक्तकालिके तृतीयमहाविद्याश्रीमत्त्रिपुरसुन्दरि इत्यर्थः। उक्तञ्च बृहन्नीलतन्त्रे—

**इयं नारायणी काली तारा स्यात् शून्यवाहिनी।**
**सुन्दरी रक्तकालीयं भैरवी नादिनी तथा॥**

तथा च तन्त्रान्तरे—

**कालिका द्विविधा प्रोक्ता कृष्णारक्ताप्रभेदतः।**
**कृष्णा तु दक्षिणा प्रोक्ता रक्ता तु सुन्दरी मता॥**

दक्षिणे दक्षिणामूर्त्तिभैरवाराधिते इत्यर्थः। त्र्यक्षरे ऐँ क्लीँ ह्रीँ मन्त्रवाच्ये इत्यर्थः। तथा च क्रमस्तोत्रे—

**त्वदीयलज्जाद्वयजापकत्वाद् भवेन्महेशानि चतुर्थसिद्धिः।**
**दयासमुद्रस्य वरप्रसादाद् भवाधिपत्यं लभते नरेशः॥ ३॥**

**ऊर्ध्वे वामे कृपाणं करकमलतले छिन्नमुण्डं तथाधः**
**सव्ये चाभीर्वरञ्च त्रिजगदघहरे दक्षिणे कालिके च।**
**जप्त्वैतन्नाम ये वा तव मनुविभवं भावयन्त्येतदम्ब**
**तेषामष्टौ करस्थाः प्रकटितरदने सिद्धयस्त्र्यम्बकस्य॥ ४॥**

---

अतः सा दक्षिणा काली त्रिषु लोकेषु गीयते॥ (निर्वाणतन्त्रम्)
तथा च कामाख्यातन्त्रे—
यथा कर्म्मसमाप्तौ च दक्षिणा फलसिद्धिदा।
तथा मुक्तिरसौ देवी सर्वेषां फलदायिनी॥
अतो हि दक्षिणाकाली कथ्यते वरवर्णिनि।
पुरुषो दक्षिणः प्रोक्तः वामाशक्तिर्निगद्यते॥
वामा सा दक्षिणं जित्वा महामोक्षप्रदायिनी।
ततः सा दक्षिणानाम्ना त्रिषु लोकेषु गीयते॥

## टीका

हे त्रिजगदघहरे त्रिजगतां जनानां पापनाशिनि। हे प्रकटितरदने[1] प्रकाशितदशने। हे अम्ब मातः। दक्षिणे निर्वाणदात्रि ये साधकास्तव मनुविभवं पूर्वोक्तं कालीबीजत्रयं कूर्चद्वयं[2] मायाद्वयं 'दक्षिणे' इति त्र्यक्षररूपं दशाक्षरमन्त्रसम्पत्ति तथा 'कालिके' इति नामात्मकं त्र्यक्षरमन्त्रञ्च जप्त्वा वामे ऊर्ध्वे करकमलतले कृपाणं खड्गं तथा अधः निम्ने छिन्नमुण्डं छिन्नमस्तकम्। सव्ये दक्षिणे ऊर्ध्वे। करकमलतले अभीः अभयमुद्राम्। वरञ्च दक्षिणे अधः करकमलतले वरमुद्राञ्च। एतद् ईदृशम् ऊर्ध्वे वामे कृपाणम् इत्यादिप्रकाररूपं भावयन्ति चिन्तयन्ति। त्र्यम्बकस्य शिवस्य। अष्टौ सिद्धयः[3] अणिमादयः अष्टप्रकाराः सिद्धयस्तेषां साधकानां करस्थाः अनायासलब्धा भवन्तीत्यर्थः ॥ ४ ॥

## स्वरूपव्याख्या ॥ ४ ॥

हे त्रिजगदघहरे त्रिलोकीनां कायिकवाचिकमानसिकत्रिविधपापनाशिनि। हे प्रकटितरदने स्वप्रकाशसत्त्वगुणसूचकशुभ्रदशनपङ्क्त्या रजोगुणसूचकरक्तवर्णां लोलरसनां दशति सत्त्वगुणेन रजस्तमश्च नाशयति या, तस्याः सम्बोधने। हे अम्ब मातः। दक्षिणे निर्वाणदात्रि। ते तव मनुविभवं निजबीजत्रयात्मकचिद्घनमूर्त्तिं कूर्च्चबीजद्वयात्मकसत्त्वात्मकमूर्त्तिं तथा मायाबीजद्वयात्मकरजःप्रधानसत्त्वमूर्त्तिञ्च। तथा कालिके, कालिके इति नामवाच्यम् आद्यन्तरहितं सच्चिदानन्दमूर्त्तिञ्च जप्त्वा चिन्तयित्वा।

---

१. दन्तुरां परमां नित्यां रक्तमण्डितविग्रहाम् ॥ (योगिनीतन्त्रम्)
तथा च ताराकल्पे—
नवाम्भोदश्यामां प्रकटरदभीमां पृथुकुचाम् ॥

२. माया लज्जा च ह्रीङ्कारः हूँकारः कूर्च्च उच्यते।

३. अणिमा महिमा चैव लघिमा प्राप्तिरेव च।
प्राकाम्यञ्च तथेशित्वं वशित्वञ्च तथापरम् ॥
तथा कामावशायित्वं गुणानेताननैश्वरान्।
प्राप्नोत्यष्टौ नरव्याघ्रः परनिर्वाण-सूचकान् ॥ (मार्कण्डेयपुराणः)

स्त्रीमूर्त्तिधारिणी त्वं[१] स्वीयवामोर्ध्वहस्तेन ज्ञानखड्गेन[२] निष्कामसाधकानां मोहपाशं छित्वा तदधोहस्तेन विगतरजं तत्त्वज्ञानाधारं मस्तकं दधासि, तथा दक्षिणोर्ध्वहस्तेन सकामसाधकेभ्योऽभयं तथा तदधोहस्तेन चाभीष्ट-वरञ्च दधासीति। एवम्भूतां त्वां ये साधका ध्यायन्ति, तेषामणिमाद्यष्ट-सिद्धयोऽनायासलब्धा भवन्तीति भावः॥ ४॥

**वर्गाद्यं वह्निसंस्थं विधुरतिललितं तत्त्रयं कूर्च्चयुग्मं**
**लज्जाद्वन्द्वञ्च पश्चात् स्मितमुखि तदधष्ठद्वयं योजयित्वा।**
**मातर्ये ये जपन्ति स्मरहरमहिले भावयन्तः स्वरूपं**
**ते लक्ष्मीलास्यलीलाकमलदलदृशः कामरूपा भवन्ति॥ ५॥**

## टीका

हे स्मितमुखि ईषद्धास्यवदने। हे स्मरहरमहिले मदनान्तकमोहिनि। हे मातः! ये ये जनाः वह्निसंस्थं[३] रकारोपरि स्थितम्। विधु[४]रतिललित विधुश्चन्द्रबिन्दुः, रतिर्दीर्घ ईकारस्ताभ्यां युक्तम्। वर्गाद्यं पञ्चवर्गाणामादिभूतं 'क'वर्णम्, 'क्रीँ' इति बीजं तत्त्रयं तस्य त्रितयम्। पश्चात् तदनन्तरं कूर्च्च-युग्मं हूँ बीजद्वयम्। लज्जाद्वन्द्वञ्च ह्रीँ बीजद्वयञ्च तदधः तत्पश्चात्। ठद्वयं[५] द्विठं 'स्वाहा'शब्दम्। योजयित्वा संयोज्य। स्वरूपं ध्वान्तधाराधररुचिरे

१. स्त्रीरूपां वा स्मरेद्देवीं पुंरूपां वा स्मरेत् प्रिये।
स्मरेद् वा निष्कलं ब्रह्म सच्चिदानन्दविग्रहम्॥

२. तस्माद् ज्ञानासिना तूर्णमशेषं कर्म्मबन्धनम्।
कामाकामकृतं छित्वा शुद्धश्चात्मनि तिष्ठति॥ (शिवधर्म्मोत्तरे)
तथा च योगिनीतन्त्रे—
पापपुण्यं पशुं हत्वा ज्ञानखड्गेन शाम्भवि॥

३. रो रक्तः क्रोधनी रेफः पावकस्तैजसो मतः॥ (तन्त्राभिधानम्)

४. ईस्त्रिमूर्त्तिर्महामाया....रतिश्च पौण्ड्रवर्द्धनः॥ (तदेव)

५. द्विठः स्वाहानलप्रिया॥ (वर्णाभिधानम्)

इत्यादि त्वदीय-द्वाविंशत्यक्षर-मन्त्रघटितं रूपम्। भावयन्तः[1] ध्यायन्तः जपन्ति क्रीँ क्रीँ क्रीँ इत्यादि स्वाहान्तं द्वाविंशत्यक्षरीं विद्याराज्ञीं पुनः पुनः उच्चारयन्ति, ते साधकाः लक्ष्मीलास्यलीलाकमलदलदृशः लक्ष्म्याः या नृत्यक्रीडा, सा यत्र कमले पद्मे, तद्दलमिव पत्रमिव दृशो चक्षूंषि येषां तथाविधाः। कामरूपाः कामदेवसदृशकमनीयरूपा भवन्ति ॥ ५ ॥

## स्वरूपव्याख्या ॥ ५ ॥

हे स्मितमुखि नित्यानन्दरूपिणि। स्मरहरमहिले स्मरहरः कामनाशकः हरस्तस्य महिला शक्तिः, स्वीयसाधकानां कामक्रोधादिनाशिनीति भावः। हे मातः ये ये[2] ये केचित् साधका नराधमा अपि यदि तव वह्निसंस्थं तेजोमयम्। विधुरतिललितं शैत्यसौन्दर्ययुक्तम्। वर्गाद्यं सृष्टेः आदिभूतं चिन्मयरूपम्। तत्त्रयं सत्त्वरजस्तमोभेदेन त्रिविधरूपम्। पश्चात् तथा कूर्च्चयुग्मं शब्दब्रह्मरूपम्। लज्जाद्वन्द्वञ्च मायाशबलब्रह्मरूपञ्च। तदधः ठद्वयं योजयित्वा स्वाहा वह्नेः प्रकाशशक्तिस्तया सह ते स्वप्रकाशरूपं स्वरूपं[3] स्वस्य आत्मनः रूपम्, जीवात्मना सह अभेदम्। भावयन्तो

---

१. क्रीँकारो मस्तकं देवि क्रीँकारश्च ललाटकम्।
स्वाशब्देन पदद्वन्द्वं हाकारेण नखस्तथा ॥
इत्यादि शाक्तानन्दतरङ्गिण्याः नवमपटले द्रष्टव्यम्।

२. महामहाब्रह्मविद्या विद्येयं कालिका मता।
यामासाद्य च निर्वाणमुक्तिमेति नराधमः ॥
तथा च कालीकुलसर्वस्वे—
श्रद्धयाश्रद्धया वापि यः कश्चिद् मानवः स्मरेत्।
दुर्गञ्च दुर्गतिं जित्वा स याति परमां गतिम् ॥

३. सर्वदा कालीरूपमात्मनं विभावयेत् ॥ (कालिकोपनिषत्)
तथा च सहस्रनामस्तोत्रे—
आत्मानं कालिकात्मानं भावयन् स्तौति यः शिवाम्।
शिवोपमं गुरुं ध्यात्वा स एव श्रीसदाशिवः ॥

जपन्ति अनुध्यायन्ति, ते साधकाः लक्ष्मीलास्यलीला[1] लक्ष्म्याः श्रियः, लास्यं नृत्यम्, लीला क्रीडा रमणञ्च इत्यर्थः, लक्ष्म्या नृत्यादिविहार इति भावः। तस्या आधारभूतो यः कमलदृक् कमलाक्षः विष्णुस्तत्सदृशाः। उक्तञ्च देवीमाहात्म्ये—'श्रीः कैटभारिहृदयैककृताधिवासा'। कामरूपाः स्वेच्छानुसारेण शरीरग्रहणसमर्था भवन्ति। यथा पुण्डरीकाक्षो विष्णुः स्वेच्छया मत्स्य-कूर्म्म-वराहादिदशविधमूर्त्तीन् तथा मोहिनीमूर्त्तिञ्च दधार, तद्वत् कालीसाधकाः स्वेच्छानुसारेण मूर्त्ति परिग्रहीतुं शक्नुवन्तीति भावः। उक्तञ्च क्रमस्तोत्रे—

**ततः स्वनाम्नः शृणु मातरेतत् फलं चतुर्वर्गं मनन्ति सन्तः।**
**बीजत्रयं वै पुनरप्युपास्य सुराधिपत्यं लभते मुनीन्द्रः॥**
**पुनस्तथा कूर्च्चयुगं जपन्ति भवन्ति सिद्धा नरसिंहरूपाः[2]।**
**ततोऽपि लज्जाद्वयजापकत्वाद् लभन्ति सिद्धिं मनसा जनास्ते।**
**अन्ते पदं क्षिप्य विभा विभावसोस्तन्मन्त्रमुद्धारमिदं वदन्ति॥ ५॥**

**प्रत्येकं वा द्वयं वा त्रयमपि च परं बीजमत्यन्तगुह्यं**
**त्वन्नाम्ना योजयित्वा सकलमपि सदा भावयन्तो जपन्ति।**
**तेषां नेत्रारविन्दे विहरति कमला वक्त्रशुभ्रांशुबिम्बे**
**वाग्देवी देवि मुण्डस्रगतिशयलसत्कण्ठिपीनस्तनाढ्ये॥ ६॥**

---

तथा च योगिनीतन्त्रे—
क्षणं ब्रह्माहमस्मीति यः कुर्यादात्मचिन्तनम्।
तस्मै दद्यात् फलं देवी तस्यान्तं नैव गण्यते॥
आत्मदेहं स्वेष्टरूपं सदैव परिचिन्तयेत्।
ब्रह्माण्डञ्च तथा सर्वं स्वेष्टरूपं विचिन्तयेत्॥

१. निर्वाणतन्त्रे—अस्य ग्रहणमात्रेण नरो नारायणो भवेत्।

भैरवतन्त्रोक्तश्यामाकवचे च—
"नारायणोऽपि यद्धृत्वा नारी भूत्वा महेश्वरम्।
योगेशं क्षोभमनयत्…… …………… "॥

निर्वाणतन्त्रे च—
"ध्यानेन लभते सर्वं ध्यानेन विष्णुरूपकः"।

२. विष्णुरूपाः।

## टीका

हे देवि द्योतनशीले। हे मुण्डस्रगतिशयलसत्कण्ठि मुण्डमालिनि। हे पीनस्तनाढ्ये पीवरस्तनि। अत्यन्तगुह्यं साधकेतराणां समीपे अतीवगोपनीयम्। प्रत्येकं[1] वा पूर्वोक्तानां बीजानामेकैकम्। द्वयं वा द्व्यक्षरं वा। त्रयमपि त्र्यक्षरमपि। त्वन्नाम्ना सम्बोधनान्तेन दक्षिणकालिकेति नाम्ना। योजयित्वा एकाक्षरं द्व्यक्षरं त्र्यक्षरं पुटितं कृत्वा। सकलमपि द्वाविंशत्यक्षरात्मकविद्याराज्ञीं वा। भावयन्तः[2] तत्तन्मन्त्रार्थवाच्यं त्वद्ध्यानोक्तं तव नवघननील-दिगम्बरी-पीनस्तनी-मुण्डमालिनी-मुक्तकेशीरूपम्। ध्यायन्तः पूर्वोक्तमन्त्राणां मन्त्रमेकं जपन्ति च, तेषां साधकानाम्। नेत्रारविन्दे नयनपद्मे। कमला लक्ष्मीः। विहरति सदैव तिष्ठति। तथा तेषां वक्त्रशुभ्रांशुबिम्बे मुखचन्द्रे। वाग्देवी सरस्वती च विहरति विहारं करोति। ते धनवन्तो विद्यावन्तश्च भवन्ति इति भावः। श्रीसुन्दरीपक्षे तु—हे देवि त्रिपुरसुन्दरि ये साधकाः 'सकलं' इति त्र्यक्षरबीजं तव ह्रीँकार इति नाम्ना योजयित्वा प्रत्येकं केवलं 'सकलह्रीँ' इति शक्तिकूटाख्यमन्त्रम्, अथवा कामराज-कूटसहितं कूटद्वयं किं वा वाग्भवकामराजशक्त्याख्यकूटत्रयात्मकं पञ्चदशाक्षरमन्त्रराजम्। त्वां ध्यायन् जपन्ति तेषां नेत्रारविन्दे इत्यादि सर्वं पूर्ववत् ॥ ६ ॥

## स्वरूपव्याख्या ॥ ६ ॥

हे देवि स्वप्रकाशरूपिणि। हे मुण्डस्रगतिशयलसत्कण्ठि हे पञ्चाशद्वर्ण[3]-

---

१. अथ सर्वां विद्यां प्रथममेकं द्वयं वा बीजत्रयपुटितं नाम वा जपेद् गतिस्तस्यास्ति इति कालिकाश्रुतौ।

२. यस्य यस्य च मन्त्रस्य उद्दिष्टा या च देवता।
चिन्तयित्वा तदाकारं मनसा जपमाचरेत् ॥ (भूतशुद्धितन्त्रम्)

३. पञ्चाशद्वर्णमुण्डालीं गलद्रुधिरचर्चिताम्। (निरुत्तरतन्त्रम्)
मम कण्ठे स्थितं बीजं पञ्चाशद्वर्णमद्भुतम् ॥ (कामधेनुतन्त्रम्)
तथा च विश्वसारतन्त्रे—
परानन्दमयं ब्रह्म शब्दब्रह्मविभूषितम्।
आत्मनो देहमध्ये तु सर्वमन्त्रात्मकं प्रिये ॥

मयि शब्दब्रह्मरूपिणि। हे पीनस्तनाढ्ये स्तन्यरूपाहार्यादिदानेन त्रिजगतां पालयित्रि तथा स्तन्यामृतदानेन साधकानां मोक्षदात्रि च। मातस्तव प्रत्येकं वा द्वयं वा त्रयमपि च परम् अत्यन्तगुह्यं सकलं सगुणम्। बीजं तव प्राज्ञतैजसविश्वाख्य-व्यष्टिरूपं तथा ईश-सूत्र-विराटाख्य-समष्टिभूत-मूर्त्तीश्च[1] भावयन्तः जपन्ति, श्रवण-मनन-निदिध्यासनात् सदा चिन्तयन्ति। तेषां ज्ञानयोगिनां नेत्रारविन्दे कमला विहरति[2] तेषां कृपादृष्टिपातेन अन्येषामपि धनैश्वर्यं भवति का कथा आत्मनाम् इति भावः। वक्त्र-शुभ्रांशुबिम्बे वाग्देवी विहरति तेषां गद्यपद्यमयीवाणी भवतीति भावः। अथवा हे मातः! ये जनास्तव सकलं सगुणं शब्दब्रह्ममयरूपं स्वात्माभेदेन चिन्तयन्त इमान् मन्त्रान् जपन्ति तेषां साधकानां नेत्रारविन्दे इत्यादि ॥ ६ ॥

**गतासूनां बाहुप्रकरकृतकाञ्चीपरिलस-**
**न्नितम्बां दिग्वस्त्रां त्रिभुवनविधात्रीं त्रिनयनाम्।**
**श्मशानस्थे तल्पे शवहृदि महाकालसुरत-**
**प्रयुक्तां त्वां ध्यायन् जननि जडचेता अपि कविः ॥ ७ ॥**

## टीका

हे जननि त्रिजगतां सृष्टिकर्त्रि। गतासूनां मृतानाम्। बाहुप्रकर-

---

राधातन्त्रे च—
अकारादिक्षकारान्ता पञ्चाशन्मातृकाक्षरा।
अव्यया अपरिच्छिन्ना त्रिपुराकण्ठसंस्थिता।
शुक्लाभा रक्तवर्णाभा पीताभा कृष्णरूपिणी॥

१. प्राज्ञस्तु कारणात्मा स्यात् सूक्ष्मदेही तु तैजसः।
स्थूलदेही तु विश्वाख्यस्त्रिविधः परिकीर्त्तितः॥
एवमीशोऽपि सम्प्रोक्त ईश-सूत्र-विराट्-पदैः।
प्रथमो व्यष्टिरूपस्तु समष्ट्यात्मा परः स्मृतः॥ (देवीगीता)

२. स्पर्द्धामुद्धूय कमला वाग्देवीमन्दिरे मुखे।
पौत्रान्तं स्थैर्य्यमास्थाय निवसत्येव निश्चितम्॥ (भैरवतन्त्रम्)

कृतकाञ्चीपरिलसन्नितम्बां करसमूहरचितकटिभूषणशोभमाननितम्बाम् । दिग्वस्त्रां दिगम्बरीं त्रिभुवनविधात्रीं त्रिजगतां भोगमोक्षविधानकर्त्रीम् । त्रिनयनां[1] शशिसूर्याग्निनेत्राम् । श्मशानस्थे शवहृदि तल्पे श्मशानस्थशवरूपसदाशिवशय्यायाम् । महाकालसुरतप्रयुक्तां परमशिवेन सह रतिक्रीडाभिः निविष्टाम् । त्वां ध्यायन् चिन्तयन् जनः । जडचेता मन्दबुद्धिः सन्नपि कविः काव्यरचनाकुशलो भवति ॥ ७ ॥

## स्वरूपव्याख्या ॥ ७ ॥

हे जननि चराचराणां उत्पादयित्रि । गतासूनां मृतानां बाहुप्रकरकृतकाञ्चीपरिलसन्नितम्बां[2] सर्वे जीवाः कल्पावसाने स्थूलदेहान् त्यक्त्वा स्वस्वकर्म्मभिः सह लिङ्गदेहमाश्रित्य सगुणब्रह्मरूपिण्याः कारणदेहस्य अविद्यामयांशे पुनः कल्पारम्भपर्य्यन्तम् आमोक्षं अवतिष्ठन्ते, अत एवात्र मृतजीवानां प्रधानकर्म्मसाधनभूतैः करसमूहैः विराट्रूपिण्या महादेव्याः गर्भधारणयोग्यनिम्नोदरस्य तथा योनेश्च ऊर्ध्वस्थितकटिप्रदेशे काञ्ची कल्पिता इति भावः । दिग्वस्त्रां वस्त्रं मायावरणम्, तेन शून्यां मायातीतामित्यर्थः । त्रिभुवनविधात्रीं पुनः कल्पारम्भे जीवानां स्वस्वसञ्चितकर्म्मानुसारेण पुनर्ज्जन्मनां भोगानाञ्च विधानकर्त्रीम् । त्रिनयनां त्रिकालज्ञाम् । श्मशानस्थे[3] महाप्रलये सर्वभूतानि शवरूपैः शेरते लीयन्ते यस्मिन्, तत्

---

१. शशिसूर्य्याग्निभिर्नेत्रैरखिलं कालिका जगत् ।
सम्पश्यति यतस्तस्मात् कल्पितं नयनत्रयम् ॥ (महानिर्वाणतन्त्रम्)

२. कर्म्मणा जायते जन्तुः कर्म्मणैव विलीयते ।
देहे विनष्टे तत्कर्म्मं पुनर्द्देहे प्रलभ्यते ॥ (तदेव)
श्रीश्रीदेवीगीतायाञ्च—
तस्यां कर्माणि जीवानां जीवाः कालाश्च सञ्चरे ।
अभेदेन विलीनाः स्युः सुषुप्तौ व्यवहारवत् ॥
साहं सर्वं जगत् सृष्ट्वा तदन्तः प्रविशाम्यहम् ।
मायाकर्म्मादिसहिता गिरौ प्राणपुरःसरा ॥

३. महान्त्यपि च भूतानि प्रलये समुपस्थिते ।
शेरतेऽत्र शवो भूत्वा श्मशानन्तु ततो भवेत् ॥

स्थानं तस्मिन् महाकाशे। शवहृदि तल्पे[1] शवः निर्गुणब्रह्म, तल्पे आधारे, निर्गुणब्रह्मरूपाधारे, निर्गुणब्रह्मरूपस्वीयपदे अवस्थिता सतीत्यर्थः। महाकालसुरतप्रयुक्तां कल्पावसाने सृष्ट्यादिकार्य्याभावात्, निष्क्रियत्वाच्च परमशिवेन सह अभिन्नतया अखण्डानन्दमनुभवन्तीम्। एवं ध्यायन् सच्चिदानन्दरूपिणीं त्वां चिन्तनेन प्रत्यक्षीकुर्वन्। जडचेता विषयरागोपहतचित्तो जनोऽपि। कविः महाज्ञानी भवतीति भावः ॥ ७ ॥

**शिवाभिर्घोराभिः शवनिवहमुण्डास्थिनिकरैः**
**परं सङ्कीर्णायां प्रकटित-चितायां हरवधूम्।**
**प्रविष्टां सन्तुष्टामुपरि सुरतेनातियुवतीं**
**सदा त्वां ध्यायन्ति क्वचिदपि न तेषां परिभवः ॥ ८ ॥**

### टीका

घोराभिः भीमाभिः। शिवाभिः शृगालैः। शवनिवहमुण्डास्थिनिकरैः शवसमूहानां कपालैः कङ्कालैश्च। परम् अत्यन्तम्। सङ्कीर्णायां सङ्कुलायाम्। प्रकटितचितायां प्रविष्टां कृतप्रवेशाम्, श्मशानवह्निमध्यस्थामित्यर्थः। उपरिसुरतेन सन्तुष्टां महाकालेन सह विपरीतविहारेण आनन्दिताम्। अतियुवतीं[2] बाल्यवार्द्धक्याद्यसंस्पृष्टाम्। हरवधूं कालमोहिनीम्। त्वां सदा ध्यायन्ति अविश्रामं चिन्तयन्ति। तेषां त्वत्साधकानाम्। क्वचिदपि इहामुत्र वा। परिभवः अनादरो न स्यादित्यर्थः ॥ ८ ॥

### स्वरूपव्याख्या ॥ ८ ॥

घोराभिः भयङ्कराभिः अतीवदुर्द्धर्षिभिः। शिवाभिः शिवप्रकृतिभिः, अपञ्चीकृतमहाभूतैरित्यर्थः। शवनिवहमुण्डास्थिनिकरैः, अत्र अस्थिकङ्कालानां

---

१. शव इत्यक्षरे ब्रह्मवाचकः प्रेतनिर्णयः ॥ (गायत्रीतन्त्रम्)
गन्धर्वतन्त्रे च—
या शय्या परमेशानि स एव श्रीसदाशिवः।
तस्योपरि महेशानि सूक्ष्मां त्रिपुरसुन्दरीम् ॥

२. आद्याप्यशेषजगतां नवयौवनासि ॥ (शारदातिलकम्)

श्वेतवर्णत्वेन सत्त्वगुणं सूचितम्, अत एव महाप्रलये मृतानां जीवानां सत्त्वादि-गुणसमूहैः। परं सङ्कीर्णायाम् अत्यन्तसङ्कुलायां युक्तायाम्। प्रकटितचितायां[1] स्वप्रकाशरूपायां चिच्छक्तौ। प्रविष्टाम् अधिष्ठिताम्। उपरि सुरतेन सन्तुष्टां[2] परमशिवमभिभूय स्वेच्छया सृष्टि-स्थिति-लयादि-कार्य्येषु रममाणाम्। अति-युवतीं सदैव एकभावापन्नाम् अव्ययामित्यर्थः। हरवधूं तत्त्वज्ञानप्रदानेन जीवानां त्रितापं हरतीति हरस्तस्य वधूः शक्तिस्तां जीवानां मुक्तिदात्री-मित्यर्थः। एवम्भूतां चिदानन्दमयीं त्वां ये साधकाः सदा ध्यायन्ति, अहरहः निश्चलचेतसा प्रत्यक्षीकुर्व्वन्ति। तेषां क्वचिदपि कस्यामपि योनौ। परिभव इत्थम्भूतं जन्म पुनर्ज्जन्म न भवति, ते निर्वाणमोक्षं लभन्त इत्यर्थः॥ ८॥

**वदामस्ते किं वा जननि वयमुच्चैर्ज्जडधियो**
**न धाता नापीशो हरिरपि न ते वेत्ति परमम्।**
**तथापि त्वद्भक्तिः मुखरयति चास्माकममिते**
**तदेतत् क्षन्तव्यं न खलु पशुरोषः समुचितः॥ ९॥**

**टीका**

हे अमिते[3] इयत्तारहिते। हे जननि त्रिजगताम् उत्पादयित्रि। ते तव

---

१. चितिरूपेण या कृत्स्नम् एतद्व्याप्य स्थिता जगत्॥ (श्रीश्रीचण्डी)

२. वामा या दक्षिणं जित्वा महामोक्षप्रदायिनी॥ (निर्वाणतन्त्रम्)
तथा गन्धर्वतन्त्रे—
अधःकृत्वा तु पुरुषं हकारार्द्धस्वरूपिणी।
विपरीतेन रमते वह्नीन्द्वर्कस्वरूपिणी॥
निरुत्तरतन्त्रे च—
विपरीतरता काली निर्गुणा सगुणा यदा॥
वासिष्ठरामायणे च—
अस्वभावात्मता सर्गः स्वभावैकात्मता शिवः॥

३. अमा स्यान्निर्गुणे सापि अनिरुद्धसरस्वती॥ (निरुत्तरतन्त्रम्)
महाकालसंहितायाम्—
अचिन्त्यामिताकारशक्तिस्वरूपा प्रतिव्यक्त्यधिष्ठानसत्त्वैकमूर्त्तिः।
गुणातीतनिर्द्वन्द्वबोधैकगम्या त्वमेका परब्रह्मरूपेण सिद्धा॥

परमं यथार्थतत्त्वम्। धाता ब्रह्मा न वेत्ति, न जानाति, ईशो रुद्रः अपि न जानाति, हरिः विष्णुः अपि न वेत्ति। उच्चैः अत्यन्तं जडधियः मन्दबुद्धयो वयं ते तव सम्बन्धे किं वदामः। तथापि अज्ञत्वेऽपि त्वद्भक्तिस्तव स्तवनोद्देश्यक-प्रवृत्तिः। अस्मान् मुखरयति स्तुतिवचनेषु प्रेरयति। तत् तस्माद्धेतोः। अस्माकमेतत् तदयोग्यं कर्म्मं। क्षन्तव्यं सहनीयम्। खलु निश्चितम्। पशुरोषः अज्ञानेषु कोपः, न समुचितः न योग्यो भवति ॥ ९ ॥

## स्वरूपव्याख्या ॥ ९ ॥

हे अमिते गुणपरिच्छेदरहिते, निर्गुणे इत्यर्थः। हे जननि[1] हे ब्रह्मविष्णु-रुद्रादीनामस्माकं च उत्पादयित्रि। अत एव ते तव परमं परमतत्त्वं धाता जीवानां कर्म्मानुसारेण जन्मादिविधानकर्त्ता ब्रह्मा न वेत्ति न जानाति। ईशः ऐशीशक्तिसम्पन्नरुद्रोऽपि न वेत्ति। हरिः जीवानां त्रितापहारको विष्णु-रपि न वेत्ति। यतस्त्वं तेषामपि जननी। अत एव जगन्मातुस्तव स्वरूप-तत्त्वस्य ज्ञानम् एतेषु कथं सम्भवति, स्वस्वजनन्याः जन्मकर्म्मादिवेदनं सन्तानानाम् अतीव असम्भवमित्यर्थः। उच्चैः जडधियो वयं ते किं वदामः? यतो ब्रह्मादयो देवेशास्तव स्वरूपं न जानन्ति, किञ्चिल्लौकिकमात्रज्ञानवन्तो वयं तव स्वरूप-कथने कथं समर्था भवाम इति भावः। तथापि त्वद्भक्ति-र्मुखरयति तव गुणकथने अयोग्यांस्तथापि तव विषयिणी भक्तिः किञ्चिद्

---

1. एकानेका सूक्ष्मरूपाविकारा ब्रह्माण्डानां कोटि कोटि प्रसूषे।
   कोऽहं विष्णुः को परो वा शिवाख्यो देवाश्चान्ये स्तोतुमीशा भवेम ॥
   (देवीसूक्तम्)

   तथा च देवीमाहात्म्ये—
   विष्णोः शरीरग्रहणमहमीशान एव च।
   कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत् ॥
   विष्णुयामले च—
   मातस्त्वत्परमं रूपं न च जानाति कश्चन।
   काल्यादिस्थूलयद्रूपं तदर्च्चन्ति दिवौकसः ॥
   पुनः महाकालीस्तोत्रे च—
   यदा नैव धाता न विष्णुर्न रुद्रो न काली न वा पञ्चभूतानि चासन्।
   तदा कारणीभूतसत्त्वैकमूर्त्तिस्त्वमेका परब्रह्मरूपेण सिद्धा ॥

गुणकथने अस्मान् प्रेरयति। तद् अस्माकमेतत् क्षन्तव्यं पशुरोषो न समुचितः, न योग्यो भवति ॥ ९ ॥

**समन्तादापीनस्तनजघनधृग् यौवनवती-**
**रतासक्तः नक्तं यदि जपति भक्तस्तव मनुम्।**
**विवासास्त्वां ध्यायन् गलितचिकुरस्तस्य वशगाः**
**समस्ताः सिद्धौघा भुवि चिरतरं जीवति कविः ॥ १० ॥**

**टीका**

हे मातः भक्तः[1] वीराचाररतः तव साधकः। यदि नक्तं[2] निशीथे। समन्तादापीनस्तनजघनधृग्यौवनवतीरतासक्तः सर्वतः सम्यक् पीवरस्तनजघनधारिण्या युवत्या सह मैथुनरतः सन् आनन्दमयो भूत्वा। विवासा दिगम्बरः गलितचिकुरः मुक्तकेशः सन्। त्वां महाकालेन सह सदा सुरतानन्दनिरतां ध्यायन् स्वीयहृदि चिन्तयन् प्रत्यक्षीकुर्वन्। तव मनुं तव पूर्वोक्तमन्त्रराजं जपति। समस्ताः सिद्धौघाः सर्वार्थसिद्धयस्तस्य वीरसाधकस्य वशगा वशीभूता भवन्ति। स च कविः सन् भुवि पृथिव्यां चिरतरं सुदीर्घकालं व्याप्य जीवति ॥ १० ॥

**स्वरूपव्याख्या ॥ १० ॥**

अस्मिन् लययोगो वर्ण्यते। हे मातः! जननि। भक्तो दिव्याचाररतो योगी

---

१. अभिषेककृतो मन्त्री कुलपूजां समाचरेत्।
कुलाचारं विना देवि कालीमन्त्रं न सिद्ध्यति ॥ (निरुत्तरतन्त्रम्)

२. रात्रौ नग्नः शयानश्च मैथुने सुव्यवस्थितः।
अथवा मुक्तकेशश्च तस्य सर्वार्थसिद्धयः ॥ (फेत्कारिणीतन्त्रम्)

कालीक्रमे च—
स्वाचारनिरतः नित्यं दिवा लक्षं जपेत् पशुः।
दिव्यो वाप्यथवा वीरो रात्रौ लक्षजपञ्चरेत् ॥

कुब्जिकातन्त्रे च—
पशुभावरता ये च केवलं पशुरूपिणः।
रात्रौ मन्त्रञ्च मालाञ्च न स्पृशेत्तु कदाचन ॥

साधकः। यदि नक्तं[1] निशायां ब्रह्मविद्यालक्षणायां सर्वभूतनिशायां प्रबुद्धः सन् इत्यर्थः। समन्तादापीनस्तनजघनधृग्यौवनवतीरतासक्तः[2] सर्वदिग्विदिक्स्थितानां जीवानाम् उत्पादयित्र्या पालयित्र्या च नित्ययुवतीरूपया कुलकुण्डलिनीशक्त्या सह जीवात्मानं परमात्मनि लीनं कुर्वन् सन्। अत्र स्तनजघनधृक्[3] इत्यनेन कुलकुण्डलिन्याः जगतां सृष्टि-स्थिति-कर्त्तृत्वं सूचितम्। विवासा विगतं वासो मायावरणो यस्य तथाभूतः प्रबुद्ध इत्यर्थः। गलितचिकुरः गलितं नष्टं चिकुरत्वं चापल्यं यस्य स निश्चलचित्तः सन्। त्वां परमशिवेन सह सामरस्यानन्दनिरतां त्वाम्। चिन्तयन् तव मन्त्रराजं मनसा जपति, स तत्त्वज्ञानी भूत्वा दिव्यौघसिद्धौघमानवौघसदृशचिरजीवी भवतीत्यर्थः। समस्ताः सिद्धौघाः, अत्र बहुवचनप्रयोगेन दिव्यसिद्धमानवौघानां ग्रहणं बोद्धव्यम् ॥ १० ॥

**समाः सुस्थीभूतो जपति विपरीतां यदि सदा**
**विचिन्त्य त्वां ध्यायन्नतिशयमहाकालसुरताम्।**
**तदा तस्य क्षौणीतलविहरमाणस्य विदुषः**
**कराम्भोजे वश्या पुरहरवधू सिद्धिनिवहाः ॥ ११ ॥**

---

१. या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी ॥ (श्रीमद्भगवद्गीता)

२. योनिमुद्रां समासाद्य स्वयं शक्तिमयो भवेत्।
सुश्रृङ्गाररसेनैव विहरेत् परमात्मनि ॥
आनन्दमयः संभूय ऐक्यं ब्रह्मणि सम्भवेत् ॥ (घेरण्डसंहिता)
तथा च गोरक्षसंहितायाम्—
जीवेन सहितां शक्तिं समुत्थाप्य शिरोऽम्बुजे।
शक्तिमयः स्वयं भूत्वा परशिवेन सङ्गमम्।
नानासुखं विहारञ्च चिन्तयेत् परमं पदम् ॥

३. ध्यायेत् कुण्डलिनीं देवीम् इष्टदेवस्वरूपिणीम्।
सदा षोडशवर्षीयां पीनोन्नतपयोधराम् ॥
श्यामां सूक्ष्मां सृष्टिरूपां सृष्टि-स्थिति-लयात्मिकाम् ॥ (तन्त्रकल्पद्रुमः)

## टीका, स्वरूपव्याख्या च ॥ ११ ॥

हे पुरहरवधू ! हे त्रिपुरहरसुन्दरि ! सुस्थीभूतो[१] निश्चलचित्तो यदि विपरीतां विपरीतभावापन्नाम्, अतिशयमहाकालसुरतां कामेश्वरमहाकालेन सह अत्यर्थं रतानन्दनिरताम्, सृष्ट्युन्मुखां त्वां ध्यायन्[२] सन् तव मन्त्रार्थं चिन्तयन्। समाः संवत्सरं व्याप्य सदा सर्वदा विचिन्त्य त्वां ध्यायन् जपति[३], तव मन्त्रजपं करोति, तदा तर्हि क्षौणीतलविहरमाणस्य भूतले सुखेन निवसतो बिदुषः पण्डितस्य तस्य कराम्भोजे करकमलतले सिद्धिनिवहाः श्रीविद्याया इच्छासिद्ध्यादिशक्तिसमूहाः। वश्या वशीभूता भवन्तीत्यर्थः। महासिद्धिनिवहा इति पाठे सालोक्य-सारूप्य-सायुज्य-निर्वाणाख्यास्तस्य आयत्ता भवन्तीत्यर्थः ॥ ११ ॥

**प्रसूते संसारं जननि भवती पालयति च**
**समस्तं क्षित्यादि प्रलयसमये संहरति च।**
**अतस्त्वं धातासि त्रिभुवनपतिः श्रीपतिरपि**
**महेशोऽपि प्रायः सकलमपि किं स्तौमि भवतीम् ॥ १२ ॥**

## टीका, स्वरूपव्याख्या च ॥ १२ ॥

हे जननि ! जगतां उत्पादयित्रि ! संसारं जगत्प्रपञ्चं प्रसूते भवती जनयति। अतस्त्वं धाता ब्रह्मा तस्य सृष्टिशक्तिरित्यर्थः। भवती जगतीं पालयति च, बिभर्त्ति च, अतः अस्माद्धेतोस्त्वं त्रिभुवनपतिः श्रीपतिरपि

---

१. शान्तः शुचिर्मिताहारो भूशायी भक्तिमान् वशी।
निर्द्वन्द्वः स्थिरधीर्म्मौनी संयतात्मा जपेत् प्रिये ॥ (कुलार्णवतन्त्रम्)

२. जपस्यादौ शिवां ध्यायेद् ध्यानस्यान्ते पुनर्जपेत्।
जपध्यानसमायुक्तः शीघ्रं सिध्यति साधकः ॥ (कौलावलीतन्त्रम्)

३. मनसा मन्त्रवर्णस्य चिन्तनं मानसं स्मृतम्।
वाचिकस्य शतं ज्ञेयम् एकोत्तरमुपांशुना।
तस्माच्छतगुणं प्रोक्तं मानसं जपमुत्तमम् ॥ (तदेव)

त्रिलोकीश्वरः विष्णुर्भवसि, तस्य जगत्पालनकारिणी वैष्णवीशक्तिस्त्वमसीत्यर्थः। प्रलयसमये जगत्संहारसमये। समस्तं क्षित्यादि पञ्चमहाभूतात्मकं जगत् संहरति स्वीयकारणदेहे लीनं करोति। अतस्त्वं महेशोऽपि रुद्रश्च भवसि, त्वं संहारशक्तिरिति भावः। सकलमपि स्थावरजङ्गमात्मकजगतो निमित्तकारणम् उपादानकारणञ्चासीति भावः। अतो भवतीं जगदेककारणभूताम् अद्वितीयां त्वाम्। किं स्तौमि तव स्वरूपाख्यानं किं करोमि। त्वमेव वाचातीता इति भावः। उक्तञ्च त्रिपुटास्तोत्रे—

**क्षितिस्त्वं विधाता जगत्सृष्टिकर्त्री त्वमापोऽपि विष्णुः जगत्पालिका च।**
**त्वमग्निस्तु रुद्रो जगत्क्षोभकर्त्री त्वमैश्वर्य्यरूपा वियद्वायुरूपा॥**

तथा च स्तोत्रान्तरे—

उत्पत्तिस्थितिसंहृतीर्घटयितुं धत्ते त्रिरूपां तनुम्।
त्रैगुण्याज्जगतस्त्वदीयविकृतिर्ब्रह्माच्युतः शूलभृत्॥ १२॥

**अनेके सेवन्ते भवदधिकगीर्वाणनिवहान्**
**विमूढास्ते मातः किमपि न हि जानन्ति परमम्।**
**समाराध्यामाद्यां हरिहरविरिञ्चादिविबुधैः**
**प्रपन्नोऽस्मि स्वैरं रतिरसमहानन्दनिरताम्॥ १३॥**

## टीका, स्वरूपव्याख्या च॥ १३॥

हे मातः! अनेके बहवो जनाः। भवदधिकगीर्वाणनिवहान् त्वदतिरिक्तदेवसमूहान्, सेवन्ते आराधयन्ति, विमूढाः विचारशून्यास्ते जनाः किमपि परमं[1] किञ्चिदपि परमतत्त्वं न हि जानन्ति, न विदन्ति हरिहरविरिञ्चादि-

---

१. कूर्मपुराणे श्रीकूर्म उवाच—
सर्ववेदान्तवेदेषु निश्चितं ब्रह्मवादिभिः।
एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम्॥
अनन्तमक्षरं ब्रह्म केवलं निष्कलं परम्।
योगिनस्तत् प्रपश्यन्ति महादेव्याः परं पदम्॥

विबुधैः[1] ब्रह्मविष्णुरुद्रादिसुरेशैः। समाराध्यां सदा उपास्याम्, आद्यां जगतः आदिकारणभूतां रतिरस[2]महानन्दनिरतां महाकालेन सह रतिविपरीत-रमणं तथा रसं मद्यपानं ताभ्याम् उत्पन्नं यन्महानन्दं तस्मिन् निरताम्। त्वां ब्रह्माद्यैराराध्यां चिदानन्दरूपिणीं भवतीं स्वैरम् अतिशयेन। प्रपन्नोऽस्मि शरणागतोऽस्मि।

**धरित्री कीलालं शुचिरपि समीरोऽपि गगनं**
**त्वमेका कल्याणी गिरिशरमणी कालि सकलम्।**
**स्तुतिः का ते मार्तनिजकरुणया मामगतिकं**
**प्रसन्ना त्वं भूया भवमनु न भूयान्मम जनुः ॥ १४ ॥**

---

परात्परतरं तत्त्वं शाश्वतं शिवमच्युतम्।
अनन्तं प्रकृतौ लीनं देव्यास्तत्परमं पदम्॥

शुभ्रं निरञ्जनं शुद्धं निर्गुणं द्वैतवर्ज्जितम्।
आत्मोपलब्धिविषयं देव्यास्तत्परमं पदम्॥

तत्रैव श्रीदेवीवचनम्—

यत्तु मे निष्कलं रूपं चिन्मयं केवलं परम्।
सर्वोपाधिविनिर्मुक्तमनन्तममृतं पदम्॥

ज्ञानेनैकेन तल्लभ्यम् अक्लेशेन परं पदम्।
ज्ञानमेव प्रपश्यन्तो मामेव प्रविशन्ति ते॥

तथा च योगिनीतन्त्रे—

परमानन्दकं रूपं जगतां कारणं महत्।
तस्या देव्यास्तु तद्रूपमुदयास्तविवर्ज्जितम्॥

१. महामहाब्रह्मविद्या विद्येयं कालिका मता।
यामासाद्य च निर्वाणमुक्तिमेति नराधमः॥

तथा च अर्गलास्तोत्रे—

चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि।
कृष्णेन संस्तुते देवि शश्वद्भक्त्या सदाम्बिके॥
हिमाचलसुतानाथसंस्तुते परमेश्वरि।

२. पीत्वा कुलरसं वीरो ब्रह्मध्यानमुपाश्रयेत्।
ब्रह्मध्यानं महेशानि ब्रह्मनिर्वाणकारणम्॥ (योगिनीतन्त्रम्)

## टीका, स्वरूपव्याख्या च ।। १४ ।।

हे कालि कालभयनिवारिणि । त्वं धरित्री[1] क्षितिः, कीलालं जलम्, शुचिः अग्निः, अपि समीरः वायुः, अपि गगनम् आकाशम्, एका अद्वितीया कल्याणी निर्वाणमोक्षदानेन जीवानां मङ्गलविधायिनी । गिरिशरमणी शिवानी, गिरौ कूटे शेते इति गिरिशः कूटस्थब्रह्म, तस्य रमणी ह्लादिनी-शक्तिः । त्वं निर्विकारापि[2] स्वकीयाघटन-घटनपटीयसीमायया क्षित्यादि-चतुर्विंशतितत्त्वरूपिणीत्यर्थः । सकलं सर्वं चराचरञ्च 'सर्वं खल्विदं ब्रह्म' इति श्रुतिः, 'सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते' इति चण्डी । हे मातः ते तव स्तुतिः का सर्व्वस्वरूपायास्तव स्तुतिर्न सम्भवतीति भावः । त्वं निजकरुणया स्वीयासाधारणकृपया । अगतिकं साधनहीनत्वादनुपायम् । मां प्रति प्रसन्ना भूयाः प्रसीद भवमनु संसारे इत्यर्थः, मम जनुः जन्म न भूयात् न भवतु मां स्वीयाभयपदे लीनं कुरु इत्यर्थः ।। १४ ।।

**श्मशानस्थः सुस्थो गलितचिकुरो दिक्पटधरः**
**सहस्रंत्वर्काणां निजगलितवीर्येण कुसुमम् ।**
**जपंस्त्वत्प्रत्येकं मनुमपि तव ध्याननिरतो**
**महाकालि स्वैरं स भवति धरित्रीपरिवृढः ।। १५ ।।**

## टीका

हे महाकालि महाकालशक्ते, तु पुनः, यो जनः[3] श्मशानस्थः प्रेतभूमौ अवस्थितः सुस्थः स्थिरचित्तः गलितचिकुरः मुक्तकेशः दिक्पटधरः दिगम्बरः

---

१. त्वं भूमिस्त्वं जलौघस्त्वमसि हुतवहस्त्वं जगद् वायुरूपा
त्वं चाकाशो मनश्च प्रकृतिरपि महत्पूर्विकाहङ्कृतिश्च ।
आत्मा चैवासि मातः परमपि भवती त्वत्परं नैव किञ्चित्
क्षन्तव्यो मेऽपराधः प्रकटितरदने कामरूपे कराले ।। (गुप्तार्णवतन्त्रम्)

२. एकानेका सूक्ष्मरूपाऽविकारा ब्रह्माण्डानां कोटि कोटि प्रसूषे । (देवीसूक्तम्)

३. श्मशानस्थो भवेत् सुस्थो गलितं चिकुरं चरेत् ।
दिगम्बरः सहस्रञ्च सूर्यपुष्पं समर्पयेत् ।।

सन् तव ध्याननिरतः त्वदीयं 'मेघाङ्गीं विगताम्बराम्' इत्यादि स्थूलरूपं चिन्तयन् त्वत् तव मनुमपि मन्त्रराज्ञीं च जपन् उच्चारयन् निजगलित-वीर्येण स्वीयस्खलितशुक्रेण तदनुलिप्तम् इत्यर्थः । अर्काणां सूर्यपुष्पाणाम्, आकन्द इति ख्यातानाम् । सहस्रकुसुमं दशशतसंख्यानि पुष्पाणि प्रत्येकम् एकैकं त्वामुद्दिश्य ददातीति शेषः, स साधकः स्वैरम् अनायासेन धरित्री-परिवृढो भूपतिर्भवति ॥ १५ ॥

## स्वरूपव्याख्या ॥ १५ ॥

तु पुनः दिव्यानां पक्षे । हे महाकालि परब्रह्मरूपिणि यो जनः श्मशा-नस्थः महाप्रलयसमये सर्वभूतानि शवरूपेण लीयन्ते यस्मिन् तत् श्मशानं परब्रह्म, तस्मिन् आसक्तचित्तः ब्रह्मपरायण इत्यर्थः । सुस्थः स्थिरचित्तः दिक्पटधरः मायावरणरहितः निर्विकारचित्तः । तव ध्याननिरतः त्वदीय-सच्चिदानन्दरूपं चिन्तयन् इत्यर्थः । उक्तञ्च रुद्रयामले—

**चिद्रूपां ज्ञाननिलयां चैतन्यानन्दविग्रहाम् ।**
**कोटिसौदामिनोभासां सर्वतत्त्वस्वरूपिणीम् ॥**
**आश्रित्य प्रजपेन्मन्त्रं कुलमार्गाश्रयो नरः ॥**

तव मनुमपि जपन् त्वदीयमन्त्रराजं मनसा उच्चारयन् सन् । निज-गलितवीर्येण[1] सहस्रारकमलात् स्वाभाविकक्षरितं यद् अमृतं तेन सह ।

---

स्ववीर्येण युतं कृत्वा प्रत्येकं प्रजपन् हुनेत् ।
ध्यात्वाभ्यर्च्य महाभक्त्या कुलालापः स्तवं पठेत् ॥ (महाकालसंहिता)

१. हृत्पद्ममासनं दद्यात् सहस्रारच्युतामृतैः ।
पाद्यं चरणयोर्दद्याद् मनस्त्वर्घ्यं निवेदयेत् ॥
चित्तं प्रकल्पयेत् पुष्पं धूपं प्राणान् प्रकल्पयेत् ॥ (महानिर्वाणतन्त्रम्)

'ब्रह्मरन्ध्रचन्द्रपात्रात् तर्पयेत् तारिणीं पराम् ।
तत्रस्थसूर्य्यपात्राच्च अर्घ्यं दद्यान्मनोहरम् ॥
दयाज्ञानक्षमापुष्पं पुष्पमिन्द्रियनिग्रहम् ।
ज्ञानदानपुण्यपुष्पम् अहिंसापुष्पमुत्तमम् ॥
आनन्दपुष्पं दातव्यं पुष्पञ्च साधकार्च्चनम् ।
दशपुष्पं यः प्रदद्यात् स गच्छेत् तारकापदम् ॥ (तारारहस्यम्)

अर्काणां सहस्रं कुसुमं ब्रह्मरन्ध्रावस्थितम्[1]। आदित्याख्यचित्तोद्भव-चित्त-वृत्तिरूपाणि दयाज्ञानक्षमादिरूपभावपुष्पाणि। प्रत्येकम् एकैकं त्वामुद्दिश्य ददाति, मानसोपचारविधिना चिदग्नौ तुभ्यं समर्पयति। स दिव्यसाधकः स्वच्छन्देन धरित्रीपरिवृढः धरित्र्याः पृथिव्याः पार्थिवदेहस्य इन्द्रियादि-वृत्तीनाम् अधिपो भूत्वा सहजावस्थां[2] प्राप्नोतीति भावः॥ १५॥

**गृहे सम्मार्ज्जन्या परिगलितवीर्य्यं हि चिकुरं**
**समूलं मध्याह्ने वितरति चितायां कुजदिने।**
**समुच्चार्य्य प्रेम्णा मनुमपि सकृत् कालि सततं**
**गजारूढो याति क्षितिपरिवृढः सत्कविवरः॥ १६॥**

## टीका

हे कालि कालनाशिनि। यो जनो वीरसाधकः। गृहे सम्मार्ज्जन्या परिगलितवीर्य्यम् अत्र गृहे मदनागारे सम्मार्ज्जनी लिङ्गम्, स्वशक्त्या रमण-जनितनिःसृतं शुक्रम्। तथा समूलं चिकुरं मूलेन सह उत्पाटितं केशञ्च। कुजदिने मङ्गलवासरे मध्याह्ने[3] दिनमध्यभागे अर्द्धरात्रे वा। प्रेम्णा भक्त्या

---

१. सूर्य्याग्रे वसते चित्तं चन्द्राग्रे जीवितं प्रिये। (ज्ञानसंकलिनीतन्त्रम्)
तथा च याज्ञवल्क्यसंहितायाम्—
इडायां चन्द्रमा ज्ञेयो पिङ्गलायां रविः स्मृतः।
उक्तञ्च प्राणाग्निहोत्रे—
तत्र सूर्य्योऽग्निर्नाम सूर्य्यमण्डलाकृतिः सहस्ररश्मिभिः परिवृढ एक ऋषि-र्भूत्वा मूर्ध्नि तिष्ठतीति।

२. उत्पन्नशक्तिबोधस्य त्यक्तनिःशेषकर्म्मणः।
योगिनः सहजावस्था स्वयमेवोपजायते॥
कालिका तनुतामेति चिदादित्यप्रकाशनात्॥ (महोपनिषत्)
उत्तमा सहजावस्था मध्यमा ध्यानधारणा।
जपस्तुतिः स्यादधमा होमपूजाधमाधमा॥ (कुलार्णवे)

३. नखं केशं स्ववीर्यञ्च यद्यत् सम्मार्ज्जनीगतम्।
मुक्तकेशो दिशावासो मूलमन्त्रपुरःसरः॥

तव मनुं ते मन्त्रं समुच्चार्य्यं चितायां श्मशाने सकृदपि[1] एकवारमपि वितरति, तुभ्यं निवेदयति, हि निश्चितं स जनः सत्कविवरः सत्कविश्रेष्ठः क्षितिपरिवृढः भूपतिश्च सन् सततं सर्वदा गजारूढः हस्त्यारूढः सन् याति सर्वत्र विचरतीत्यर्थः ॥ १६ ॥

## स्वरूपव्याख्या ॥ १६ ॥

हे कालि कालभयनिवारिणि । यो जनः दिव्याचाररतः साधकः । गृहे सहस्रदलकमलरूपब्रह्मसदने । सम्माज्र्जन्या परिगलितवीर्य्यं परमशिवेन कुलकुण्डलिन्या रमणोद्भूतं वीर्य्यामृतम् । समूलं चिकुरं चाञ्चल्यादिवृत्ति-सहितं मनः । कुजदिने मङ्गलवासरे मध्याह्ने द्विप्रहरे रात्रौ दिवसे वा । प्रेम्णा परया भक्त्या तव मनुं मन्त्रं समुच्चार्य्यं सकृदपि एकवारमपि, चितायां चिद्रूपायां त्वयि वितरति, विलीनं करोति, निर्बीजसमाधिं[2] करोतीति यावत् । स भुक्तिं मुक्तिं च लभत इत्यर्थः ॥ १६ ॥

**स्वपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो**
**पुरो ध्यायन् ध्यायन् यदि जपति भक्तस्तव मनुम् ।**
**स गन्धर्व्वश्रेणीपतिरपि कवित्वामृतनदी-**
**नदीनः पर्य्यन्ते परमपदलीनः प्रभवति ॥ १७ ॥**

---

कुजवारे मध्यरात्रे होमं कृत्वा श्मशानके ।
पठेन्नामसहस्रं यः पृथ्वीशाकर्षणञ्चरेत् ॥ (ककारकूटरहस्यम्)

१. सदाशिवेन देवेशि क्षणमात्रं रमेत् प्रिये ।
अमृतं जायते देवि तत्क्षणात् परमेश्वरि ॥
तदुद्भवामृतं देवि लाक्षारससमायुतम् ।
तेनामृतेन देवेशि तर्पयेत् परदेवताम् ॥ (गन्धर्वमालिका)

२. सर्ववृत्तिनिरोधाद् निर्बीजसमाधिः ॥ (पातञ्जलसूत्रम्)

## टीका

हे मातः। भक्तः वीरसाधकः। यदि स्वपुष्पैराकीर्णं[१] स्वयम्भुकुसुमैः व्याप्तं कुसुमधनुषो मन्दिर योनिं पुरः अग्रे ध्यायन् पुनः ध्यायन् पुनश्चिन्तयन्। तव मनुं अयुतसंख्यकमन्त्रं जपति, अहो आश्चर्यं स गन्धर्व्वश्रेणीपतिः गायकश्रेष्ठः, अपि च कवित्वामृतनदीनदीनः कवित्वामृतस्य नद्यस्तासां नदीनः समुद्रः अशेषकवित्वाधारः, पर्य्यन्ते देहावसाने परमपदलीनः प्रभवति तव उत्कृष्टपदे विलीनः सन् सृष्ट्यादिकार्य्ये समर्थो भवतीति भावः ॥१७॥

### स्वरूपव्याख्या ॥ १७ ॥

अस्मिन् योनिमुद्रासाधनं वर्ण्यते। उक्तञ्च शाक्तागमे—

**मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः।**
**लक्षकोटिजपेनापि तस्य विद्या न सिद्ध्यति ॥**

हे मातः। भक्त दिव्याचाररतः योगी साधकः। यदि स्वपुष्पैराकीर्णं स्वयम्भूलिङ्गरूपकुसुमेनाधिष्ठितम्। कुसुमधनुषो मन्दिरं मूलाधारस्थितत्रिकोणमण्डलम्, हृत्पद्मस्थितत्रिकोणमण्डलं वा। उक्तञ्च शिवसंहितायाम्—

**तस्मिन्नाधारपाथोजे कर्णिकायां सुशोभना।**
**त्रिकोणा वर्त्तते योनिः सर्वतन्त्रेषु गोपिता ॥**

पुनस्तत्रैव चतुर्थपटले—

**ब्रह्मयोनिगतं ध्यात्वा कामं बन्धूकसन्निभम्।**
**सूर्य्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ॥**

---

१. मातृकाभेदतन्त्रे—

विवाहितायाः कन्यायाः प्रथमं ऋतुसम्भवे।
तच्छोणितं महेशानि स्वपुष्पं सर्वमोहनम् ॥
रजःकीर्णभगं नार्य्याः ध्यायन् योऽयुतमाजपेत्।
स कवित्वेन रम्येण जनान्मोहयति ध्रुवम् ॥ (तन्त्रकल्पद्रुमः)

तस्योर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमा कला ।
तया पिहितमात्मानमेकीभूतं विचिन्तयेत् ॥

तथा च तारारहस्ये—

स्वकीयहृदये ध्यायेद् योगिमण्डलमुत्तमम् ।
रजोभिश्च समोपेतं त्रिकोणं सर्ववर्णकम् ॥

पुरो निजाग्रे ध्यायन् चिन्तयन्, ध्यायन् तव मन्त्रार्थघटितरूपञ्च तस्मिन् भावयन् । उक्तञ्च भूतशुद्धितन्त्रे—

यस्य यस्य च मन्त्रस्य उद्दिष्टा या च देवता ।
चिन्तयित्वा तदाकारं मनसा जपमाचरेत् ॥

कुलार्णवे च—

तन्निष्ठस्तद्गतप्राणः तच्चित्तस्तत्परायणः ।
तत्पदार्थानुसन्धानं कुर्व्वन् मन्त्रं जपेत् प्रिये ॥

तव मनुं तव मन्त्रराजं जपति शनैः शनैः मनसा जपति । उक्तञ्च तत्रैव 'शनैः शनैरविस्पष्टं न द्रुतं न विलम्बितम् । स गन्धर्व्वश्रेणोपतिः गायकश्रेष्ठः'—'गानात् परतरं न हि' इति दर्शनात्, अथवा चित्ररथगन्धर्वराज इव । अपि च कवित्वामृतनदोनदीनः महाकविकालिदास इव भवति, अपि च पर्य्यन्ते देहावसाने । परमपदलीनः[1] प्रभवति सच्चिदानन्दरूपायां त्वयि विलीनः सन् निर्वाणपदं लभत इति भावः । योनिमुद्रासाधनफलं शिवसंहितायाम्—"अभ्यासाज्जायते सिद्धिरभ्यासान्मोक्षमाप्नुयात्" इति ॥ १७ ॥

**त्रिपञ्चारे पीठे शवशिवहृदि स्मेरवदनां**
**महाकालेनोच्चैर्म्मदनरसलावण्यनिरताम् ।**
**समासक्तो नक्तं स्वयमपि रतानन्दनिरतो**
**जनो यो ध्यायेत्त्वामयि जननि स स्यात् स्मरहरः ॥ १८ ॥**

---

१. देवीगीतायां देवीवाक्यम्—

'तदैव तस्य चिन्मात्रे मद्रूपे विलयो भवेत्' ।
अपरं त्रयोदशश्लोकस्य टीकायां द्रष्टव्यम् ।

## टीका

अयि जननि हे मातः। यो जनः साधकः नक्तं रात्रौ समासक्तः त्वयि आसक्तचित्तः स्वयम् आत्मना अपि रतानन्दनिरतः सुरतानन्दयुक्तः सन्। त्रिपञ्चारे पीठे[1] पञ्चदशकोणयुक्ते यन्त्रे शवशिवहृदि शवरूपसदाशिवहृदये। स्मेरवदनां स्मितमुखीं महाकालेन परमशिवेन सह। उच्चैः अत्यन्तं मदनरसलावण्यनिरतां विपरीतरतिमाधुर्य्यासक्ताम्। त्वां ध्यायेत् चिन्तयेत्, स साधकः स्मरहरः स्यात्, साक्षात् शिवो भवेदित्यर्थः॥ १८॥

## स्वरूपव्याख्या ॥ १८ ॥

अयि जननि अस्माकम् उत्पादयित्रि। यो जनः नक्तम् अर्द्धरात्रौ। उक्तञ्च–

**महानिशायां ब्राह्मे वा मुहूर्त्ते ध्यानतत्परः।**
**तद्रूपं परमानन्दं तदा पश्यति निश्चितम्॥**

समासक्तः त्वयि एकाग्रचित्तः स्वयम् आत्मना अपि रतानन्दनिरतः[2] योनिमुद्राम् अवलम्ब्य स्वयं शक्तिमयो भूत्वा परात्मना सह लयरूपरतानन्दासक्तः सन् इत्यर्थः। त्रिपञ्चारे पीठे[3] अविद्यारूपवृत्तवेष्टिते, क्षित्याद्यष्ट-

---

१. आदौ त्रिकोणं विन्यस्य त्रिकोणं तद्बहिर्न्यसेत्।
ततो वै विलिखेन्मन्त्री त्रिकोणत्रयमुत्तमम्॥
मध्ये तु बैन्दवं चक्रं बीजमायाविभूषितम्।
षट्कोणात्तु बहिर्वृत्तं ततोऽष्टदलकं न्यसेत्॥
बहिर्वृत्तेन संयुक्तम् भूपुरैकेन संयुतम्।
ज्ञात्वैव मुक्तिमाप्नोति यन्त्रराजं न संशयः॥ (कालीतन्त्रम्)

२. योनिमुद्रां समासाद्य स्वयं शक्तिमयो भवेत्।
सुशृङ्गाररसेनैव विहरेत् परमात्मनि।
आनन्दमयः संभूय ऐक्यं ब्रह्मणि सम्भवेत्॥ (घेरण्डसंहिता)

३. तथा मन्त्रात्मकं चक्रं देवतायाः परं वपुः।
शिवशक्त्यात्मकं यन्त्ररूपिणी ब्रह्मरूपिणी॥
जिनदेहाख्ययन्त्रन्तु सर्वयन्त्रात् परं स्मृतम्॥ (गन्धर्वतन्त्रम्)

प्रकृतिरूपाष्टदलयुक्ते, पञ्चज्ञानेन्द्रिय-पञ्चकर्म्मेन्द्रिय-पञ्चप्राणरूपत्रिकोण-विशिष्टे, शुद्धसत्त्वात्मिकामायाप्रतिबिम्बितचैतन्यरूप-बिन्द्वात्मक-बीजभूषिते, क्षित्यादिपञ्चभूतात्मक[1]भूपुरान्विते स्वदेहयन्त्रे इत्यर्थः। शवशिवहृदि शववद्निष्क्रियस्य शिवस्य हृदये, स्वकीयनिर्गुणब्रह्मपदे स्थिता सती इच्छा-क्रियाज्ञानयुक्तया मायया शिवशक्तिविभागेन चणकाकारवद् द्विधा भूत्वा इत्यर्थः। महाकालेनोच्चैर्म्मदनरसलावण्यनिरतां[2] सगुणब्रह्मपरमशिवेन सह विपरीतभावेन नियतयुक्ताम्। स्मेरवदनां सदानन्दमयीं त्वां ब्रह्मरूपिणीं यो ध्यायेत्[3], स्वीयदेहयन्त्रे चिदाभासरूपेण स्थितत्वात् स्वात्माभेदेन त्वां चिन्तयेत्।

उक्तञ्च देवीमाहात्म्ये—

**या देवी सर्वभूतेषु छायारूपेण संस्थिता।**

गन्धर्वतन्त्रे च—

**निर्लेपं निर्गुणं शुद्धं स्वात्मानं त्रिपुरामयम्।**
**आत्माभेदेन सञ्चिन्त्य याति तन्मयतां नरः॥**

---

१. भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥ (गीतायाम्)
तथा च गन्धर्वतन्त्रे—
पञ्चप्राण-मनोबुद्धिदशेन्द्रियसमन्वितम्।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्॥
अनाद्यविद्यानिर्वाच्या कारणोपाधिरुच्यते।
उपाधित्रितयादन्यदात्मानमवधारय॥

२. यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी।
अधःकृत्वा तु पुरुषं सङ्गमेच्छाऽभवत्तदा॥
तदाक्रम्य स्वयं देवी भैरवोपरि संस्थिता।
सहजानन्दसन्दोहैः निजानन्दप्रवर्द्धिनी॥

३. अथवाद्वैतभावेन आत्मानं तन्मयं स्मरेत्।
अद्वैतभावसम्पन्नस्त्रिपुरीकृतविग्रहः।
आत्मन्येव यजेद्देवीं उपचारैर्यथाविधि॥ (गन्धर्वतन्त्रम्)

स स्मरहरः स्याद् अद्वैतभावसम्पन्नः साधकः परमात्मनि त्वयि लीनो भूत्वा कैवल्यपदं लभेदित्यर्थः ॥ १८ ॥

**सलोमास्थि स्वैरं पललमपि मार्ज्जारमसिते**
**परश्चोष्ट्रं मैषं नरमहिषयोश्छागमपि वा ।**
**बलिं ते पूजायामयि वितरतां मर्त्यवसतां**
**सतां सिद्धिः सर्वा प्रतिपदमपूर्वा प्रभवति ॥ १९ ॥**

## टीका

अयि असिते ! हे कालिके ! ते तव पूजायां नैमित्तिकार्च्चनायाम् । मार्ज्जारं[1] मार्ज्जारसम्बन्धि औष्ट्रम् उष्ट्रसम्बन्धि मैषं मेषसम्बन्धि नरमहिषयोः नर-महिषसम्बन्धि, अपि वा अथवा छागं छागसम्बन्धि सलोमास्थि लोमास्थि-सहितं परम् उत्कृष्टं पललं मांसं बलिं पूजोपहारं स्वैरं स्वच्छन्दं वितरतां ददतां साधकानां प्रतिपदं पदे पदे अपूर्वा आश्चर्य्या सर्वा सर्वविधा सिद्धिः कर्म्मसफलता प्रभवति प्रकर्षेण सम्पद्यते ॥ १९ ॥

## स्वरूपव्याख्या ॥ १९ ॥

अयि असिते[2] न सिता बद्धा असिता, नित्यमुक्तस्वभावा । ते तव पूजायाम् अन्तर्यागविधौ मानसपूजायामित्यर्थः । मार्ज्जारादिसम्बन्धि सलो-मास्थि पललं सर्वावयविसमन्वितान् षड्रिपुरूपमार्ज्जारादिपशून्[3] इत्यर्थः, । अत्र छागः कामः, महिषः क्रोधः, मार्ज्जारः लोभः, नरः मदः, मेषः मोहः, उष्ट्रः मात्सर्य्यम् इति गुणसाम्याद् बोध्यम् । बलिं वितरतां[4] कामादीनां

---

१. अस्थिलोमत्वचायुक्तं मांसं मार्ज्जारमेषयोः ।
उष्ट्रस्य महिषस्यापि बलिं यस्तु समर्पयेत् ॥
मातेव दक्षिणा तस्य मातेव हितकारिणी ॥ (श्यामारहस्यम्)

२. षिञ् बन्धने—क्तः=सितः । बद्धार्ज्जुनौ सितौ इत्यमरः ॥

३. कामक्रोधौ छागबाहौ बलिं दत्वा प्रपूजयेत् ॥ (अन्नदाकल्पः)

४. धर्म्माधर्म्महविर्दीप्ता वात्माग्नौ मनसा स्रुचा ।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥ स्वाहा ॥ (बृहन्नीलतन्त्रम्)

विनाशकामनया चिद्रूपायां त्वयि पूजोपहाररूपेण ददताम्। सतां मर्त्यवसतां साधुशीलानां जनानाम्। प्रतिपदं पदे पदे यथाक्रममित्यर्थः। अपूर्वा सर्वोत्कृष्टा सर्वा सिद्धिः पञ्चविधा मुक्तिः[1] प्रभवति प्रकर्षेण सम्पद्यते, एवंविधाः साधकाः सालोक्यादिका मुक्तीः लभन्त इत्यर्थः ॥ १९ ॥

**वशी लक्षं मन्त्रं प्रजपति हविष्याशनरतो**
**दिवा मातर्युष्मच्चरणयुगलध्याननिपुणः ।**
**परं नक्तं नग्नो निधुवनविनोदेन च मनुं**
**जपेल्लक्षं स स्यात् स्मरहरसमानः क्षितितले ॥ २० ॥**

## टीका

हे मातः। यो जनः वशी जितेन्द्रियः। हविष्याशनरतः[2] जपान्ते हविष्याशी सन्। दिवा दिवसे युष्मच्चरणयुगलध्याननिपुणस्तव पादपद्मद्वय-चिन्तायाम् एकान्तनिरतः, सन् लक्षं लक्षसंख्यकम् प्रजपति परं पुनश्च नक्तं रजन्यां नग्नो विवस्त्रः निधुवनविनोदेन[3] च सुरतप्रमोदेन विशिष्टः सन्। लक्षं मनुं लक्षसंख्यकमन्त्रं जपेत्, स क्षितितले पृथिव्यां स्मरहरसमानः शिवतुल्यः स्याद् भवेत्। 'सम्यक्' इति पाठे तु यथोक्तविधानेन सेतुमहा-सेतुकुल्लुकादिकं जप्त्वा इत्यर्थः ॥ २० ॥

## स्वरूपव्याख्या ॥ २० ॥

यो जितेन्द्रियः हविष्याशी साधकः दिवसे पश्वाचारेण तव पादपद्म-चिन्तायाम् एकान्तासक्तः सन् लक्षसंख्यकं तव मन्त्रं प्रजपति, पुनः रजन्यां कुलाचारेण नग्नः मायावरणरहितः निर्विकारः सन्नित्यर्थः। निधुवन-

---

१. सालोक्यमपि सारूप्यं साष्टर्यं सायुज्यमेव च ।
कैवल्यञ्चेति तां विद्धि मुक्तिं राघव पञ्चधा ॥ (श्रीशिवगीता)

२. यो हविष्याशनरतो दिवा देवीं स्मरन् जपेत् ।
नक्तं निधुवनासक्तः लक्षं स स्याद् धरापतिः ॥ (तन्त्रकल्पद्रुमः)

३. भवेन्निधुवनं कम्पे सुरते च नपुंसकम् ॥ (मेदिनी)

विनोदेन च निधुवनविनोदः[1] रमणं तेन विशिष्टः सन् परशक्त्यात्ममिथुन-संयोगानन्दरतः सन् इत्यर्थः। तव लक्षसंख्यकं मन्त्रं जपेत्, स पृथिव्यां स्मरहरसमानः शिवसदृशः जीवन्मुक्तो भवेदित्यर्थः ॥ २० ॥

**इदं स्तोत्रं मातस्तव मनुसमुद्धारणजनुः**
**स्वरूपाख्यं पादाम्बुजयुगलपूजाविधियुतम् ।**
**निशार्द्धं वा पूजासमयमधि वा यस्तु पठति**
**प्रलापस्तस्यापि प्रसरति कवित्वामृतरसः ॥ २१ ॥**

## टीका

हे मातः। यस्तु यो जनः पुनः। तव मनुसमुद्धारणजनुः तव मनूनां मन्त्राणां समुद्धारणे सम्यगुद्धारणे जनुः उत्पत्तिर्यस्य तत्। पादाम्बुजयुगल-पूजाविधियुतं तव श्रीपादपद्मस्य पूजानियमसहितम्। स्वरूपाख्यं तव स्वरू-पस्य स्वस्य आत्मनः रूपं तस्य, निजनिर्गुण[2]सगुणभेदेन स्थूलसूक्ष्मकारण-तुरीयात्मकध्यानस्य आख्या कथनं यस्मिन् तत्। इदं स्तोत्रं निशार्द्धं मध्यरात्रं पूजासमयं वा अधि अधिकृत्य पठति[3] उच्चैरुदीरयति। तस्य प्रलापः अनर्थकवाक्यमपि। कवित्वामृतरसः[4] कवित्वरूपसुधास्वादपूर्णः। प्रसरति निःसरति तस्य गद्यपद्यमयी वाणी भवतीत्यर्थः ॥ २१ ॥

---

१. परशक्त्यात्ममिथुनसंयोगानन्दनिर्भरः ।
य आस्ते मैथुनं तत् स्याद् अपरे स्त्रीनिषेवकाः ॥ (कुलार्णवतन्त्रम्)

२. यज्जीवब्रह्मणोरैक्यं सोऽहमस्मीति वेदनम् ।
तदेव निर्गुणं ध्यानमिति ब्रह्मविदो विदुः ॥ (शिवार्च्चनचन्द्रिका)

३. मनसा पठितं स्तोत्रं वाचा वापि मनुं जपेत् ।
उभयोर्निष्फलं देवि भिन्नभाण्डोदकं यथा ॥ (विशुद्धेश्वरतन्त्रम्)

४. यस्यैकवारपठनात् सर्वे विघ्नाः समाकुलाः ।
नश्यन्ति दहने दीप्ते पतङ्गा इव सर्वतः ।
गद्यपद्यमयी वाणी तस्य गङ्गाप्रवाहवत् ॥ (कालीकुलसर्वस्वम्)

**कुरङ्गाक्षीवृन्दं तमनुसरति प्रेमतरलं**
**वशस्तस्य क्षौणीपतिरपि कुबेरप्रतिनिधिः ।**
**रिपुः कारागारं कलयति च तं केलिकलया**
**चिरं जीवन्मुक्तः प्रभवति स भक्तः प्रतिजनुः ॥ २२ ॥**

**॥ इति श्रीमन्महाकालविरचितं श्रीमद्दक्षिणाकालिकायाः स्वरूपाख्यं स्तोत्रं समाप्तम् ॥**

## टीका, स्वरूपव्याख्या च ॥ २२ ॥

कुरङ्गाक्षीवृन्दं मृगनयनारमणीसमूहः । प्रेमतरलम् अनुरागचञ्चलं तं साधकम् अनुसरति अनुगच्छति, क्षौणीपतिः क्षितीश्वरः अपि तस्य वशः तद्वशीभूतः कुबेरप्रतिनिधिः स कुबेरतुल्यः धनवान् भवति । रिपुः तस्य शत्रुः तम् एतत्स्तोत्रपाटकं कारागारं बन्धनागारवद् भीषणम् । कलयति गणयति सः प्रतिजनुः जन्मनि जन्मनि भक्तः त्वयि भक्तिमान् सन् चिरं बहुकालं व्याप्य केलिकलया अनायासेन जीवन्मुक्तः विदेहमुक्तो भवति । अथवा स भक्तः केलिकलया क्रीडाकौतुकेन चिरं दीर्घकालं व्याप्य जीवन् प्राणान् धारयन् । मुक्तः देहान्ते मुक्ति प्राप्तः सन् प्रतिजनुः प्रतिनिवृत्तं जनुः जन्म यस्य स पुनर्जन्मरहितो भवति स ब्रह्मनिर्वाणं[1] प्राप्नोतीति भावः ॥ २२ ॥

**या काली कालकान्ता कलयति कलुषं कीर्त्तिता कालहन्त्री**
**या ताराताररूपा कमलजमहिता ब्रह्मविद्या परा च ।**
**श्रीविद्या मोक्षपन्था हरिहरनमिता साधकानां हितार्था**
**सा देवी सर्वरूपा जनयतु जननी स्तावकानां शुभानि ॥**

---

१. महाकालरुद्रोदितस्तोत्रमेतत् सदा भक्तिभावेन योऽध्येति भक्तः ।
न चापन्न शोको न रोगो न मृत्युर्भवेत् सिद्धिरन्ते च कैवल्यलाभः ॥
(महाकालसंहिता)

येनैव स्तवराजेन महाकालेन वर्णितम् ।
कालिकायाः स्वरूपञ्च भक्तानन्दविधायकम् ॥

स्तोत्रं यत् कर्पूराद्यं हि वासनापरिषेवितम् ।
व्याख्यान्तरेण भणितं सरलार्थविशोभितम् ॥

मुनिनेत्रभूधरेन्दुशाके माने मया कृता ।
साधकानां विबोधाय विमलानन्दस्वामिना ॥

व्याख्येयं स्वरूपार्था च विमलानन्ददायिनी ।
पठतामपि भक्तानां कण्ठे सदा विराजतु ॥

कोटालिपाडनगरे शुनकान्ववाये
गोष्ठीपतिर्हरिहरो महतां गरिष्ठः ।
कालीप्रसाद इति तत्कुलजो महात्मा
तस्यात्मजो रघुमणिर्विहितक्रियावान् ॥

तत्पुत्रो विमलानन्दस्वामी तच्चरणानुगः ।
सतीशचन्द्ररायाख्यः चौधुरीपदभूषितः ॥

कर्पूरादिस्तोत्रटीका तत्कृता कृतिनां मुदे ।
वर्त्ततां कालिकाप्रीत्यै चापि सञ्जायतामियम् ॥

॥ इति श्रीमद्दक्षिणकालिकायाः स्वरूपाख्यस्तोत्रस्य टीका
विमलानन्ददायिनी स्वरूपव्याख्या च समाप्ता ॥

॥ ॐ तत् सत् ॐ ॥

# ।। अथ नन्दिकेश्वरकाशिका ।।

## उपमन्युकृतटीकासंवलिता

**नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।**
**उद्धर्त्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥१॥**

**नमः शिवाय देवाय सर्वज्ञाय महात्मने ।**
**यस्योन्मेषनिमेषाभ्यां व्यक्ताव्यक्तमिदं जगत् ॥ १ ॥**

**गुरुं शिवं कुमारञ्च शिवतत्त्वविशारदम् ।**
**प्रणम्य नन्दिकेशादीन् शिवभक्तान् मुहुर्मुहुः ॥ २ ॥**

**काशिकामादिसूत्राणां नन्दिकेशकृतां शुभाम् ।**
**लोकोपकारिणीं दिव्यां व्याकरोमि यथामति ॥ ३ ॥**

इह खलु सकललोकनायकः परमेश्वरः परमशिवः सनकसनन्दनसनत्कुमारादीन् श्रोतॄन् नन्दिकेशपतञ्जलिव्याघ्रपादवसिष्ठादीनुद्धर्त्तुकामो डमरुनिनादव्याजेन चतुर्द्दशसूत्र्यात्मकं तत्त्वमुपदिदेश । तदनु ते सर्वे मुनीन्द्रवर्याश्चिरकालमाश्रितानामस्माकं तत्त्वं चतुर्दशसूत्र्यात्मकमुपदिदेशेति मत्वा अस्य सूत्रजालस्य तत्त्वार्थं नन्दिकेश्वरो जानातीति नन्दिकेश्वरं प्रणिपत्य पृष्टवन्तः । ततस्तेषु पृष्टवत्सु स षड्विंशतिकारिकारूपेण तत्त्वं सूत्राणामुपदेष्टुमिच्छन्निदमाचचक्षे—**नृत्तावसान इति** । अहमिति शेषः । 'नटराजराज' इत्यनेन मङ्गलानि दर्शितानि । विश्वरूपविलासवैचित्र्यचमत्कारप्रवीणत्वान्नटराजराजः, ताण्डवाख्यरासमात्रविलासवैचित्र्यचमत्कारप्रवीणत्वस्य त्वन्यत्र नटादावपि सत्त्वात् । स त्वात्मतत्त्वं वागाद्यगोचरमिति ज्ञापनार्थं ढक्कानिनादव्याजेन सनकादीनुद्धर्त्तुकामो नवपञ्चवारं चतुर्दशवारं स्वान्तर्गतमात्मतत्त्वं प्रकटयितुं नृत्तावसाने ननाद नादितवान्,

अहं तदेतद् विततनिनादोद्भूतवर्णात्मकमाद्यमतिरहस्यमेतच्छिवसूत्रजालं शिवसम्बन्धिसूत्रसमूहं कल्याणरूपसूत्रसमूहं वा विमर्शे विचार्य स्फुटीकरोमीत्यर्थः ('विमर्शे' इति छान्दसं बोध्यम्) ॥१॥

**अत्र सर्वत्र सूत्रेषु अन्त्यवर्णचतुर्दशम् ।**
**धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥ २ ॥**

अनुबन्धाः पाणिन्याद्युद्देश्यका एवेत्याह—**अत्रेति** । एष्विवत्वादिरर्थः । अन्त्यं वर्णेति वा पाठः । उभयथापि बहुव्रीहिः । कदम्बमन्यपदार्थः समासान्तः । चतुर्दशेति वा पाठः । तदा तत्पुरुषः । द्व्येकयोरितिवच्चतुर्दशेति प्रयोगः । केषुचित् पुस्तकेषु 'अन्त्यवर्णे चतुर्दशक'मिति पाठः । धात्वर्थं धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थमित्यर्थः, अन्त्यवर्णजालं शब्द इति न्यायेन । तथा चोक्तमिन्द्रेण—'अन्त्यवर्णसमुद्भूता धातवः परिकीर्त्तिताः' इति ॥२॥

**अ इ उ ण् ॥१॥**

**अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु ।**
**चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः ॥ ३ ॥**

तत्राद्यन सूत्रेण सर्ववर्णानां समस्तभुवनानाञ्च समुद्भवरूपं स्वात्मतत्त्वमुपदिष्टमित्याह—**अकारो ब्रह्मेति** । अः परमेश्वरो निर्गुणः, इं मायामाश्रित्य, उः व्यापकः सगुणः ईश्वरः, ण् आसीदिति सूत्रार्थः सूचितः । (सर्ववस्तुषु परापश्यन्तीमध्यमावैखर्यादिषु इं चित्कलामिमित्यत्र गायत्रीमिं चेतिवदीकारो बोध्यः । अत्र ईकारस्तु सूत्रे नोदितः, इकार एव प्रकटितः । सर्गसम्भवकाले अ, इ उ, ऋ, लृ इति वर्णपञ्चकमेव सर्वेषामेकोनपञ्चाशदक्षराणां भूतपञ्चकानां पञ्चवर्गाणां क्रमेण योनिरिति ।) अत्र प्रमाणम्—**'असद्वा इदमग्र आसीत्ततो वै सदजायत'** इति श्रुतिः । असद् ब्रह्म वै निश्चयेन अग्रे सृष्टः पूर्वमिदमक्षरात्मकमासीत् । ततोऽक्षराद् असतो वै सत् सगुणमजायत जातमित्यर्थः । तदुक्तं गीतायाम्—**'अक्षराणामकारोऽस्मि'** इति ॥ ३ ॥

**अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।**
**आद्यमन्त्येन संयोगादहमित्येव जायते ॥ ४ ॥**

अत एवाह—**अकार इति**। 'आदिरन्त्येन सहेता' इत्यादिरकारोऽन्त्यो इकारः, अकारादिहकारान्ता वर्णास्ततः परमात्मनः समभवन्नित्यर्थः। परमः शिव इति पाठान्तरम् ॥४॥

**सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत् ।**
**ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः स्मृता ॥५॥**

**वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः ।**
**सृष्टयाविर्भावमासाद्य मध्यमा वाक् समा मता ॥ ६ ॥**

ईश्वर एवानादिजीवोपाध्याश्रितकर्मप्रेरितप्राणव्यापारानन्तरं नाभौ पराख्यं मायापरिणाममुपेत्य हृदि पश्यन्त्याख्यमुपेत्य विशुद्धचक्रे मध्यमाख्यमुपेत्य पश्चाद्वक्त्रे वैखर्याख्यमवाप्य वेदादिरूपो भवतीत्यर्थः। श्रुतिरपि—**'वागेव विश्वा भुवनानि यज्ञे'** इति। सूक्ष्मा वागेव विश्वाकारेण विपरिणमते विवर्त्तते वेति बोध्यम्। श्रुत्यन्तरमपि—**'वाचैव विश्वं बहुरूपं निबद्धं तयैवैकं प्रविभज्योपभुङ्क्ते'** इति ॥ ५-६ ॥

**अकारं सन्निधीकृत जगतां कारणत्वतः ।**
**इकारः सर्ववर्णानां शक्तित्वात् कारणं गतम् ॥ ७ ॥**

**जगत्स्रष्टुमभूदिच्छा यदा ह्यासीत्तदाभवत् ।**
**कामबीजमिति प्राहुर्मुनयो वेदपारगाः ॥ ८ ॥**

**अकारो ज्ञप्तिमात्रं स्यादिकारश्चित्कला मता ।**
**उकारो विष्णुरित्याहुर्व्यापकत्वान्महेश्वरः ॥ ९ ॥**

तत्र सवत्रकारस्यैव स्वतन्त्रतामाह—**अकारमिति** ॥ ७ ॥
**जगत्स्रष्टुमिति** । उक्तञ्च—

**'स्वप्रकाशपरमात्मवस्तुनो दृश्यमानजगतः सिसृक्षया।**
**कामतः परशिवप्रकाशितं कामबीजमिदमेव निश्चितम्' ॥ इति।**

**बीजं बिन्दुद्वयारूढं सार्धयोनिस्वरूपकम्।**
**महाकामकलारूपमात्मानं चिन्तयेत् प्रिये ॥ इति च ॥८॥**

उक्तमेव द्रढयति—**अकार इति**। उकार इति। उ व्यापकत्वेन ण् ईश्वर आसीदित्यर्थके उणीश्वर इत्यत्रेति भावः ॥ ९ ॥

**ऋलृक् ॥ २ ॥**

**ऋलृक् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत्।**
**तामेव वृत्तिमाश्रित्य जगद्रूपमजोजनत् ॥ १० ॥**

ननु सर्ववेदान्तेषु परमेश्वर एक इति निश्चितत्वान्मायामीं चित्कलां समाश्रित्य जगद्रूपोऽभूदित्युक्तेऽद्वैतहानिर्जयितेत्याशङ्क्याह—**ऋल्गिति**। ऋ परमेश्वरः, लृं मायाख्यां मनोवृत्तिं क् अदर्शयत्, तामेवाश्रित्य स्वेच्छया जगज्जनयामासेत्यर्थः। ऋ परमेश्वर इत्यत्र "**ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्**" इति श्रुतिः प्रमाणम्। तं तत् पदार्थं परं ब्रह्म ऋ सत्यमित्यर्थः। श्रुत्यन्तरमपि—"**सोऽकामयत बहु स्यां प्रजायेय**" इति। श्रौतन्त्रेऽपि—"**मत्तो ह्यभून्मनोरूपं लृकारः परमेश्वरि**" इति। ऋ लृवर्णौ यथा तादात्म्यमापन्नौ तथेत्यर्थः ॥ १० ॥

**वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते।**
**चन्द्रचन्द्रिकयोर्यद्वद् यथा वागर्थयोरपि ॥ ११ ॥**
**स्वेच्छया स्वस्य चिच्छक्तौ विश्वमुन्मीलयत्यसौ।**
**वर्णानां मध्यमं क्लीबमृलृवर्णद्वयं विदुः ॥ १२ ॥**

तदाह—**भेदलेश** इति। वास्तव इत्यर्थः ॥ ११-१२ ॥

**एओङ् ॥ ३ ॥**

**एओङ् मायेश्वरात्म्यैक्यविज्ञानं सर्ववस्तुषु।**
**साक्षित्वात् सर्वभूतानां स एक इति निश्चितम् ॥१३॥**

ननु 'जनयामास' इत्युक्ते जन्यजनकभावेऽद्वैतहानिः स्यादित्याशङ्क्य 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतिमाश्रित्याह—**एओङ् मायेश्वरेति।** जन्यजनकत्वं च स्वस्यैव तद्रूपेण वर्तमानत्वादिति नाद्वैतहानिः। अकारोकाराभ्यां निष्पन्नप्रणवरूपेणौकारेण सगुणनिर्गुणयोरैक्ये बोधिते तेनैव दृष्टान्तेन सर्वत्रैक्यबुद्धौ द्वैतनिरासो ध्वनितः। समष्टिव्यष्टिभेदेन पूर्ववर्णयुतद्वितीयस्य तद्युततृतीयस्य च समन्वयबोधकमिदं सूत्रम्। अ अक्षरात्मकः, इ मायायुक्तः सन् प्रज्ञानस्वरूपः प्रज्ञानात्मा (सर्ववस्तूनामेकत्वाद् अद्वैतोपपत्तिः, न नानात्वं जन्यजनकत्वं च), स्वयं प्रविश्य तद्रूपेण वर्तत इत्यर्थः। वटबीजन्यायेन च पूर्वसूत्रद्वयजनितवर्णपञ्चकमेव सकलजगत्कारणमिति प्रागुक्तम्। उत्तरसूत्रवर्णानामपि तस्मादेव सम्भवः। समष्टिव्यष्टिभेदेषु पूर्ववर्णयुतद्वितीयस्य पूर्ववर्णयुततृतीयस्य च समन्वयबोधकमिदं सूत्रम्। समन्वयबोधनमप्येकत्वेनोक्तम्। अत्राप्यपरत्वे सर्ववेदसम्मतत्वं च। तथा च सनकदक्षिणामूर्त्तिसंवादमहावाक्यविवरणे—

**'शृणु त्वं सावधानेन चतुर्णामपि साम्यता।**
**वेदानां च महाभाग चतुष्काणामिहोच्यते॥ १॥**
**ब्रह्मशब्देन यद्वस्तु तत्त्वज्ञानमितीरितम्।**
**प्रज्ञानं ब्रह्म यस्माद्धि तस्माद्ब्रह्मास्म्यहं ततः॥ २॥**
**तद् ब्रह्म सर्वसाक्षीति तत्त्वमस्येव तत्त्वतः।**
**अन्यत्ववारणत्वायाऽयमात्मेत्यपि वर्ण्यते' ॥ ३॥ इति ॥ १३॥**

## ऐऔच्॥ ४॥

**ऐऔच् ब्रह्मस्वरूपः सन् जगत् स्वान्तर्गतं ततः।**
**इच्छया विस्तरं कर्त्तुमाविरासीन्महामुनिः॥ १४॥**

स्वात्मभूतस्य परमेश्वरस्य जगत्कारणत्वं कथमित्याशङ्क्याह—**ऐऔजिति।** ततः स्वान्तर्गतं जगद्विस्तारयितुमिच्छुः ऐ ज्ञानशक्तियुक्त इति, अतः पूर्वसूत्रगत एव सः। अकारेकारदीर्घयोगस्यैव ऐकारत्वमेकत्वञ्च। सम्प्रज्ञानस्वरूपपरमेश्वरो यः स पूर्वसूत्रगत एव, अकारदीर्घस्य उकारदीर्घस्यैव योगे औकारत्वम्। यः स प्रज्ञानात्मा मायाशबलितः स एकारो

यः स आ ई आ ऊ इत्याविर्भावे उक्तः । उक्त ञ्चेश्वरविमर्शिन्याम्–अकारे-कारोकाराणां ह्रस्वदीर्घाणां संयोगात् सर्वसम्भूतिरिष्यत इति । इच्छया जगद्विस्तारयितुमुद्यु क्त इत्यर्थः । अत्राह—

**'प्रणवेन जगद्व्याप्तं मायायामवतिष्ठते' ।**

इति ज्ञानोत्तमे । एवं तत्तत्समुदायात् त्रयोदशवर्णाच्छिवादिप्रकृत्यन्तानामुद्भवः । प्रकृतिपुरुषविवेकमुत्तरत्र कथयत्यस्मिन् सूत्रे उपहारत्वेन पठितम् । अत्र ह्रस्वदीर्घप्रभेदाच्चतुर्दशस्वराणामेव सङ्कीर्तनं चतुर्दशभुवन-चतुर्दशचक्र-चतुर्दशप्रकाराणामिति निष्कर्षः । तदुक्तं शिवगौरीसंवादे महामन्त्र-तत्त्वप्रकाशिन्याम्—

**'तव मन्त्रं महेशानि मम रूपं त्वमेव हि ।**
**चतुर्दशात्मकं चक्रं स्वरचक्रमितीरितम् ॥**
**त्रयोदशात्मकं तुर्यमावयोर्मन्त्रमम्बिके ।**
**उच्छूनकाले बिन्द्वात्मा तस्मादक्षरसम्भवः ॥**
**बिन्दुस्फोटनमात्रेण वर्णानां च समुद्भवः ।**
**तस्मादाकाशमुख्यानि भूतानि समजायत ॥**
**बिन्दुः श्रीचक्रराजस्य परब्रह्मात्मकस्त्विति ।**
**चतुर्दशात्मकः पश्चाच्चक्राकारेण सम्भवः ॥**
**उत्पन्नभुवनान्यत्र चतुर्दश चतुर्दश ॥ इति ॥ १४ ॥**

**हयवरट् ॥ ५ ॥**

**भूतपञ्चकमेतस्माद्ध-य-व-र-ण्-महेश्वरात् ।**
**व्योमवाय्वम्बुवह्न्याख्यभूतान्यासीत् स एव हि ॥ १५ ॥**

तत आत्मनः सकाशादाकाशादिभूतसम्भवमाह – **भूतपञ्चकमिति । स एवेति** । परमेश्वर एवेत्यर्थः ॥ १५ ॥

**हकाराद्व्योमसंज्ञं च यकाराद्वायुरुच्यते ।**
**रकाराद्वह्निस्तोयं तु वकारादिति सैव वाक् ॥ १६ ॥**

**हकारादित्यादि । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः,**

**आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी'** इति श्रुतिः ॥ १६ ॥

**लण् ॥ ६ ॥**

**आधारभूतं भूतानामन्नादीनां च कारणम् ।**
**अन्नाद्रेतस्ततो जीवः कारणत्वाल्लणीरितम् ॥ १७ ॥**

एतस्मात् परमेश्वराद् भूतपञ्चकमाकाशादिकं प्रपञ्चकारणमासीदित्युक्तम् । तत्र आकाशादिभूतचतुष्टयमेवोक्तम्, न पृथिवीत्याकाङ्क्षायामाह– **आधारेति ।** भूतानां प्राणिजातानामुद्भिज्ज-स्वेदज-जरायुजाण्डजादीनां कारणत्वात् प्रत्येकत्वेन लगित्युदीरितमित्यर्थः, अन्नाद्रेत इति न्यायात् ॥ १७ ॥

**ञमङणनम् ॥ ७ ॥**

**शब्दस्पर्शौ रूपरसगन्धाश्च ञ-म-ङ-ण-न-म् ।**
**व्योमादीनां गुणा ह्येते जानीयात् सर्ववस्तुषु ॥ १८ ॥**

ततः पृथिव्यादीनां कारणत्वेन स्थितानां तन्मात्राणामुत्पत्तिक्रममाह– **शब्देति । व्योमादीनामिति ।** व्योमादीनां गुणानेककारणानुत्पत्तिक्रमे तान् जानीयात् । सर्ववस्तुष्विति । अत्र केषाञ्चिद् ग्रन्थे अकारादिक्षकारान्ताः षट्त्रिंशत्तत्त्वमयाः, कतिचित्तन्त्रराजादिग्रन्थे पञ्चभूतक्रमेण लिपिप्रकारेण । एवमन्यत्र बीजनिर्णयभेदा बहवः सन्ति, अत्र तु तन्त्रोक्तप्रकारेणोद्घाटितम्,

**'पञ्चवर्गेष्वन्तिमार्णाः शब्दस्पर्शादयो गुणाः ।'**

इति वचनात् । सर्वजगत्कारणभूतस्य वर्णरूपपुरुषस्य सर्वेषां चेति व्योमादिगुणा इत्यर्थः ॥ १८ ॥

**झभञ् ॥ ८ ॥**

**वाक्पाणी च झ-भ-ञासीद्विराड्रूपचिदात्मनः ।**
**सर्वजन्तुषु विज्ञेयं स्थावरादौ न विद्यते ॥**
**वर्गाणां तुर्यवर्णा ये कर्मेन्द्रियमया हि ते ॥ १९ ॥**

**घढधष् ॥ ९ ॥**

**घढधष् सर्वभूतानां पादपायूपस्थकः ।**
**कर्मेन्द्रियगणा ह्येते जाता हि परमार्थतः ॥ २० ॥**

ततः सूत्राभ्यां कर्मेन्द्रियवर्गमुद्घाटयति—**वाक्पाणी चेति** । विराड्रूपस्य शिवस्य प्राणिजातस्य च झकारभकारौ, स्थावरादिषु विना विराड्रूपं विज्ञेयमित्यर्थः । अथ क्रमप्राप्तं पादादिकमाह—**घढधषिति** । परमार्थत इति । परमशिवसकाशाद् इमे कर्मेन्द्रियगणाः सर्वजन्तूनां पादपायूपस्थाः घढधवर्णा जाता इत्यर्थः ॥ १९-२० ॥

**जबगडदश् ॥ १० ॥**

**श्रोत्रत्वङ्नयनघ्राणजिह्वाधीन्द्रियपञ्चकम् ।**
**सर्वेषामपि जन्तूनामीरितं ज-ब-ग-ड-द-श् ॥ २१ ॥**

अथ क्रमप्राप्तं ज्ञानेन्द्रियसम्भवमाह—**श्रोत्रेति** ।

**'वर्गाणां मध्यवर्णोत्थो ज्ञानेन्द्रियगणः स्मृतः ।'**

इति वचनशासनाज्जबगडदवर्णसमूहो ज्ञानेन्द्रियगण इति तस्य सर्वत्रस्थस्यैव ज्ञानेन्द्रियगणः समुत्पन्न इति सर्वत्र सर्वेषां प्राणिजातानामेते वर्णा ज्ञानेन्द्रियाणां जनका इति वा ज्ञातव्यमित्यर्थः ॥ २१ ॥

**खफछठथचटतव ॥ ११ ॥**

**प्राणादिपञ्चकं चैव मनोबुद्धिरहङ्कृतिः ।**
**बभूव कारणत्वेन ख-फ-छ-ठ-थ-च-ट-त-व् ॥ २२ ॥**
**वर्गद्वितोयवर्णोत्थाः प्राणाद्याः पञ्च वायवः ।**
**मध्यवर्गत्रयाज्जाता अन्तःकरणवृत्तयः ॥ २३ ॥**

ततः प्राणादिपञ्चकमनोबुद्ध्यहङ्काराः समुन्मील्यन्ते—**प्राणादीति** ॥२२॥

**वर्गेति** । एतैरष्टवर्णैः प्राणादिपञ्चकं मनोबुद्ध्यहङ्कृतयश्च जगतां कारणत्वेन सम्भूता इत्यर्थः ॥ २३ ॥

**कपय् ॥ १२ ॥**

**प्रकृतिं पुरुषञ्चैव सर्वेषामेव सम्मतम् ।**
**सम्भूतमिति विज्ञेयं क-प-य् स्यादिति निश्चितम् ॥२४॥**

ततः सर्वप्राणिकारणत्वेनाद्यन्तवर्गद्वयाद्यक्षरग्रहणेन सम्पुटीभावं प्रकृतिपुरुषाभ्यां प्रकाशयति—**प्रकृतिमिति**। ककारपकारजातौ प्रकृति-पुरुषावित्यर्थः ॥ २४ ॥

**शषसर् ॥ १३ ॥**

**सत्त्वं रजस्तम इति गुणानां त्रितयं पुरा ।**
**समाश्रित्य महादेवः श-ष-स-र् क्रीडति प्रभुः ॥ २५ ॥**
**शकाराद्राजसोद्भूतिः षकारात्तामसोद्भवः ।**
**सकारात् सत्त्वसम्भूतिरिति त्रिगुणसम्भवः ॥ २६ ॥**

तत्रावस्थात्रयं निरूपयति—**सत्त्वमित्यादि**। पुरा सृष्टेः प्राक् शषसवर्णसम्भूतान् सत्त्वरजस्तमोगुणानाश्रित्य परमशिवः सर्वभूतेषु क्रीड-तीत्यर्थः ॥ २५-२६ ॥

**हल् ॥ १४ ॥**

**तत्त्वातीतः परः साक्षी सर्वानुग्रहविग्रहः ।**
**अहमात्मा परो हल् स्यामिति शम्भुस्तिरोदधे ॥ २७ ॥**

**॥ इति नन्दिकेश्वरकृता काशिका समाप्ता ॥**

सर्वतत्त्वजनकः स्वयं तत्त्वातीत इति ज्ञापनार्थमेतत् सूत्रं चकारेत्याह—**तत्त्वातीत इति**। सर्वानुग्रहः साक्षी तत्त्वातीतो हल् स्यामिति ढक्कानिनाद-व्याजेन सर्वेषां मुनिजनानां तत्त्वमुपदिशन् तिरोदधे इत्यर्थः। 'हकारः शिववर्णः स्यादिति शैवागमस्थिति'रिति शिवम् ॥ २७ ॥

**॥ इति आदिसूत्रनन्दिकेश्वरकाशिकाया-**
**स्तत्त्वविमर्शिन्युपमन्युकृता सम्पूर्णा ॥**

# मन्त्रयन्त्राध्यायः

ध्यायं ध्यायं जननि नितरां कालिके ते पदाब्जे
नायं नायं विमलचरिते ते मनोयोगवृत्तिम् ।
पायं पायं परमसुखदं ते कृपावारिबिन्दुं
ग्रथ्नाम्येतं स्तवमनुचयं रामनारायणोऽहम् ॥

उपासनाया यावदङ्गानि वर्तन्ते तावत्सु मन्त्रो विशिष्यते । मन्त्रि गुप्तपरिभाषणे, मन्त्र्यते घञि यद्वा मन्त्रयते अचि निष्पन्नोऽयं मन्त्रोऽपूर्वामोघशक्तिसम्पन्नो विविधरूपैर्वेदपुराणतन्त्रोक्तैर्लोकं व्याप्नोति । अयं खलु साधकानां सर्वं कार्यं साधयति, साधकेष्टदेवतां प्रत्यक्षतां नयति, सिद्धिं च प्रयच्छति । भगवता श्रीकृष्णेन मन्त्रजपस्य स्वात्मरूपत्वं प्रतिपादितम्—'यज्ञानां जपयज्ञोऽस्मि' (गी० १०।२५)। वस्तुतो मन्त्रो देवतास्वरूपत्वेन तिष्ठति । मन्त्रादेवानेकाः सिद्धयः प्रादुर्भवन्ति । कथितञ्च पतञ्जलिना–'जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः' (४।१) सूत्रेण मन्त्राणां सिद्धिजनकत्वम् । अद्भुतालौकिकशक्तिमानेष मन्त्रो वाञ्छितफलहेतुर्नास्त्यसाध्यं किमप्यस्य तदुक्तं साधनमालायाम्—'किमस्त्यसाध्यं मन्त्राणां योजितानां यथाविधि' (पृ० ५७५)। एष च देवादीनां प्राप्तिसाधनम्, यौगिकव्युत्पत्त्या तान्त्रिकव्युत्पत्त्या मननात् त्रायत इति निरुक्त्या सर्वथा त्राता मन्त्रोऽस्ति—'मननात् त्रायते यस्मात् तस्मान्मन्त्रः प्रकीर्तितः' ।

'मननाद् विश्वविज्ञानं त्रायं संसारबन्धनात् ।
यतः करोति संसिद्धिं मन्त्र इत्युच्यते ततः ॥'

मन्त्रशब्दस्य निष्पत्तिर्मन्धातोः त्रैङ्धातोश्च कुत्रचिद् विहिता । यास्केन निरुक्ते (७।१२) मन् इत्यस्मादेव कृता ।

कुलार्णवे (१७।५४) इत्यत्र कथितम्—यतः सर्वस्माद् भयात् त्रायते परमात्मनि ध्यानं कर्तुं योग्यतां ददाति तस्मान्मन्त्र इत्युच्यते।

रामपूर्वतापिन्युपनिषद्यपि—

**क्रियाकर्मेति कर्तॄणामर्थं मन्त्रो वदत्यथ।**
**मननात् त्राणनान्मन्त्रः सर्ववाच्यस्य वाचकः॥१।१२**

मेरुतन्त्रे मन्त्रस्य माहात्म्यमेवं प्रतिपादितम्—

**मन्त्र एवेश्वरः साक्षान्मन्त्र एव महौषधम्।**
**नहि मन्त्रात् परं कश्चित् सर्वसिद्धिप्रदायकः॥**

न हि केवलमत्रैव मन्त्रस्येश्वररूपत्वं निरूपितम्; अपि तु बहुषु स्थलेष्वेतादृश्युक्तिरुपलभ्यते, यथा—

**साधकानां फलं दातुं तत्तद्रूपं धृतं सुरैः।**
**मुख्यस्वरूपं तेषां तु मन्त्रा एव न चेतरत्॥**

मन्त्रस्तु साक्षात्तत्तद्देववाचकः। मन्त्रैर्देवादीनां प्रतिपाद्यप्रतिपादकभावसम्बन्धः। तदुक्तं रामपूर्वतापनीये—

**ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादिसंज्ञकः।**
**जप्तव्यो मन्त्रिणा नैवं विना देवः प्रसीदति॥ (१।११)**

सारसङ्ग्रहेऽपि—

**यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ।**
**यथा गुरौ तथा स्वात्मन्येवं भक्तिक्रमः स्मृतः॥**

मन्त्रस्य परमप्रभावो न हि केवलं वैदिकपौराणिकतान्त्रिकसमाजेष्वेवास्ति; अपि त्वितोऽधिकस्तावानेव बौद्धसमाजेऽपि, द्रष्टव्यं साधनमालायाम्—

'ओं आः ह्रीं हूं हः' अयं मन्त्रराजो बुद्धत्वं ददाति किं पुनरन्याः सिद्धयः। (पृ० २७०)

तत्रैव—यातु किं बहु वचनीयं परमतिदुर्लभं बुद्धमपि तेषां पाणितलावलीनबदरकफलमिवावतिष्ठति । (पृ० ६२)

एतादृश्येव गतिर्जैनसम्प्रदायेऽपि मन्त्रविषये । किं बहुना, शाबरमन्त्रेऽपि अलौकिकी शक्तिरवलोक्यते लोके । विश्वसन्ति च जना मन्त्रेषु । अलौकिकशक्तिमत्त्वेऽस्य प्रचलति मणिमन्त्रौषधिन्यायः । यवनादिसमाजे वैदेशिकेषु चास्था वर्तते मन्त्रविषये ।

अत्र ज्ञेयमिदं यद् मन्त्रो न केवलं देववाचक एव; अपि तु देवस्वरूपम् । देवाः साधकमनोवृत्तिपूर्तये मन्त्ररूपं दधति तथा तेनैव रूपेण सिद्धिं ददति । मेरुतन्त्रे—

**साधकानां फलं दातुं तत्तद्रूपं धृतं सुरैः ।**
**मुख्यस्वरूपं तेषां तु मन्त्रा एव न चेतरत् ।।**

किन्तु मन्त्रो गुरुमुखाद् गृहीत एव फलति, न तु पुस्तकेषु लिखितं मन्त्रं स्वयमादाय प्रयोगकरणे फलवान् भवति । शास्त्राद् ग्रहीतुं स एव शक्तो यो दीक्षया ववचनाधिकृतः, स इतरान् मन्त्रान् शास्त्राद् उपादाने शक्नोति । चामुण्डातन्त्रे —

**पुस्तके लिखितो मन्त्रो येन सुन्दरि ! जप्यते ।**
**न तस्य जायते सिद्धिर्हानिरेव पदे पदे ।।**
**गुरुमुख्याः क्रियाः सर्वा भुक्तिमुक्तिफलप्रदाः ।**
**गुर्वमुक्ताः क्रियाः सर्वा निष्फलाः स्युर्यतो ध्रुवम् ।।**

एवं कृतेऽवश्यमेव सिद्धिः —

**जपेन देवता नित्यं स्तूयमाना प्रसीदति ।**
**प्रसन्ना विपुलान् भोगान् दद्यान्मुक्तिं च शाश्वतीम् ।।**

लिङ्गपुराणे —

**जपेन पापं शमयेदशेषं यत्तत्कृतं जन्मपरम्परासु ।**
**जपेन भोगान् जयते च मृत्युं जपेन सिद्धिं लभते च मुक्तिम् ।।**

# दक्षिणाकालीमन्त्रः

## (मन्त्रमहोदधौ तृतीयतरङ्गे द्वाविंशत्यक्षरात्मकः)[1]

विनियोगः—ओं अस्य कालीमन्त्रस्य भैरव ऋषिः, उष्णिक् छन्दः, काली देवता, ह्रीं बीजम्, हूँ शक्तिः, क्रीं कीलकम्, ममाभीष्टसिद्धये जपे विनियोगः।

ऋष्यादिन्यासः —

भैरव ऋषये नमः शिरसि।
उष्णिक् छन्दसे नमः मुखे।
(दक्षिण) कालीदेवतायै नमः हृदि।
ह्रीं बीजाय नमः गुह्ये।
हूं शक्तये नमः पादयोः।
क्रीं कीलकाय नमः सर्वाङ्गे।

करन्यासः —

ओं क्रां अङ्गुष्ठाभ्यां नमः।
ओं क्रीं तर्जनीभ्यां नमः।
ओं क्रूं मध्यमाभ्यां नमः।
ओं क्रैं अनामिकाभ्यां नमः।
ओं क्रौं कनिष्ठिकाभ्यां नमः।
ओं क्रः करतलकरपृष्ठाभ्यां नमः।

---

१. क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा।

अङ्गन्यासः—

ओं क्रां हृदयाय नमः ।
ओं क्रीं शिरसे स्वाहा ।
ओं क्रूं शिखायै वषट् ।
ओं क्रैं कवचाय हुम् ।
ओं क्रौं नेत्रत्रयाय वौषट् ।
ओं क्रः अस्त्राय फट् ।

वर्णन्यासः—

अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं नमः हृदि ।
एं ऐं ओं औं अं अः कं खं गं घं नमः दक्षबाहौ ।
ङं चं छं जं झं ञं टं ठं डं ढं नमः वामबाहौ ।
णं तं थं दं धं नं पं फं बं भं नमः दक्षपादे ।
मं यं रं लं वं शं षं सं हं क्षं नमः वामपादे ।

एते न्यासा विरूपाक्षमतानुसारेण सबिन्दुभिर्वर्णैः प्रयोक्तव्याः । ग्रन्थकारस्यापि मतमेतत्; किन्तु कालीतन्त्रानुसारेण बिन्दुरहितैः केवलैर्वर्णैरेव कर्तव्याः । मतद्वयमपि शास्त्रसम्मतमेव । उक्तं न्यासादिविषये—

आदावृष्यादिकं न्यासः करशुद्धिस्ततः परम् ।
अङ्गुलीव्यापकन्यासौ हृदादिन्यास एव वा ॥
तालत्रयं च दिग्बन्धः प्राणायामस्ततः परम् ।
ध्यानं पूजा जपश्चेति सर्वमन्त्रेष्वयं विधिः ॥

मातृकान्यासोऽप्यावश्यकः—

जपार्थं सर्वमन्त्राणां विन्यासं लिपेर्विना ।
कृतञ्च निष्फलं विद्यात् तस्मादादौ लिपिं न्यसेत् ॥

वीरतन्त्रानुसारेण षोढान्यास-तत्त्वन्यास-बीजन्यासा अप्यावश्यकत्वेनोपदिष्टाः। एषामभावे पूजायामङ्गहीनत्वं स्यात्। वीरतन्त्रे षोढान्यासविधौ प्रथमं शुद्धमातृकान्यासः कर्तव्योऽनन्तरं प्रणवसम्पुटितमातृकाभिर्ललाटादिषु न्यासं विधाय ततो मातृकासम्पुटितप्रणवेन पुनर्ललाटादिषु न्यासः कर्तव्यः। इत्थं श्रीबीजेन मातृकावर्णं सम्पुटीकृत्य ललाटादिषु न्यासं कृत्वा पुनर्मातृकावर्णैः श्रं बीजं संपुटय पूर्ववन्न्यासः करणीयः। एवं कामबीजेन मातृकावर्णं सम्पुटीकृत्य न्यासो विधेयस्तथा मातृकावर्णेन कामबीजं सम्पुटीकृत्य न्यासः करणीयः। एवमेव मायाबीजेन मातृकावर्णं तथा मातृकावर्णेन मायाबीजं सम्पुटीकृत्य ललाटादिन्यासः कार्यः। एषैव रीतिः क्रीं क्रीं बीजाभ्याम् 'ॠं ॠं लृं लॄं' इति सम्पुटीकृत्य तथा 'ॠं ॠं लृं लॄं' इत्यादिभिः 'क्रीं क्रीं' इति बीजद्वयं सम्पुटीकृत्य न्यासे ग्राह्या। सर्वत्र नमःपदप्रयोगो विधेयः। अन्ते मूलमन्त्रेण मातृकावर्णं तथा मातृकावर्णेन मूलमन्त्रं सम्पुटय ललाटादिन्यासः करणीयः। इत्थमनुलोमविलोमात्मकन्यासं कृत्वा मूलमन्त्रेणाष्टोत्तरसंख्याकं व्यापकन्यासं कुर्यात्।

नैतन्मयाऽत्र विवेचितम्। शाक्तप्रमोदोक्तक्रमस्तु मया प्रदर्शित एव, तत्त्वन्यासस्तु स्वतन्त्रनामकतन्त्रानुसारेण द्वाविंशत्यक्षरात्मके मन्त्रे भागत्रयं कृत्वा एकैकं संयोज्यैवं विधेयम्—क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं ओं आत्मतत्त्वाय स्वाहा पादमूलान्नाभिपर्यन्तम्। दक्षिणे कालिके ओं विद्यातत्त्वाय स्वाहा नाभितो हृदयान्तम्। क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं स्वाहा ओं शिवतत्त्वाय स्वाहा हृदयान्मस्तकान्तम्। बीजन्यासो यथा—क्रीं नमः ब्रह्मरन्ध्रे। क्रीं नमः भ्रूमध्ये। क्रीं नमः ललाटे। हूँ नमः नाभौ। हूँ नमः गुह्ये। ह्रीं नमः मुखे। ह्रीं नमः सर्वाङ्गे। ततो मूलमन्त्रेण सप्तवारं व्यापकं कुर्यात्।

अथ ध्यानम्—

**सद्यश्छिन्नशिरःकृपाणमभयं हस्तैर्वरं बिभ्रतीं**
**घोरास्यां शिरसा स्रजा सुरुचिरामुन्मुक्तकेशावलिम्।**
**सृक्क्यसृक्प्रवहां श्मशाननिलयां श्रुत्योः शवालङ्कृतिं**
**श्यामाङ्गीं कृतमेखलां शवकरैर्देवीं भजे कालिकाम्॥**

**एवं ध्यात्वा लक्षसंख्याकं मन्त्रजपं विधाय करवीरपुष्पैर्दशांशं जुहुयात्।**

# कालीमन्त्रभेदाः

एकविंशत्यक्षरात्मको मन्त्रः —

ओं ह्रीं ह्रीं हूँ हूँ क्रीं क्रीं क्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं। अस्य मन्त्रस्य न्यासः, ध्यानम्, पूजनम्, पुरश्चरणविधिः पूर्वमन्त्रोक्तप्रकारेणैव।

**मायायुग्मं कूर्चयुग्मं करशान्तिविधुत्रयम्।**
**दक्षिणे कालिके पूर्वबीजानि स्युर्विलोमतः॥**
**एकविंशतिवर्णात्मा ताराद्यः पूर्ववद् यजिः॥ (३८-३९)**

मायाबीजं ह्रीं वारद्वयं कूर्चबीजं हूँ वारद्वयं करशान्तिविधुरिति क् र् + ईं=क्रीं वारत्रयं क्रमशः पठित्वा दक्षिणे कालिके पठनीयम्, अनन्तरं तानि बीजानि विलोमक्रमेण पठनीयानि, मन्त्रादौ प्रणवः प्रयोक्तव्यः। लक्षात्मकं पुरश्चरणम्। विल्ववटमूलादि प्रशस्तं स्थानम्।

चतुर्दशाक्षरात्मको मन्त्रः —

**क्रीं हूं ह्रीं दक्षिणे कालिके क्रीं हूं ह्रीं स्वाहा।**
**कालीकूर्चं च हृल्लेखा दक्षिणे कालिके पठेत्।**
**पुनर्बीजत्रयं वह्निवधूर्मन्वक्षरो मनुः॥ (४१)**

काली क्रीं। कूर्च हूँ। हृल्लेखा ह्रीं। वह्निवधूः स्वाहा। मन्वक्षरः चतुर्दशाक्षरः, मनोश्चतुर्दशत्वात्। मनुः मन्त्रः। अस्यापि न्यासध्यानादिक्रिया पूर्वोक्तप्रकारेणैव विधेया। अस्य प्रयोगो विशेषत आकर्षणे कर्तव्यः।

द्वाविंशत्यक्षरात्मकोऽपरो मन्त्रः —

**हूं हूं क्रीं क्रीं क्रीं ह्रीं ह्रीं दक्षिणे कालिके**
**हूँ हूँ क्रीं क्रीं क्रीं ह्रीं ह्रीं स्वाहा ।**
**कूर्चद्वयं त्रयं काल्या मायायुग्मं तु दक्षिणे**
**कालिके पूर्वबीजानि स्वाहा मन्त्रो वशीकृतौ ॥ (४३)**

अस्यापि विनियोगादिक्रिया पूर्वोक्तप्रकारेण कर्तव्या। विशेषतोऽस्यानुष्ठानं वशीकरणे विहितं लक्षात्मकञ्चास्यानुष्ठानम् ।

पञ्चदशाक्षरो मन्त्रः—

**हूँ हूँ ह्रीं ह्रीं क्रीं क्रीं क्रीं दक्षिणे कालिके स्वाहा ।**
**मन्त्रराजे पुनः प्रोक्तं बीजसप्तकमुत्सृजेत् ।**
**तिथिवर्णो महामन्त्र उपास्तिः पूर्ववन्मता ॥ (४४)**

एकाक्षरो मन्त्रः—क्रीं ।

**ब्रह्मरेफौ वामनेत्रं चन्द्रारूढं मनुर्मतः ।**
**एकाक्षरो महाकाल्याः सर्वसिद्धिप्रदायकः ॥ (४५)**

ब्रह्मा—कः। रेफः—रः। वामनेत्रम्—ईः। चन्द्रः—बिन्दुः। इति क्रीं ।

षडक्षरो मन्त्रः —

**क्रीं कालिके स्वाहा ।**
**बीजं दीर्घयुतश्चक्री पिनाकी नेत्रसंयुतः ।**
**क्रोधीशो भगवान् स्वाहा षडर्णो मन्त्र ईरितः ॥ (४६)**

बीजं—क्रीं। दीर्घयुतश्चक्री—का। नेत्रयुतः पिनाकी—लि। भगवान् अर्थाद् भगसहितः, भगम्—एकारस्तत्सहितः। क्रोधीशः—के।

त्र्यक्षरो मन्त्रः—

**क्रीं हूँ ह्रीं ।**

पञ्चाक्षरो मन्त्रोऽपरः—

**क्रीं हूँ ह्लीं हुं फट् ।**

सप्तवर्णात्मको मन्त्रः—

**क्रीं हूँ ह्लीं हुं फट् स्वाहा ।**

**काली कूर्चं तथा लज्जा त्रिवर्णो मनुरीरितः ।**

**हुं फडन्तश्च पञ्चार्णः स्वाहान्तः सप्तवर्णकः ॥ (४७)**

देवीपुराणे ७७ अध्याये १३-१४श्लोकाभ्यां काल्याः पूजामुपदिश्याध्यायान्ते कालीमन्त्रोऽपि वर्णितः । तद्यथा—

ओं कालि कालि वज्रेश्वरि लौहदण्डाढ्ये स्वाहा । इति मूलमन्त्रः । ओं कालि कालि स्वाहा हृदयम्, ओं कालि वज्रिणि शिरः, ओं कालीश्वरि शिखा, ओं कालि वज्रेश्वरि कवचम्, ओं कालि कालि लौहदण्डाढ्ये अस्त्रम्, अनेन न्यासः । सर्वमङ्गलमाङ्गल्य इति क्षमापनम् ।

# अथ कालीमन्त्राः

[विद्यार्णवतन्त्रे २४ श्वासे २३२ पृष्ठे काल्या विविधमन्त्रा लिखिताः सन्ति, त एवात्रोद्ध्रियन्ते ।]

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा । अयं मन्त्रराजः ।

कालिकायै विद्महे श्मशानवासिन्यै धीमहि तन्नो घोरा प्रचोदयात् । इति कालीगायत्री ।

क्रीं हूं स्त्रीं ह्रीं फट् । इति कालिकायाः कुल्लिका ।

ऐं ह्रीं श्रीं ऐं परायै अपरायै परापरायै विरूपायै हसौः सदाशिवमहाप्रेतपद्मासनाय नमः । इति कालिकायाः पीठमन्त्रः ।

**मन्त्रभेदाः —**

'क्रीं' इत्येकाक्षरो मन्त्रः ।

'क्रीं क्रीं क्रीं' इति त्र्यक्षरः । 'क्रीं हूं ह्रीं' इत्यपि त्र्यक्षरः ।

क्रीं क्रीं हूं हूं हूं ह्रीं, इति षडक्षरः ।

ऐं हूं ह्रीं हूं हूं फट् स्वाहा, इत्यष्टाक्षरः ।

क्रीं दक्षिणे कालिके क्रीं स्वाहा, इति दशाक्षरः ।

हूं ह्रीं क्रीं दक्षिणे हूं ह्रीं स्वाहा, इत्यन्यो दशाक्षरः ।

ओं ह्रीं क्रीं स्वाहा, इति कालीहृदयम् ।

क्रीं हूं ह्रीं दक्षिणे कालिके क्रीं हूं ह्रीं स्वाहा, इति चतुर्दशाक्षरी ।

ओं ह्रीं ह्रीं हूं हूं क्रीं क्रीं दक्षिणे कालिके क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा, इत्येकविंशाक्षरी ।

ओं ह्रीं ह्रीं हूं हूं क्रीं क्रीं क्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा, इति त्रयोविंशाक्षरी ।

ह्रीं ह्रीं हूं हूं क्रीं क्रीं क्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं, इति विंशत्यक्षरी ।

ओं ह्रीं क्रीं मे स्वाहा, इति षडक्षरी ।

क्रीं ह्रीं ह्रीं, इति त्र्यक्षरी ।
क्रीं क्रीं क्रीं स्वाहा, इति पञ्चाक्षरी ।
क्रीं हूं ह्रीं क्रीं हूं ह्रीं स्वाहा, इत्यष्टाक्षरी ।
ऐं नमः क्रीं क्रीं कालिकायै स्वाहा, इत्येकादशाक्षरी ।
क्रीं हूं ह्रीं दक्षिणे कालिके स्वाहा, इत्येकादशाक्षरी ।
क्रीं हूं ह्रीं दक्षिणे कालिके फट्, इति दशाक्षरी ।

क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा, इति विंशाक्षरी ।

क्रीं स्वाहा, इति त्र्यक्षरी ।
क्रीं क्रीं कालिकायै स्वाहा, इत्यष्टाक्षरी ।
क्रीं हूं ह्रीं स्वाहा, इति पञ्चाक्षरी ।
क्रीं दक्षिणे कालिके स्वाहा, इति नवाक्षरी ।

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा, इति षोडशाक्षरी ।

नमः ऐं क्रीं क्रीं कालिकायै स्वाहा, इत्येकादशाक्षरी ।
नमः ओं ओं क्रीं क्रीं फट् स्वाहा, इति नवाक्षरी ।
कालि कालिके हूं ह्रीं हूं फट्, इत्यपि नवाक्षरी ।
क्रीं क्रीं क्रीं फट्, इति षडक्षरी ।
क्रीं क्रीं क्रीं फट् स्वाहा, इति षडक्षरी ।
क्रीं क्रीं क्रीं क्रीं क्रीं क्रीं स्वाहा, इत्यष्टाक्षरी ।
क्रीं क्रीं हूं हूं ह्रीं ह्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा, इति चतुर्दशाक्षरी ।
क्रीं हूं ह्रीं दक्षिणे कालिके फट्, दशाक्षरी ।
क्रीं हूं ह्रीं क्रीं हूं ह्रीं स्वाहा, अष्टाक्षरी ।

क्रीं क्रीं हूं हूं ह्रीं ह्रीं क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा, विंशाक्षरी ।

नमः आं क्रों आं क्रों फट् स्वाहा कालि कालिके हूं, पञ्चदशाक्षरी ।
ह्रीं हूं फट्, त्र्यक्षरी ।

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं गुह्ये कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ।

क्रीं हूं ह्रीं गुह्यकालिके क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा, षोडशाक्षरी ।

क्रीं हूं ह्रीं गुह्यकालिके हूं हूं ह्रीं ह्रीं स्वाहा, चतुर्दशाक्षरी ।

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके स्वाहा, पञ्चदशाक्षरी ।

क्रीं गुह्ये कालिके क्रीं स्वाहा, नवाक्षरी ।

क्रीं दक्षिणे कालिके क्रीं स्वाहा, दशाक्षरी ।

हूं हूं ह्रीं ह्रीं दक्षिणे कालिके हूं हूं ह्रीं ह्रीं स्वाहा, षोडशाक्षरी । इति गुह्यकाली ।

**बलिमन्त्रस्तु —**

ऐं ह्रीं एह्येहि परमेशानि जगन्मातर्जगतां जननि गृह्ण-गृह्ण मम बलिं सिद्धिं देहि देहि शत्रुक्षयं कुरु कुरु ओं ह्रूं ह्रीं फट् ओं कालिकायै नमः फट् स्वाहा । अयं दक्षिणकालिकाया बलिमन्त्रः ।

हूं नमः एह्येहि गुह्यकाल्यै गृह्ण गृह्ण मम शत्रून् नाशय नाशय खादय खादय तुरु तुरु छिन्धि छिन्धि सिद्धिं देहि देहि हुं हुं स्वाहा । अयं गुह्यकाल्या बलिमन्त्रः ।

ओं हूं सदाशिवप्रेताय गुह्यकाल्यासनाय नमः गुह्यकाल्यै हूं नमः, इति गुह्यकाल्यासनमन्त्रः । ह्रौं कालि महाकालि किणि किणि फट् स्वाहा, इयं भद्रकाली । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं भद्रकाल्यै क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा, इयमपि भद्रकाली । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं श्मशानकालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा । इयं श्मशानकालिका ।

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं महाकालि क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा, इति महाकालीमन्त्रः ।

ओं क्ष्रौं क्ष्रौं क्रें क्रें पशुं गृहाण हुं फट् स्वाहा, महाकालीमन्त्रः ।

गृध्रकर्णि २ विरूपाक्षि २ लम्बस्तनि २ महोदरि २ उत्पादय २ हुं फट् स्वाहा, अयमपि महाकालीमन्त्रः ।

ऐं ह्रीं श्रीं क्लीं कालिके क्लीं श्रीं ह्रीं ऐं, इति श्मशानकालीमन्त्रः ।

# अथ परमेश्वरी विद्या

[ महानिर्वाणतन्त्रे पञ्चमोल्लासे १०—१३ श्लो० ]

१—ह्रीं श्रीं क्रीं परमेश्वरि स्वाहा, दशार्णोऽयं मन्त्रः ।
२—ह्रीं, इति वा मन्त्र एकाक्षरः ।
३—श्रीं, इति वा मन्त्र एकाक्षरः ।
४—क्रीं, इति वा मन्त्र एकाक्षरः ।
५—ह्रीं श्रीं क्रीं, इति त्र्यक्षरः ।
६—परमेश्वरि स्वाहा, सप्तार्णो मन्त्रः ।
७—क्रीं परमेश्वरि स्वाहा, अष्टार्णो मन्त्रः ।
८—ऐं परमेश्वरि स्वाहा, अष्टार्णो मन्त्रः ।
९—ओं परमेश्वरि स्वाहा, अष्टार्णो मन्त्रः ।
१०—ह्रीं श्रीं क्रीं परमेश्वरि कालिके ह्रीं श्रीं क्रीं स्वाहा, षोडशार्णो मन्त्रः ।
११—स्त्रीं ह्रीं श्रीं क्रीं परमेश्वरि कालिके ह्रीं श्रीं क्रीं स्वाहा, सप्तदशार्णो मन्त्रः ।
१२—ओं ह्रीं श्रीं क्रीं परमेश्वरि कालिके ह्रीं श्रीं क्रीं स्वाहा, सप्तदशार्णो मन्त्रः ।

ह्रीं श्रीं क्रीं, इति मूलमन्त्रः ।

**नमः सर्वस्वरूपिण्यै जगद्धात्र्यै नमो नमः ।**
**आद्यायै कालिकायै ते कर्त्र्यै हर्त्र्यै नमो नमः ॥ ३५ ॥**

आद्यायै विद्महे परमेश्वर्यै धीमहि तन्नः काली प्रचोदयात् । इति गायत्री ।

## अथ मन्त्रभेदाः

बृहत्तन्त्रसारे—

**वर्गाद्यं वह्निसंयुक्तं रतिविन्दुबिभूषितम् ।**
**एकाक्षरो महामन्त्रः सर्वकामफलप्रदः ।।**
**त्रिगुणा तु विशेषेण सर्वशास्त्रप्रबोधिनी[1] ।।(क्रीं, क्रीं क्रीं क्रीं)**

प्रयोगः—

प्रातःकृत्यादि प्राणायामान्तं विधाय, ऋषिच्छन्दोदेवतावर्णन्यासं कृत्वा कराङ्गन्यासौ कुर्यात् । ओं क्रां क्रीं क्रूं क्रैं क्रौं क्रः, इति क्रमेण ।

तदुक्तं वीरतन्त्रे—

**दीर्घषट्कयुताद्येन प्रणवाद्येन कल्पयेत् ।**
**षडङ्गानि मनोरस्य जातियुक्तेन देशिकः ।।**

एकाक्षरस्य ध्यानं सिद्धेश्वरतन्त्रे—

**शवारूढां महाभीमां घोरदंष्ट्रां वरप्रदाम् ।**
**हास्ययुक्तां त्रिनेत्रां च कपालकर्तृकाकराम् ।।**
**मुक्तकेशीं ललज्जिह्वां पिबन्तीं रुधिरं मुहुः ।**
**चतुर्बाहुयुतां देवीं वराभयकरां स्मरेत् ।।**

**अनयोः पुरश्चरणं लक्षजपः । तथा च सिद्धेश्वरीतन्त्रेऽप्येतत् ।**

### ऊर्ध्वाम्नायमन्त्रभेदेषु श्रीकालरात्रिमन्त्रः

[ श्रीविद्यार्णवतन्त्रे अष्टमश्वासे ]

समयविद्यासु कालरात्रिरपि एका विद्या, तद्यथा—

---

१. विद्यार्णवतन्त्रे २१४ पृ० रतिबिन्दुसमन्वितम्, तथा त्रिगुणस्तु विशेषेण सर्वशास्त्रप्रबोधकः, इति पाठः ।

**श्रीविद्या वगला चैव कालरात्रिस्तथैव च ।**
**जयदुर्गा छिन्नमस्ता समयाः पञ्च कीर्तिताः ॥ (१४८ पृष्ठे)**

**अथ कालरात्रिः**

अस्य श्रीकालरात्रिमन्त्रस्य भैरव ऋषिः, अनुष्टुप् छन्दः, श्रीकालरात्रिर्देवता, ह्रीं बीजम्, स्वाहा शक्तिः, हुं कीलकम्, श्रीविद्याङ्गत्वेन विनियोगः, षड्दीर्घयुक्तेन मायाबीजेन षडङ्गन्यासः ।

अथ ध्यानम्—

**आरक्तभानुसदृशीं यौवनोन्मत्तविग्रहाम् ।**
**चतुर्भुजां त्रिनयनां भीषणां चन्द्रशेखराम् ॥ १ ॥**
**प्रेतासनसमासीनां भजतां सर्वकामदाम् ।**
**दक्षिणे चाभयं पाशं वामे भुवनमेव च ॥ २ ॥**
**रक्तदण्डधरां देवीं कालरात्रिं विचिन्तयेत् ।**

मन्त्रः—

ऐं ह्रीं क्लीं श्रीं कालेश्वरि सर्वजनमनोहरि सर्वमुखस्तम्भिनि सर्वराजवशंकरि सर्वदुष्टनिर्दलिनि सर्वस्त्रीपुरुषाकर्षिणि वन्दिश्रृंखलांस्त्रोटय त्रोटय सर्वशत्रून्जम्भय जम्भय द्वेषं निर्दलय निर्दलय सर्वं स्तम्भय स्तम्भय उच्चाटय उच्चाटय सर्ववश्यं कुरु कुरु सर्वकालरात्रिकामिनि गणेश्वरि हुं फट् स्वाहा, इति कालरात्रिः ।

## अथ कालरात्रिमन्त्रः

**त्रयस्त्रिंशदुत्तरशताक्षरः —**

ओं ऐं ह्रीं क्लीं श्रीं कान्हेश्वरि सर्वजनमनोहरि सर्वमुखस्तम्भिनि सर्वराजवशंकरि सर्वदुष्टनिर्दलनि सर्वस्त्रीपुरुषाकर्षिणि बन्दीश्रृंखलाँस्त्रोटय त्रोटय सर्वशत्रून् भञ्जय भञ्जय द्वेष्टॄन् निर्दलय निर्दलय सर्वं स्तम्भय स्तम्भय मोहनास्त्रेण द्वेषिण उच्चाटय उच्चाटय सर्वं कुरु कुरु स्वाहा, देहि देहि सर्वं कालरात्रि कामिनि गणेश्वरि नमः।

तारवाक्शक्तिकन्दर्परमाः कान्हेश्वरीति च।
सर्वजनमनोवर्णा हरिसर्वमुखा ततः ॥
स्तम्भन्यन्ते सर्वराजवशंकरि पदं ततः।
सर्वदुष्टनिर्दलनि सर्वस्त्रीपुरुषार्णकाः ॥
कर्षिणीति ततो बन्दी श्रृंखलाँस्त्रोटयद्वयम्।
सर्वशत्रून् भञ्जय द्विर्द्वेष्टॄन् निर्दलयद्वयम् ॥
सर्वं स्तम्भययुग्मं स्यान्मोहनास्त्रेण तत् पदम्।
द्वेषिणः पदमुच्चार्य तत उच्चाटयद्वयम् ॥
सर्वं कुरु द्वन्द्वं स्वाहा देहियुगं पुनः।
सर्वं च कालरात्रीति कामिनीति गणेश्वरी ॥
नमोऽन्तेयं महाविद्या गुणरामधराक्षरा ॥

(मन्त्रमहोदधौ)

दक्ष ऋषिः, अतिजगती छन्दः, कालरात्रिर्देवता, क्रीं बीजम्, ह्रीं शक्तिः, अभीष्टसिद्ध्यर्थे विनियोगः कार्यः। 'ओं ऐं ह्रीं क्लीं श्रीं' इत्यनेन क्रमशः करन्यासः। मन्त्रस्थैः २४, २५, २१, १८, २६, १९ अक्षरैः क्रमशोऽङ्गन्यासः।

ध्यानम्—

**उद्यन्मार्तण्डकान्ति विगलितकबरीं कृष्णवस्त्रावृताङ्गीं**
**दण्डं लिङ्गकराब्जैर्वदनमथ भुवनं दधानां त्रिनेत्राम् ।**
**नानाकल्पौघभासां स्मितमुखकमलां सेवितां देवसंघै-**
**र्मायां राज्ञीं मनोभूशरविकलतनूमाश्रये कालरात्रिम् ॥**

पुरश्चरणम्—दशसहस्रजपः । तिलैः कमलपुष्पैर्वा दशांशहोमः । (पूर्वलिखितमन्त्रतोऽत्र कश्चिद् भेदः । ध्यानेऽपि । तस्माद् द्विवारं लिखितं मया ।)

## मन्त्राणां प्रमाणं विश्वसारतन्त्रे

(श्रीविद्यार्णवतन्त्रे २४ श्वासे)

अथ पञ्चाक्षरीं विद्यां शृणुष्व कमलानने ।
प्रजापतिं समुद्धृत्य वह्न्यारूढं प्रजापतिम् ॥ १ ॥
चतुर्थस्वरसंयुक्तं नादबिन्दुविभूषितम् ।
द्विगुणं च ततः कृत्वा ङेऽन्तं च कालिकापदम् ॥ २ ॥
स्वाहान्ता कथिता विद्या प्रिय एकादशाक्षरी ।
ऋषिः स्याद् दक्षिणामूर्तिः पंक्तिश्छन्द उदाहृतम् ॥३॥
परात्परतरा शक्तिः कालिका देवता स्मृता ।
एकादशाक्षरी विद्या कालिकायाः सुदुर्लभा ॥ ४ ॥
लक्षद्वयं जपेद्विद्यां पुरश्चरणकर्मणि ।
अन्यासां वर्णलक्षं स्यात् कथितं पद्मयोनिना ॥ ५ ॥

अन्यासां पञ्चाक्षरीप्रभृतीनाम् । अस्या ध्यानम्—चतुर्भुजा कृष्णवर्णा, इत्यादि ।

चतुर्भुजा कृष्णवर्णा मुण्डमालाविभूषिता ।
खड्गं च दक्षिणे पाणौ बिभ्रतीन्दीवरद्वयम् ॥ १ ॥
कर्त्रीं च खर्परं चैव क्रमाद्वामे सुबिभ्रती ।
द्यां लिखन्ती जटामेकां बिभ्रती शिरसा द्वयीम् ॥२॥
मुण्डमालाधरा शीर्षे ग्रीवायामपि चापराम् ।
वक्षसा नागहारं च बिभ्रती रक्तलोचना ॥ ३ ॥

कृष्णवस्त्रधरा कट्यां व्याघ्राजिनसमन्विता ।
वामपादं शवहृदि संस्थाप्य दक्षिणं पदम् ॥ ४ ॥

विलाप्य सिंहपृष्ठे तु लेलिहाना शवद्वयम् ।
साट्टहासा महाघोररावयुक्ता सुभीषणा ॥ ५ ॥

मूलबीजं ततो मायां लज्जाबीजं ततः परम् ।
दक्षिणे कालिके चेति अस्त्रान्ता समुदीरिता ॥ ६ ॥

अथापरां प्रवक्ष्यामि विद्यां विंशतिवर्णकाम् ।
यस्याः प्रसादमात्रेण भवेद् भूमिपुरन्दरः ॥ ७ ॥

मूलबीजद्वयं दद्यात्ततः कूर्चद्वयं वदेत् ।
लज्जायुग्मं समुद्धृत्य सम्बुद्धचन्तं पदद्वयम् ॥ ८ ॥

पूर्ववत् षट् तथा बीजान्यन्ते च वह्निसुन्दरी ।
ऋषिः स्याद् दक्षिणामूर्तिः पंक्तिश्छन्द उदाहृतम् ॥९॥

देवता कथिता सद्भिः काली दक्षिणपूर्विका ।
अथापरां प्रवक्ष्यामि विद्यां त्रिभुवनेश्वरीम् ॥ १० ॥

निजबीजं समुद्धृत्य तदन्ते वह्निसुन्दरीम् ।
भैरवोऽस्य ऋषिः प्रोक्तो नानातन्त्रसमन्वितः ॥ ११ ॥

अष्टाक्षरी तु या प्रोक्ता सर्वतन्त्रेषु गोपिता ।
निजबीजद्वयं कूर्चद्वयं लज्जाद्वयं ततः ॥ १२ ॥

स्वाहान्ता कथिता विद्या सर्वकामफलप्रदा ।
निजं कूर्चं तथा लज्जा तदन्ते वह्निसुन्दरी ॥ १३ ॥

पञ्चाक्षरी महाविद्या पञ्चवक्त्र ऋषिः स्मृतः ।
नवाक्षरीं महाविद्यां शृणुष्व कमलानने ।। १४ ।।
निजबीजत्रयं कूर्चयुग्मं लज्जायुगं ततः ।
स्वाहान्ता कथिता विद्या सर्वसम्पत्करी मता ।। १५ ।।
अथापरां प्रवक्ष्यामि विद्यां तां च नवाक्षरीम् ।
मूलबीजं समुद्धृत्य सम्बुद्धचन्तं पदद्वयम् ।। १६ ।।
स्वाहान्ता कथिता विद्या सर्वशत्रुक्षयंकरी ।
अथवाष्टाक्षरीं विद्यां शृणुष्व कमलानने ।। १७ ।।
निजबीजं ततः कूर्चं ततो मायां समुद्धरेत् ।
पुनस्तान्येव उच्चार्य स्वाहान्ता मोक्षदायिनी ।। १८ ।।
अथापरां प्रवक्ष्यामि दशतत्त्वसमन्विताम् ।
मूलद्वयं कूर्चयुग्मं तथा लज्जाद्वयं तथा ।। १९ ।।
पुनस्तान्येव बीजानि तदन्ते वह्निसुन्दरीं ।
चतुर्दशाक्षरी विद्या चतुर्वर्गफलप्रदा ।। २० ।।
ब्रह्मत्रयं समुद्धृत्य रतिवह्निसमन्वितम् ।
नादबिन्दुसमायुक्तं लज्जाकूर्चद्वयं ततः ।। २१ ।।
पुनः क्रमेण चोद्धृत्य वह्निजायावधिर्मनुः ।
षोडशीयं समाख्याता विद्या कल्पद्रुमोपमा ।। २२ ।।

मायातन्त्रे—

हृदयं वाग्भवं देवि निजबीजयुगं ततः ।
कालिकायै पदं चोक्त्वा तदन्ते वह्निसुन्दरी ।।

तन्त्रान्तरे—

नमः पाशांकुशौ द्वेधा फट्स्वाहा कालिकालिके ।
दीर्घतनुच्छदं कालीमनुः पञ्चदशाक्षरः ॥
लक्षसंख्यं जपं कुर्यात् पुरश्चरणसिद्धये ।
एतासां पूजनं चैव दक्षिणावत् सुरेश्वरि ॥

मत्स्यसूक्ते—

लज्जाबीजं ततः क्रोधं फडन्ता त्र्यक्षरी भवेत् ॥

इति कालीमन्त्राः ।

अन्यत्र मन्त्रविवरणमित्थम्—

१—एकाक्षरः—क्रीं,

वर्गाद्यं वह्निसंयुक्तं रतिबिन्दुविभूषितम् ।
अयमेकाक्षरो मन्त्रः सर्वकामफलप्रदः ॥

एतत् तन्त्रसारे विद्यार्णवे, कालीकल्पतरौ ।

मन्त्रमहोदधौ तु—

ब्रह्मरेफौ वामनेत्रं चन्द्रारूढं मनुर्मतः ।
एकाक्षरो महाकाल्याः सर्वसिद्धिप्रदायकः ॥

अस्य विराट् छन्दः, दक्षिणा कालिका देवता, लक्षात्मकं पुरश्चरणम्, घृतेन होमः । न्यासस्तु क्रीं क्रीं, इत्यादिभिः कार्यः । ध्यानं तु शवारूढा-मित्यादि । मन्त्रमहार्णवे प्रणवयुक्तं मुद्रितं तत्तु न युक्तम्, एकाक्षरत्वभङ्गात् ।

कालीतन्त्रे—

कामाक्षरं वह्निसंस्थमिन्दिरानादबिन्दुभिः ।
मन्त्रराजमिदं ख्यातं दुर्लभं पापचेतसाम् ॥

कङ्कालमालिन्याम्—

क्रोधोशं क्षतजारूढं धूम्रभैरव्यलक्षितम् ।
नादबिन्दुसमायुक्तं मन्त्रं स्वर्गेऽपि दुर्लभम् ॥

निरुत्तरतन्त्रे—

**ब्रह्मासनयुतं देवि नादबिन्दुसमन्वितम् ।**
**वामनेत्रार्णसंयुक्तं चित्स्वरूपं परात्परम् ।।**
**एकाक्षरी सिद्धविद्या मन्त्रराज्ञी कुलेश्वरी ।।**

गुह्यकालीतन्त्रे—

**चक्री त्रिमूर्तिसंयुक्तस्तथा वैश्वानरासनः ।**
**अर्धचन्द्रेण देवेशि बिन्दुनोपरि भूषितः ।।**
**एकाक्षरी महाविद्या सर्वतन्त्रेषु दुर्लभा ।।**

अत्र भेदो वर्तते–भैरव ऋषिः, गायत्री छन्दः, दक्षिणा कालिका देवता, कं बीजम्, ईं शक्तिः, रं कीलकम्, कवित्वशक्तिप्राप्त्यर्थं विनियोगः। क्रां क्रीं, इत्यादिं न्यासः। ध्यानं तु वामोर्ध्वे छिन्नमुण्डम् इत्यादि। पुरश्चरणं तु त्रिलक्षात्मकम् ।

महानिर्वाणे—

**प्राणेशस्तैजसारूढो भेरुण्डाव्योमबिन्दुवान् ।**

वर्गाद्यः–कः। वह्निः–रः। रतिः–ईः। ब्रह्मा–कः। वामनेत्रम्–ईः। चन्द्रारूढः–ँ। कामः–कः। इन्दिरा–ईः। नादः–अं। क्रोधीशः–कः। क्षतजः–रः। धूम्रभैरव्यः–ईः।

२—द्व्यक्षरः (१) कालीति द्व्यक्षरो–क्रीं क्रीं।
(२) कालीपुटितकूर्चकम्–क्रीं हूं।

गुह्यकालीतन्त्रे—भैरव ऋषिः, गायत्री छन्दः, क्रीं बीजम्, स्वाहा शक्तिः, हूं कीलकम् ।

३—त्र्यक्षरः—(१) **त्रिमूला तु विशेषेण सर्वशास्त्रप्रबोधिनी ।**
**क्रीं क्रीं क्रीं** । एकाक्षरवदेव न्यासादिकं कार्यम् ।

कालीकल्पतरौ—

**त्रिगुणस्तु विशेषेण सर्वशास्त्रप्रबोधकः ।**

अपि च—

आद्यत्रयाणां बीजानां प्रत्येकं त्रयमेव वा ।
प्रजपेत् साधकाधीशः सर्वकामार्थसिद्धये ।।

क्रीं ह्रीं क्लीं ।

(२) कालीबीजद्वयं देवि दीर्घहूंकारमेव च ।
त्र्यक्षरी सा महाविद्या चामुण्डा कालिका स्मृता ।।

क्रीं क्रीं हूं ।

देवता चामुण्डा कालिका ।

(३) प्राणेशस्तैजसारूढो भेरुण्डाव्योमबिन्दुमान् ।
बीजमेतद् समुद्धृत्य द्वितीयमुद्धरेत् प्रिये ।।
सन्ध्यारक्तसमारूढा वामनेत्रेन्दुसंयुता ।
तृतीयं शृणु कल्याणि दीपसंस्थः प्रजापतिः ।।
गोविन्दबिन्दुसंयुक्तः साधकानां सुखावहः ।

ह्रीं श्रीं क्रीं ।

महानिर्वाणतन्त्रे कालीकल्पतरावपि मन्त्रोऽयमुद्धृतः; किन्तु अत्र दीपपदेन लकारो गृहीतस्तस्मात् क्रीं नापेक्षितोऽपि त्वत्र क्लीमेवाभीष्टः । ह्रीं श्रीं क्लीम् ।

(४) मूलबीजं ततः कूर्चं लज्जाबीजं ततः परम् ।
महाविद्या महाकालेन भाषिता—क्रीं हूं ह्रीं ।

(तन्त्रसारे)

दक्षिणामूर्त्तिः ऋषिः, पंक्तिः छन्दः, कालिका देवता, ह्रीं शक्तिः । ध्यानं चतुर्भुजा कृष्णवर्णा, इत्यादि ।

मन्त्रमहोदधौ—

काली कूर्चं तथा लज्जा त्रिवर्णो मनुरीरितः ।

द्वाविंशत्यक्षरवद् ऋष्यादिः, छन्दो विराट्।
मन्त्रमहार्णवे—ओंकारस्यापि योगः।
त्रिलक्षात्मकं पुरश्चरणम्। घृतेन दशांशहोमः।

(५) **निजबीजं समुद्धृत्य तदन्ते वह्निसुन्दरी-क्रीं स्वाहा।**
ऋष्यादि द्वाविंशत्यक्षरवत्।

**(६) वाग्भवबीजमुच्चार्यं कामराजं ततः परम्।**
**मायाबीजं ततो भद्रे त्र्यक्षरं मन्त्रमीरितम्॥**
**ऐं क्लीं ह्रीं।**

**(७) कामराजं ततः कूर्चं मायाबीजमतः परम्।**
**अपरं त्र्यक्षरं प्रोक्तं पूर्वोक्तं फलदं प्रिये॥**
**क्लीं हूं ह्रीं।**

**(८) हालाहलं समुच्चार्य मायाद्वयमतः परम्।**
**एतत्तु त्र्यक्षरं देवि सर्वकामफलप्रदम्॥**
**ओं ह्रीं ह्रीं।**

एतत् कंकालमालिन्यां कालीकल्पतरौ च।
(९) हूं क्रीं हूं।
(१०) ह्रीं क्रीं ह्रीं।
(११) हूं ह्रीं हूं।
(१२) ह्रीं हूं ह्रीं।
(१३) ह्रीं स्वाहा।
(१४) हूं स्वाहा। एतत् सर्वं गुह्यकालीतन्त्रे।
द्व्यक्षरवद् ऋष्यादिः।
(१५) **आद्यत्रयाणां बीजानां प्रत्येकं त्रयमेव वा-ह्रीं ह्रीं ह्रीं।**
(१६) क्लीं क्लीं क्लीं।
(१७) क्रीं क्रीं क्रीं।
महानिर्वाणतन्त्रे, कालीकल्पतरौ द्रष्टव्यमेतत्।

(४) पञ्चाक्षरः —

**(१) प्रजापतिं समुद्धृत्य वह्न्यारूढं ततः प्रिये ।**
**चतुर्थस्वरसंयुक्तं नादबिन्दुविभूषितम् ।**
**बीजत्रयं क्रमेणैव तदन्ते वह्निसुन्दरी ॥**

(तन्त्रसारे)

**क्रीं क्रीं क्रीं स्वाहा** । अन्यत् त्र्यक्षरवज्ज्ञेयम् ।
पुरश्चरणं पञ्चलक्षात्मकम् । घृतेन दशांशहोमः ।

**(२) निजं कूर्चं तथा लज्जा तदन्ते वह्निसुन्दरी ।**
**क्रीं हूं ह्रीं स्वाहा ।**

(तन्त्रसारे)

ऋषिः पञ्चवक्त्रः । द्वाविंशत्यक्षरवदन्यत् सर्वम् । लक्षात्मकपुरश्चरणम् । घृतेन दशांशहोमः ।

**(३) हुं फडन्तः त्र्यक्षरः पञ्चार्णः । क्रीं हूं ह्रीं हुं फट् ।**

मन्त्रमहोदधौ—द्वाविंशत्यक्षरवदस्य विधानमुक्तम् । केवलं छन्दो विराट् । मन्त्रमहार्णवे प्रणवसहितोऽयं मन्त्रो वर्तते । चिन्त्यमिदम् ।

(५) षडक्षरः —

**[१] प्रणवं पूर्वमुद्धृत्य हृल्लेखाबीजमुद्धरेत् ।**
**रतिबीजं समुद्धृत्य पञ्चमं च भगान्वितम् ॥**
**ठद्वयेन समायुक्ता विद्याराज्ञी प्रकीर्तिता ॥**

(तन्त्रसारे)

रतिबीजं निजबीजं व्याख्यातत्वात् ।

मन्त्रः—ओं ह्रीं क्रीं मे स्वाहा । षडङ्गन्यासो द्वाविंशत्यक्षरवत्, ध्यानं तु—**'खड्गोद्भिन्नेन्दुखण्डस्रवदमृतरसाप्लाविताङ्गी त्रिनेत्रा'** इत्यादि । पुरश्चरणम्—२१ सहस्रजपः । शिरीषपुष्पैर्दशांशहोमः । भैरव ऋषिः,

विराट् छन्दः, सिद्धकाली देवता ब्रह्मस्वरूपा भुवनेश्वरी, क्रीं बीजम्, ह्रीं शक्तिः। षडङ्गन्यासः २२ अक्षरवत्। ध्यानम्—कालीतन्त्रे मन्त्रोद्धारे ध्याने च किञ्चित् पाठान्तरं वर्तते। कालीकल्पतरौ विद्यार्णवतन्त्रवन्मन्त्रोद्धारः।

(२) बीजत्रयं समुद्धृत्य अस्त्रमन्त्रं समुद्धरेत्। वह्निजायावधिप्रोक्ता त्रैलोक्यमोहिनी—क्रीं क्रीं क्रीं फट् स्वाहा। तन्त्रसारे। ऋष्यादिः त्र्यक्षरवत्। पुरश्चरणं षट्लक्षात्मकजपः। घृतेन दशांशहोमः।

कालीकल्पतरौ—निजबीजत्रयं फट् वह्निवल्लभा।

**(३) बीजं दीर्घयुतश्चक्री पिनाकी नेत्रसंयुतः।**
**क्रोधीशो भगवान् स्वाहा षडर्णो मन्त्र ईरितः॥**

**क्रीं कालिके स्वाहा।**

मन्त्रमहोदधौ—ऋष्यादिः २२ अक्षरवत् केवलं छन्दो विराट्।

मन्त्रमहार्णवे—प्रणवसहितो वर्तते यो ह्यनुचितः सप्ताक्षरत्वात्।

६—सप्ताक्षरः—

(१) **स्वाहान्तः पञ्चाक्षरः सप्तवर्णकः**—क्रीं हूं ह्रीं हूं फट् स्वाहा।

मन्त्रमहोदधौ—ऋष्यादिः २२ अक्षरमन्त्रवत्, छन्दो विराट्। मन्त्रमहार्णवे प्रणवसहितो वर्तते।

(२) **बीजमाद्यत्रयं हित्वा सप्तार्णापि दशाक्षरी**। परमेश्वरि स्वाहा। महानिर्वाणतन्त्रे ध्यानं दशाक्षरवत्।

७—अष्टाक्षरः—

**(१) निजबीजद्वयं कूर्चयुग्मं लज्जायुगं ततः।**
**स्वाहान्ता कथिता काली सर्वसम्पत्करी मता॥**

**क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा।**

तन्त्रसारे। ऋष्यादिः २२ अक्षरात्मकमन्त्रवत्। पुरश्चरणं लक्षात्मकजपः। घृतेन दशांशहोमः।

२०

**(२) निजबीजं ततः कूर्चं ततो मायां समुद्धरेत् ।**
**पुनस्तानि समुद्धृत्य स्वाहान्ता मोक्षदायिनी ॥**

**क्रीं हूं ह्रीं क्रीं हूं ह्रीं स्वाहा ।**

तन्त्रसारे । ऋष्यादिः त्र्यक्षरवत् । पुरश्चरणम् अष्टलक्षजपः । घृतेन दशांशहोमः । तत्रैवापरत्र पृष्ठेऽयमेव मन्त्र उद्धृतोऽस्ति; किन्तु ऋष्यादिः २२ अक्षरमन्त्रवत् ।

(३) क्रीं क्रीं क्रीं क्रीं क्रीं क्रीं स्वाहा । तन्त्रसारे । ऋष्यादिः अष्टाक्षरवत् ।

(४) **अथातः संप्रवक्ष्यामि मन्त्रमष्टाक्षरं परम्**—दक्षिणे कालिके स्वाहा । मेरुतन्त्रे । ऋष्यादिः २२ अक्षरमन्त्रवत् । ध्यानं तु—

**शवरूपशिवस्थितां महाकालरतासक्तां शिवाभिर्दिक्षु वेष्टिताम् ।**

(५) कामवाग्भवताराद्या सप्तार्णाऽष्टाक्षरी—

(१) क्लीं परमेश्वरि स्वाहा, (२) ऐं परमेश्वरि स्वाहा, (३) ओं परमेश्वरि स्वाहा । महानिर्वाणतन्त्रे । ध्यानं दशाक्षरवत् ।

**(६) मूलबीजं ततो माया लज्जाबीजं ततः परम् ।**
**महाविद्या महाकाल्या महाकालेन भाषिता ॥**
**वर्गाद्यं वह्निसंयुक्तं रतिबिन्दुसमन्वितम् ।**
**एतत्त्रयं क्रमेणैव तदन्ते वह्निवल्लभा ॥**

**क्रीं ह्रीं ह्रीं क्रीं क्रीं क्रीं स्वाहा ।**

कालीकल्पतरु-विद्यार्णवतन्त्रानुसारं विश्वसारतन्त्रे ।

(७) निजबीजत्रयं कूर्चं बीजं लज्जा पुनस्तान्येव वह्निवल्लभा—क्रीं क्रीं क्रीं हूं ह्रीं ह्रीं स्वाहा ।

८—नवाक्षरः—

**(१) निजबीजत्रयं कूर्चयुग्मं लज्जायुगं ततः ।**
**स्वाहान्ता कथिता विद्या सर्वसम्पत्करी मता ॥**

**क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ।**

**(१) मूलबीजं समुद्धृत्य सम्बुद्ध्यन्तं पदद्वयम् ।**
**स्वाहान्ता कथिता विद्या सर्वशत्रुक्षयङ्करी ॥**

क्रीं दक्षिणे कालिके स्वाहा । तन्त्रसारे । ऋष्यादिः २२ अक्षरवत् । पुरश्चरणम्—एकलक्षजपः । घृतेन दशांशहोमः ।

९—दशाक्षरः—

**(१) मूलबीजं ततो मायां लज्जाबीजं ततः परम् ।**
**दक्षिणे कालिके चेति अस्त्रान्ता समुदीरिता ॥**

**क्रीं ह्रीं ह्रीं दक्षिणे कालिके फट् ।** (तन्त्रसारे)

मायाबोजस्थाने कूर्चबीजमङ्कितम् । ऋष्यादिः त्र्यक्षरवत् ।

**(२) कवचं मूलविद्याद्यं तदन्ते भुवनेश्वरी ।**
**दक्षिणे कालिके चेति अस्त्रान्ता समुदीरिता ॥**

**क्रीं हुं ह्रीं दक्षिणे कालिके फट् ।** (तन्त्रसारे)

ऋषिर्दक्षिणामूर्तिः, छन्दः पंक्तिः, दक्षिणकालिका देवता, अन्यत् २२ अक्षरात्मकमन्त्रवत् । पुरश्चरणं लक्षजपः । घृतेन दशांशहोमः ।

(३) क्रीं क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा । तन्त्रसारे । ऋष्यादिः २२ अक्षरवत् । पुरश्चरणं लक्षजपः । घृतेन दशांशहोमः ।

(४) बीजत्रयान्ते (त्र्यक्षरे) परमेश्वरि सम्बोधनं पदम् । वह्निकान्तावधिप्रोक्तो दशार्णोऽयं मनुः शिवे ।

ह्रीं श्रीं क्रीं परमेश्वरि स्वाहा । महानिर्वाणतन्त्रे ।

ध्यानम्—

**मेघाङ्गीं शशिशेखरां त्रिनयनां रक्ताम्बरं बिभ्रतीं**
**पाणिभ्यामभयं वरं च विलसद् रक्तारविन्दस्थिताम् ।**
**नृत्यन्तं पुरतो निपीय मधुरं माध्वीकमद्यं महा-**
**कालं वीक्ष्य विकासिताननवरामाद्यां भजे कालिकाम् ॥**

१०—एकादशाक्षरः—

**वाग्भवं हृदयं पश्चाद् वह्न्यारूढं प्रजापतिम् ।**
**चतुर्थस्वरसंयुक्तं बिन्दुनादविभूषितम् ॥**
**द्विगुणं च ततः कृत्वा ङेऽन्तरं कालिकापदम् ।**
**स्वाहान्ता कथिता विद्या प्रिये एकादशाक्षरी ॥**

**ऐं नमः क्रीं क्रीं कालिकायै स्वाहा ।**

तन्त्रसारे । ऋष्यादिः त्र्यक्षरमन्त्रवत् । पुरश्चरणं द्विलक्षजपः । घृतेन दशांशहोमः ।

कालीकल्पतरौ विद्यार्णवे च मन्त्रोद्धारः—वाग्भवः नमः मूलबीजं पुनस्तदेव कालिकायै वह्निवल्लभा ।

(२) तदन्ते (नवाक्षरान्ते) वह्निसुन्दरी–क्रीं क्रीं ह्रीं दक्षिणे कालिके स्वाहा । तन्त्रसारे, ऋष्यादिः दशाक्षरमन्त्रवत् ।

**(३) हृदयं वाग्भवं देवि निजबीजयुगं ततः ।**
**कालिकायै पदं चोक्त्वा तदन्ते वह्निसुन्दरी ॥**

नमः ऐं क्रीं क्रीं कालिकायै स्वाहा ।

तन्त्रसारे । ऋष्यादिः २२ अक्षरमन्त्रवत् । पुरश्चरणं लक्षजपः । घृतेन होमः ।

११—द्वादशाक्षरः—

**बीजत्रयं कूर्चं माया तानि पुनः क्रमात् ।**
**स्वाहान्ता कथिता विद्या चतुर्वर्गफलप्रदा ॥**

क्रीं क्रीं क्रीं हूं ह्रीं क्रीं क्रीं क्रीं हूं ह्रीं स्वाहा ।

१२—चतुर्दशाक्षरः—

**(१) मूलद्वयं कूर्चयुग्मं तथा लज्जाद्वयं ततः ।**
**पुनस्तान्येव बीजानि तदन्ते वह्निसुन्दरी ॥**

क्रीं क्रीं हूं हूं ह्रीं ह्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा। तन्त्रसारे,। ऋष्यादिः २२ अक्षरवत्। एकलक्षजपः। घृतेन होमः।

**(२) काली कूर्चं च हृल्लेखा दक्षिणे कालिके पठेत्।**
**पुनर्बीजत्रयं वह्निवधूर्मन्वक्षरो मनुः॥**

क्रीं हूं ह्रीं दक्षिणे कालिके क्रीं हूं ह्रीं स्वाहा। मन्त्रमहोदधौ। ऋष्यादिः २२ अक्षरवत्। मन्त्रमहार्णवेऽप्येष एव। मेरुतन्त्रे हूं इत्यस्य स्थाने हुम् इति।

१३—पञ्चदशाक्षरः—

**(१) नमः पाशाङ्कुशो द्वेधा फट् स्वाहा चैव कालिके।**
**दीर्घतनुच्छदं कालीमनुः पञ्चदशाक्षरः॥**

नमः नमः आं आं क्रों क्रों फट् स्वाहा कालिके हूं।
तन्त्रसारे। ऋष्यादिः १४ अक्षरमन्त्रवत्।

**(२) नमः पाशाङ्कुशे द्वेधा फट् स्वाहा कालिकालिके।**
**दीर्घतनुच्छदः कालीमनुः पञ्चदशाक्षरः॥**

नमः आं आं क्रीं क्रीं फट् स्वाहा कालिकालिके हूं। कालीतन्त्रे। ऋष्यादिः २२ अक्षरमन्त्रवत्।

**(३) मन्त्रराजे क्रीं पुनः प्रोक्तं बीजसप्तकमुत्सृजेत्।**
**तिथिवर्णो महामन्त्र उपास्तिः पूर्वजन्मतः॥**

हूं हूं क्रीं क्रीं क्रीं ह्रीं ह्रीं दक्षिणे कालिके स्वाहा। मन्त्रमहोदधौ। ऋष्यादिः २२ अक्षरमन्त्रवत्।

मन्त्रमहार्णवे तु—ओं क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणकालिके स्वाहा।

१४—षोडशाक्षरः—

**(१) ब्रह्मत्रयं समुद्धृत्य रतिवह्निविभूषितम्।**
**नादबिन्दुसमाक्रान्तं लज्जाकूर्चद्वयं पुनः॥**

**पुनः क्रमेण चोद्धृत्य वह्निजायावधिर्मनुः ।**
**षोडशीयं समाख्याता सर्वसम्पत्प्रदायिनी ॥**

क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं स्वाहा । तन्त्रसारे । ऋष्यादिः चतुर्दशाक्षरमन्त्रवत् ।

**(२) क्रीं क्रीं क्रीं हुं समुच्चार्य हुं लज्जाद्वयमुच्चरेत् ।**
**दक्षिणे कालिके स्वाहा नृपवर्णः प्रकीर्तितः ॥**

क्रीं क्रीं क्रीं हुं हुं हुं ह्रीं ह्रीं दक्षिणे कालिके स्वाहा । मेरुतन्त्रे । ऋष्यादिः पूर्ववत् ।

**(३) दशार्णमन्त्रणपदात् कालिके पदमुच्चरेत् ।**
**पुनराद्यत्रयं बीजं वह्निजायां ततो वदेत् ॥**
**षोडशीयं समाख्याता सर्वतन्त्रेषु गोपिता ॥**

ह्रीं श्रीं क्रीं परमेश्वरि कालिके ह्रीं श्रीं क्रीं स्वाहा । महानिर्वाणतन्त्रे ध्यानं दशाक्षरवत् ।

१५—सप्तदशाक्षरः—

(१) **वध्वाद्या प्रणवाद्या चेदेषा सप्तदशी द्विधा**—स्त्रीं ह्रीं श्रीं क्रीं परमेश्वरि कालिके ह्रीं श्रीं क्रीं स्वाहा ।

(२) ओं ह्रीं श्रीं क्रीं परमेश्वरि कालिके ह्रीं श्रीं क्रीं स्वाहा । महानिर्वाणतन्त्रे । ध्यानं द्वादशाक्षरवत् ।

१६—विंशत्यक्षरः—

(१) स्वाहा प्रणवरहितश्चेद् विंशत्यक्षरः, त्रयोविंशत्यक्षररहितो मन्त्रो यदि स्यात्तर्हि । ह्रीं ह्रीं हूं हूं क्रीं क्रीं क्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं । तन्त्रसारे । ऋष्यादिः २४ अक्षरमन्त्रवत् । कालीकल्पतरौ—विंशत्यर्णा महाविद्या स्वाहा प्रणववर्जिता ।

**मूलबीजद्वयं ब्रूयात् ततः कूर्चद्वयं वदेत् ।**
**लज्जायुग्मं समुद्धृत्य सम्बुद्धयन्तं पदद्वयम् ॥**
**पूर्ववत् षट् तथा बीजान्यन्ते वह्निसुन्दरी ॥**

क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं हूं हूं ह्रीं ह्रीं। तन्त्रसारे। न्यासादिः त्र्यक्षरमन्त्रवत्।

१७—एकविंशत्यक्षरः—

**मायाद्वयं कूर्चयुग्ममस्त्रान्तमादनत्रयम् ।**
**मायाबिन्द्वीश्वरयुतं दक्षिणे कालिके पदम् ॥**
**संहारक्रमयोगेन बीजसप्तकमुद्धरेत् ।**
**एकविंशाक्षरो ज्ञेयस्ताराद्यः कालिकामनुः ॥**

ओं ह्रीं ह्रीं हूं हूं क्रीं क्रीं क्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं। तन्त्रसारे। ऋष्यादिः २२ अक्षरमन्त्रवत्। मन्त्रमहोदधौ—

**मायायुग्मं कूर्चयुग्मं करशान्तिविधुत्रयम् ।**
**दक्षिणे कालिके पूर्वबीजानि स्युर्विलोमतः ।**
**एकविंशतिवर्णात्मा ताराद्यः पूर्ववद् यजिः ॥**

मन्त्रमहार्णवे 'दक्षिणकालिके' इति पाठः। कालीतन्त्रे 'मस्त्रान्तम्' इत्यस्य स्थाने 'मैन्द्रान्तम्' तथा 'एकविंशाक्षरो ज्ञेयः' इत्यस्य स्थाने 'एकविंशत्यक्षराढ्यः' इति पाठः। सिद्धेश्वरीतन्त्रे मन्त्रोद्धारस्तु पूर्ववत्; किन्तु 'ज्ञेयस्ताराद्यः' इत्यस्य स्थाने 'मन्त्रस्ताराद्यः' इति पाठः। मेरुतन्त्रे— ओं ह्रीं ह्रीं हुं हुं युगं त्रिः क्रीं दक्षिणे कालिके वदेत्। त्रिः क्रीं हुं हुं च। इति। अत्र कूर्चबीजस्थाने कवचबीजं प्रयुक्तम्। अर्थाद् हूं=हुं इति। अत्र पुरश्चरणे घृतेन दशांशहवनं विहितम्।

१८—द्वाविंशत्यक्षरः—

**(१) कामत्रयं वह्निसंस्थं रतिबिन्दुसमन्वितम् ।**
**कूर्चयुग्मं तथा लज्जायुग्मं च तदनन्तरम् ॥**
**दक्षिणे कालिके चेत् पूर्वबीजानि चोच्चरेत् ।**
**अन्ते वह्निवधूं दद्याद् विद्याराज्ञी प्रकीर्तिता ॥**

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा । तन्त्रसारे । भैरव ऋषिः, उष्णिक् छन्दः, दक्षिणकालिका देवता, ह्रीं बीजम्, हूं शक्तिः, क्रीं कीलकम्, पुरुषार्थचतुष्टयसिद्ध्यर्थे । ओं ह्रां, ओं ह्रीं इत्यादिना षडङ्गन्यासः । ध्यानम्–**'करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम्'** इत्यादि । पुरश्चरणं द्विलक्षजपः । पूर्णानन्दमतानुसारं लक्षमात्रमेव पर्याप्तम् । घृतेन होमः । मन्त्रमहोदधौ—

**क्रोधीशत्रितयं वह्निवामाक्षिविधुभिर्युतम् ।**
**वराहद्वितयं वामकर्णचन्द्रसमन्वितम् ॥**
**मायायुग्मं दक्षिणे च दीर्घा सृष्टिः सदृक्क्रिया ।**
**चक्री झिण्टीशमारूढः प्रागुक्तं बीजसप्तकम् ।**
**मन्त्रो वह्निप्रियान्तोऽयं द्वाविंशत्यक्षरो मतः ॥**

अत्र देवता कालीति तथा षडङ्गन्यासः ओं क्रां क्रीं इत्यादिना निर्दिष्टः । ध्यानं तु—**सद्यश्छिन्नशिरः कृपाणमभयं ·····भजे कालिकामिति** ।

पुरश्चरणम् एकलक्षजपः । करवीरपुष्पैर्दशांशहोमः ।

कालीतन्त्रे––समन्वितमित्यत्र विभूषितम्, लज्जायुग्ममित्यस्य स्थाने लज्जायुगलम्, चोच्चरेदित्यत्र चोद्धरेदिति पाठः । ऋष्यादिः पूर्ववत् । विनियोगे कवित्वार्थे इति पाठः । षडङ्गन्यासः—ओं क्रां क्रीं इत्यादिना । ध्यानं तन्त्रसारसदृशम् । तन्त्रसारे–'योगिनीचक्रसहितां कालिकां भावयेत् सदा' इति पंक्तिर्मध्येऽतिरिक्ता वर्तते तथा सर्वकामसमृद्धये इति पाठः ।

विद्यार्णवतन्त्रे वीरतन्त्रस्यायमुद्धार उद्धृतः—

**कामाक्षरं वह्निसंस्थं वामनेत्रविभूषितम् ।**
**बिन्दुनादसमायुक्तं बीजमेतत् त्रयं लिखेत् ॥**
**कूर्चयुग्मं ततो देवि लज्जायुग्ममनन्तरम् ।**
**दक्षिणे कालिके चेति सम्बोधनपदान्वितम् ॥**
**सप्तबीजं पुनः प्रोच्य स्वाहान्तं मनुमुद्धरेत् ।**

(श्रीकालीकल्पतरौ, पृ० ९१)

निरुत्तरतन्त्रे--

त्रिगुणा[1] च कूर्चयुग्मं लज्जायुग्मं ततः परम् ।
दक्षिणे कालिके चेति सप्तबीजानि योजयेत् ॥
अन्ते वह्निवधूं दद्याद् विद्याराज्ञी प्रकीर्तिता ॥

फेत्कारिणीतन्त्रे—

वर्गाद्यं वह्निसंस्थं रतिबिन्दुसमन्वितम् ।
त्रिगुणं च ततः कूर्चयुग्मं लज्जायुगं ततः ॥
दक्षिणे कालिके चेति पूर्ववच्च ततः पुनः ।
ठद्वयेन समायुक्तं मनुमेतं विदुर्बुधाः ॥
द्वाविंशत्यक्षरो मन्त्रः सर्वसिद्धिप्रदो नृणाम् ॥

(कालीकल्पतरौ, पृ० ८१)

(२) ह्रीं ह्रीं हूं हूं क्रीं क्रीं क्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा। तन्त्रसारे। ऋष्यादिः २२ अक्षरमन्त्रवत्।

(३) कूर्चद्वयं त्रयं काल्या मायायुग्मं तु दक्षिणे ।
कालिके पूर्वबीजानि स्वाहा मन्त्रो वशीकृतौ ॥

हूं हूं क्रीं क्रीं क्रीं ह्रीं ह्रीं दक्षिणे कालिके हूं हूं क्रीं क्रीं क्रीं ह्रीं ह्रीं स्वाहा। मन्त्रमहोदधौ। ऋष्यादिः २२ अक्षरवत्। मन्त्रमहार्णवे—अस्मिन् मन्त्रे ओंकारस्य योगो वर्तते। 'दक्षिणे' इत्यस्य स्थाने 'दक्षिण' इति पाठः।

(४) कालीबीजत्रयं प्रोक्त्वा लज्जाबीजद्वयं ततः ।
हूंकारौ द्वौ ततः पश्चाद् दक्षिणे कालिके ततः ॥
कालीबीजत्रयं तस्माल्लज्जाबीजद्वयं पठेत् ।
द्वौ च स्वाहान्तहूंकारौ कालीमन्त्र उदाहृतः ॥

---

१. त्रिगुणा=एकाक्षरी।

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा। शाक्तप्रमोदे। ऋष्यादिस्तन्त्रसारवत्। न्यासः क्रीं क्रीं इत्यादिभिः। ध्यानम्—**शवारूढां महाभीमां···श्मशानालयवासिनीम्।**

**(५) क्रीं क्रीं क्रीं हुं द्विरुच्चार्य लज्जाबीजद्वयं तथा।**
**दक्षिणे कालिके पश्चात् पुनर्बीजानि संवदेत्॥**

**क्रमेणैवाग्निगृहिणीमन्त्रो द्वाविंशदर्णकः॥**

क्रीं क्रीं क्रीं हुं हुं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हुं हुं ह्रीं ह्रीं स्वाहा। मेरुतन्त्रे। भैरव ऋषिः, त्रिष्टुप् छन्दः, कालिकादेवी देवता, ह्रीं बीजम्, हुं शक्तिः। क्रीं क्रीं इत्यादिना न्यासः। ध्यानं तन्त्रसारवत्; किन्तूभयत्र बहुपाठभेदो वर्तते। पुरश्चरणे लक्षजपः। घृतेन होमः।

१९—त्रयोविंशत्यक्षरः—

(१) अयं (एकविंशत्यक्षरः) स्वाहान्तश्चेत् त्रयोविंशत्यक्षरः। ओं ह्रीं ह्रीं हूं हूं क्रीं क्रीं क्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा। तन्त्रसारे। ऋष्यादिः २२ अक्षरमन्त्रवत्।

कालीकल्पतरावुद्धारः—स्वाहान्तश्च त्रयोविंशाक्षरोऽयं मनुराजकः।

(२) ओं क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं दक्षिणे कालिके क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं स्वाहा।

# दक्षिणाकालीमन्त्राः

(कालीतन्त्रे प्रथमपटले)

कामत्रयं वह्निसंस्थं रतिबिन्दुविभूषितम् ।
कूर्चयुग्मं तथा लज्जायुगलं तदनन्तरम् ॥ ५ ॥
दक्षिणे कालिके चेति पूर्वबीजानि चोद्धरेत् ।
अन्ते वह्निवधूं दद्याद् विद्याराज्ञी प्रकीर्तिता ॥ ६ ॥

कामः ककारः, तस्य त्रयं ककारत्रयमित्यर्थः, वह्निः रेफः, रतिः ईकारः, बिन्दुः अनुस्वारः, एवं 'क्रीं' इति भवति । कूर्चं हूं, लज्जा ह्रीं, मन्त्रः—क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ।

भैरवोऽस्य ऋषिः प्रोक्तः उष्णिक्छन्द उदाहृतम् ।
देवता कालिका प्रोक्ता लज्जाबीजं तु बीजकम् ॥ ८ ॥
शक्तिस्तु कूर्चबीजं स्यादनिरुद्धसरस्वती ।
कवित्वार्थे नियोगः स्यादेवं ऋष्यादिकल्पना ॥ ९ ॥

एतद् विद्यार्णवतन्त्रे २१२ पृष्ठेऽप्यस्ति । मन्त्रमहोदधौ तृतीयतरङ्गे ७२ पृष्ठे कालीतन्त्रोक्तदक्षिणकालिकाया द्वाविंशत्यक्षरात्मको मन्त्रस्तथैवोल्लिखितोऽस्ति; किन्तु विनियोगे कश्चिद् भेदस्तद्यथा—भैरव ऋषिः, उष्णिक् छन्दः, काली देवता, माया बीजम्, दीर्घवर्म शक्तिः, दक्षिणकालिकाप्रीत्यर्थे जपे विनियोगः ।

तन्त्रान्तरे फलान्तरश्रवणमपि वर्तते । यथा कुलचूडामणौ—

भैरवोऽस्य ऋषिः प्रोक्त उष्णिक् छन्द उदाहृतम् ।
दक्षिणा कालिका देवी चतुर्वर्गफलप्रदा ॥ इति ॥

नारदपुराणे ८५ अध्याये—

सृष्टिक्रियान्विता शान्तिर्बिन्द्वाढ्या च त्रिधा पुनः ।
अरुणाक्ष्या दीपिका बिन्दुयुक्ता द्विधा ततः ॥
मायाद्वयं ततः पश्चाद् दक्षिणे कालिके पदम् ।
पुनश्च सप्तबीजानि स्वाहान्तोऽयं मनूत्तमः ॥

## अथ भद्रकाली[1]

निजबीजत्रयं कूर्चद्वयं मायाद्वयं भद्रकाल्यै निजबीजत्रयं कूर्चद्वयं मायाद्वयं स्वाहा। यथा—

भद्रकाल्यादयो विद्याः कथ्यन्ते शृणु पार्वति।
कामबीजादिकं बीजं सर्वं पूर्वापरे यजेत्॥
भद्रकालीं तथा ङेन्तां बीजमध्ये नियोजयेत्।
स्वाहान्ता कथिता विद्या विंशत्यर्णात्मिका परा॥
चतुर्वर्गप्रदा विद्या भद्रकाली शुभावहा॥

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं भद्रकाल्यै क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा। अत्रेदं विचारणीयं यत् पूर्वं निजबीजत्रयमुक्तं मन्त्रोद्धारश्लोके कामबीजादिकमुक्तम्। मन्त्रे तु निजबीजमेवास्ति, न तु कामबीजम्। कामबीजस्वीकारे 'क्रीं' इत्यस्य स्थाने 'क्लीं' इति प्रयोक्तव्यः।

अथ निग्रहे मन्त्रान्तरं यथा—

प्रासादबीजमुद्धृत्य कालीति पदमुद्धरेत्।
महाकालीपदञ्चोक्त्वा किलियुग्नामतः परम्॥
अस्त्रवह्निप्रियान्तोऽयं भद्रकालीमहामनुः।
आराध्य प्रजपेन्नित्यमष्टोत्तरशतं मनुम्॥
जपमाला विधातव्या ह्यष्टोत्तरशतेन तु।
ध्यातव्येयं महादेवी भद्रकाली भयापहा॥

---

१. आगमतत्त्वविलासे चतुर्थपरिच्छेदे, पृ० १०५९।

**आराध्येति**। भूतशुद्धिप्राणायामौ कृत्वा पञ्चोपचारैः शिवलिङ्गे सम्पूज्येत्यर्थः। प्रासादबीजम्—हौं। मन्त्रः—हौं काली महाकाली किलि किलि फट् स्वाहा।

ध्यानं तु—

**क्षुत्क्षामा कोटराक्षी मसिमलिनमुखी मुक्तकेशी रुदन्ती**
**नाहं तृप्ता वदन्ती जगदखिलमिदं ग्रासमेकं करोमि।**
**हस्ताभ्यां धारयन्ती ज्वलदनलशिखासन्निभं पाशयुग्मं**
**दन्तैर्जम्बूफलाभैः परिहरतु भयं पातु मां भद्रकाली॥**
**प्रयोगमात्रं कर्तव्यं देवि निग्रहकारकम्।**
**इयं देवी महादेवी शत्रुनिग्रहकारिणी॥**
**यथेष्टचिन्तया चिन्त्या धर्मकामार्थसिद्धिदा।**

अत्र पुरश्चरणादिकं दक्षिणकालीतन्त्रवदिति केचित्। वस्तुतस्तु पुरश्चरणमष्टोत्तरसहस्रजपः, विशेषानुक्तत्वात्।

बृहत्तन्त्रसारे २९४–२९५ पृष्ठयोरप्येतत् सर्वमुल्लिखितम्। अत्र बहुषु स्थलेषु पाठभेदोऽपि वर्तते।

## भद्रकाली

अष्टाक्षरमन्त्रः—क्रौं भद्रकालि क्रीं स्वाहा।

उद्धारः—

**निजबीजं महेशानि सम्बोधनपदं ततः।**
**पुनश्च कालिकाबीजं ततो वह्निवधूं न्यसेत्॥**

(तोडलतन्त्रे, ३ पटले)

दशाक्षरमन्त्रः—ओं फ्रें स्त्रीं हुं छ्रीं क्रों आं ह्स्ख्फ्रें क्लीं ह्लीं।

उद्धारः—

**प्रणवं शाकिनीबीजं वधूं कवचमेव च।**
**योगिनीमंकुशं पाशं फेत्कारो स्मरमायिकम्॥**
**नवाक्षरो महामन्त्रो भद्रकाल्याः प्रकीर्त्यते॥**

कामकला-कालीखण्डे महाकालसंहितायाम्। उद्धारे मन्त्रस्य नवाक्षरत्वं कथितम्; किन्तु वर्ततेऽयं दशाक्षरः।

ध्यानम्—

सिंहोपरि समासीनां मसीपुञ्जसमप्रभाम् ।
भ्रुकुटचरालवदनां त्रीक्षणां घोरदर्शनाम् ॥
शार्दूलत्वक्परीधानां विष्वग्विस्तारिताननाम् ।
अत्यन्तशुष्कसर्वाङ्गीं ललज्जिह्वाकरालिनीम् ॥
त्रेतागर्तस्थिताश्व ग्रसमाननयनां शिवाम् ।
नरमुण्डावलीहारां नादापूरितपुष्कराम् ॥
ज्वलद्धुतवहाकारविस्रस्तकचसञ्चयाम् ।
नरास्थिकृतसर्वाङ्गभूषणां जगदम्बिकाम् ॥
कोटिकोटिमहाघोरयोगिनीगणमध्यगाम् ।
कालीं दशभुजां सृक्कगलद्रुधिरर्चाचिताम् ॥
खड्गं त्रिशूलं विशिखं शक्तिं दक्षिणतः स्मरेत् ।
फलकं डमरुं चापं कपालं वामतोऽपि च ॥
व्यादाय वदनं घोरं दंष्ट्राभिः पूरितान्तरम् ।
लेलिहानचलद्विद्युत्समानरसनं महत् ॥
दानवासुरदैत्यानां कोटिमर्बुदमेव च ।
धारयित्वा च धृत्वा च सार्धं कटकटारवैः ॥
प्रक्षिप्य तत्र बाहुभ्यां चर्वयन्तीं हसन्मुखीम् ।
गिलन्तीं पूरयन्तीं च पातालतुलितोदराम् ॥

चतुर्दशाक्षरः—

ह्रौं कालि महाकालि किलि किलि फट् स्वाहा।

**प्रासादबीजमुद्धृत्य कालीति पदमुद्धरेत् ।**
**महाकालिपदं चोक्त्वा किलियुग्ममतः परम् ।।**
**अस्त्रं वह्निजायान्तोऽयं भद्रकालीमहामनुः ।।**

तन्त्रसारे। फेत्कारिणीतन्त्रे तु मन्त्रोद्धारे पाठान्तरद्वयम्। प्रथमपाठान्तरे किलियुगमित्यत्र कालियुग्मम् इति। एवं सति—ह्रौं कालि महाकालि कालि कालि फट् स्वाहा, इति मन्त्रस्वरूपम्। द्वितीयपाठान्तरे—केवलशब्दभेदो येन मन्त्रे किञ्चित्परिवर्तनं नास्ति। मन्त्रमहार्णवे—मन्त्रस्वरूपं भिन्नं तद्यथा—ओं ह्रौं कालि महाकालि किलि किले फट् स्वाहा। फेत्कारिणीतन्त्रेऽपरमेकं ध्यानम्—

**टङ्कं कपालं डमरुं त्रिशूलं संबिभ्रती चन्द्रकलावतंसा ।**
**पिंगोर्ध्वकेशी सितधूमनेत्रा भूयाद् विभूत्यै मम भद्रकाली ।।**

विंशाक्षरः—

क्रीं क्रीं क्रीं हूं हू ह्रीं ह्रीं भद्रकाल्यै, क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा।

**कामबीजादिकं बीजं सर्वं पूर्वापरे यजेत् ।**
**भद्रकालीं तथा ङेऽन्तां बीजमध्ये नियोजयेत् ।।**
**स्वाहान्ता कथिता विद्या विंशवर्णात्मिका परा ।**

(कालीकल्पतरौ, पृ० ९६)

सर्वेषां मन्त्राणां पूजा दक्षिणाकालीवत्।

कालिकापुराणे भद्रकालीमन्त्रः—

**आद्यद्वयं नेत्रबीजं मन्त्रस्योपान्तमन्तरे ।**
**वह्निनाऽन्तःस्वरेणेन्दुबिन्दुभ्यां तन्त्रमौग्रकम् ।।**
**नेत्रबीजं द्वितीयं तु द्विधावर्तितमुच्यते ।**
**भद्रकाल्यास्तु मन्त्रोऽयं धर्मकामार्थसिद्धये ।।**

(का० पु० ६१।३३–३४)

# अथ गुह्यकाली

विश्वसारतन्त्रे—

**अथ वक्ष्ये महेशानि विद्यां सर्वफलप्रदाम् ।**
**चतुर्वर्गप्रदां साक्षान्महापातकनाशिनीम् ॥**
**गुह्यकालीं महाविद्यां त्रैलोक्ये चातिदुर्लभाम् ॥**

१. मन्त्रो यथा—निजबीजत्रयं कूर्चद्वयं मायाद्वयं गुह्यकालिके निजबीजत्रयं कूर्चद्वयं मायाद्वयं वह्निप्रिया । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं गुह्यकालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ।

२. कामबीजत्रयं कूर्चद्वयं मायाद्वयं दक्षिणे कालिके कामत्रयं कूर्चद्वयं मायाद्वयं वह्निप्रिया । क्लीं क्लीं क्लीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्लीं क्लीं क्लीं हूं हूं ह्रीं ह्रीं स्वाहा ।

३. निजबीजं कूर्चं माया गुह्यकालिके निजबीजद्वयं कूर्चद्वयं मायाद्वयं वह्निजायेति षोडशी । क्रीं हूं ह्रीं गुह्यकालिके क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ।

४. शेषे **'कामबीजद्वयत्यागादियं विद्या चतुर्दशी'** । क्रीं हूं ह्रीं गुह्यकालिके हूं हूं ह्रीं ह्रीं स्वाहा ।

५. निजबीजद्वयं कूर्चद्वयं मायाद्वयं गुह्यकालिके स्वाहा । एषापि चतुर्दशाक्षरी । क्रीं क्रीं हूं हूं ह्रीं ह्रीं गुह्यकालिके स्वाहा ।

६. निजबीजत्रयं कूर्चद्वयं मायाद्वयं दक्षिणे कालिके स्वाहा । एषा पञ्चदशी । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके स्वाहा ।

७. कूर्चं माया गुह्ये कालिके निजबीजद्वयं मायाद्वयं स्वाहा । इयमपि पञ्चदशी । हूं ह्रीं गुह्ये कालिके क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ।

८. निजबीजं गुह्ये कालिके निजबीजं स्वाहा । क्रीं गुह्ये कालिके क्रीं स्वाहा ।

९ निजबीजं दक्षिणे कालिके निजबीजं स्वाहा । क्रीं दक्षिणे कालिके क्रीं स्वाहा ।

एतासां प्रमाणानि यथा विश्वसारे—

**इन्द्रादिरूढं वर्गाद्यं रतिबिन्दुसमन्वितम् ।**
**द्विगुणं च ततः कृत्वा ऐशानं च समुद्धरेत् ॥**
**षष्ठस्वरसमायुक्तं नादबिन्दुकलान्वितम् ।**
**द्विगुणं च ततः कृत्वा ऐशद्वयं समुद्धरेत् ॥**
**वामाक्षिवह्निसंयुक्तं नादबिन्दुविभूषितम् ।**
**तद् गुह्ये कालिके प्रोक्त्वा अथवा दक्षिणे वदेत् ॥**
**सप्तबीजं पुनः पूर्वक्रमेण योजयेत् ततः ।**
**वह्निजायावधिः प्रोक्ता विद्या त्रैलोक्यमोहिनी ॥**

वर्गाद्यं ककारः । रतिः ईकारः । इन्द्रः लकारः । (क्लीमिति) षष्ठस्वरः उः । (हुम्) वामाक्षि ईकारः । ऐशः, ऐशानो वा हकारः । वह्निः रः ।

## गुह्यकाली

**१—नवाक्षरः**—क्रीं गुह्ये कालिके क्रीं स्वाहा ।

**कामबीजं समुद्धृत्य सम्बुद्धचन्तपदद्वयम् ।**
**पुनः कामं तदन्ते च दद्याद् वह्नेश्च सुन्दरीम् ॥**

कालीकल्पतरौ ९६ पृ० विद्यार्णवतन्त्रादुद्धृतोऽयम् ।

चिन्त्यम्—कामबीजपदेन 'क्लीम्' इत्येव गृह्यते लोके । प्रसिद्धिश्चात्रैव । तन्त्रसारादिग्रन्थेष्वपि तादृशोऽर्थः स्वीकृतः; किन्तु कोषानुसारं 'क्रीम्'

इत्यपि कामबीजेनोच्यते । अतो मन्त्रकोषे भगवत्याः कालिकाया मन्त्रसन्दर्भे 'क्रीम्' इत्येवोपादीयते । समीचीनश्चैतत् प्रतिभाति । बुधैरत्र विचार्यम् ।

द्वितीयो मन्त्रः—क्रीं गुह्यकालिके क्रीं स्वाहा ।

**निजबीजं महेशानि सम्बोधनपदं ततः ।**
**पुनश्च कालिकाबीजं ततो वह्निवधूं न्यसेत् ॥**

**२—दशाक्षरः**—क्रीं दक्षिणे कालिके क्रीं स्वाहा ।

**दक्षिणे पदमाभाष्य भवेद् विद्या दशाक्षरी ।**

**३—चतुर्दशाक्षरः**—(१) क्रीं हूं ह्रीं गुह्ये कालिके हूं हूं ह्रीं ह्रीं स्वाहा ।

**कामबीजद्वयं हित्वा भवेद् विद्या चतुर्दशी ।**

षोडशाक्षरमन्त्रे कामबीजद्वयं त्यक्त्वेत्यर्थः ।

(२) क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं गुह्ये कालिके स्वाहा ।

**सप्तबीजं पुरा प्रोक्तं गुह्यान्ते कालिका पुनः ।**
**स्वाहान्ता कथिता विद्या सर्वतन्त्रेषु गोपिता ॥**

**४—पञ्चदशाक्षरः**—(१) क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके स्वाहा ।

**दक्षिणे पदमाभाष्य भवेत् पञ्चदशाक्षरी ।**

उपरिनिर्दिष्टे चतुर्दशाक्षरात्मके मन्त्रे 'गुह्ये' इति पदस्थाने 'दक्षिणे' इति पदे प्रयुक्ते सति सा विद्या पञ्चदशाक्षरी भवतीत्यर्थः । इत्थं नात्यन्तभेदो प्रतीयते तयोः ।

(२) हूं ह्रीं गुह्ये कालिके क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ।

**कामबीजं परित्यज्य अथवा षोडशाक्षरी ।**

अधोनिर्दिष्टषोडशाक्षरे कामबीजमर्थाद् निजबीजं 'क्रीं' इति परित्यज्य पञ्चदशाक्षरो भवति । अत्र मन्त्रादिप्रयुक्तस्यैव क्रींबीजस्य त्यागो विवक्षितो न त्वपरस्य ।

**५—षोडशाक्षरः**—क्रीं हूं ह्रीं गुह्ये कालिके क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ।

कामबीजं ततः कूर्चं तदन्ते भुवनेश्वरी ।
गुह्ये च कालिके चेति तथा बीजद्वयं भवेत् ॥
स्वाहान्ता कथिता विद्या सर्वतन्त्रेषु गोपिता ॥

अस्यार्थः—आदौ निजबीजं ततः कूर्चं मायां सम्बोधनपदद्वयम् । ततो निजबीजद्वयं कूर्चद्वयं मायाद्वयं वह्निवल्लभा ।

एष मन्त्रः कालीकल्पतरौ, विद्यार्णवतन्त्रे, विश्वसारतन्त्रे चोद्धृतोऽस्ति ।

६—सप्तदशाक्षरः—ह्लीं क्रीं क्रें हूं क्रों गुह्यकालि क्रीं छ्रीं हस्ख्फ्रें फ्रों छ्रीं क्रीं स्वाहा ।

त्रपानङ्गं शाकिनीं च क्रोधमंकुशमेव च ।
गुह्यशब्दादपि वदेत् कालिशब्दं वरानने ॥
कालीं च योगिनीबीजं फेत्कारीं चण्डमेव च ।
योगिनीकामिनीबीजं स्वाहान्ते विनिवेशयेत् ॥
सुदुर्लभो मन्त्रराजो ज्ञेयः सप्तदशाक्षरः ॥

महाकालसंहितायां कामकलाकालीखण्डे । ध्यानम्—

आपादपद्मादारभ्याकण्ठं पाटलसन्निभा ।
मुखे दूर्वादलश्यामा जटाभारविराजिता ॥
शवोपरि समासीना किञ्चिद् विस्तारितानना ।
दशभिर्वदनैर्युक्ता त्रित्रिचक्षुर्विराजितैः ॥
मुण्डकुण्डलसंवीता सर्वेषु वदनेष्वपि ।
नरास्थिविहिताकल्पा कल्पकल्पक्षयङ्करा ॥
सर्वत्र लम्बितजटा सर्वत्रापदि तारिणी ।
किञ्चिच्छुष्कगलोद्देशा किञ्चिदाकुञ्चितानना ॥
पिचिण्डिला निम्ननाभिर्नातिपीनपयोधरा ।
स्थूलोरुजङ्घा विकटा सर्वाभरणभूषिता ॥

अदीर्घषोडशापीनदोर्मण्डलविराजिता ।
नीलाम्बरपरीधाना नीलस्रग्गन्धलेपना ॥
शिवापोतं च खट्वाङ्गं गदामङ्कुशमेव च ।
घण्टां नृमुण्डं वामेन दधती खर्पराभये ॥
खड्गं त्रिशूलं चक्रं च नागपाशं ततः परम् ।
जपमालां च डमरुं कर्त्रिकाम्बरमेव च ॥
धारयन्ती दक्षिणेनोपविष्टा कुणपोपरि ।
योगपट्टसमुन्नद्धजानुमध्यकराम्बुजा ॥
समस्तविग्रहव्यापिमुण्डमालाविराजिता ।
सर्वकामप्रदा देवी सर्वसिद्धिविधायिनी ॥

७—एकविंशाक्षरः—क्रीं क्रीं क्रीं हूं हूं ह्लीं ह्लीं गुह्ये कालिके क्रीं क्रीं क्रीं हूं हूं ह्लीं ह्लीं स्वाहा ।

इन्द्रादिरूढं वर्गाद्यं रतिबिन्दुसमन्वितम् ।
त्रिगुणं च ततः कृत्वा ईशानं च समुद्धरेत् ॥
षष्ठस्वरसमायुक्तं बिन्दुनादकलान्वितम् ।
द्विगुणं च ततः कृत्वा ईशद्वयं समुद्धरेत् ॥
वामाक्षिवह्निसंयुक्तं नादबिन्दुकलान्वितम् ।
तद् गुह्ये कालिके प्रोक्त्वा चाथवा दक्षिणे वदेत् ॥
सप्तबीजं ततः पूर्वं क्रमेण विनियोजयेत् ।
वह्निजायावधिः प्रोक्ता विद्या त्रैलोक्यमोहिनी ॥

८—द्वाविंशाक्षरः—अयं मन्त्रो दक्षिणाकाल्या द्वाविंशाक्षरमन्त्र एव नान्यः । षष्ठमन्त्रं विहाय सर्वेषामस्या मन्त्राणां सप्तानां दक्षिणाकालीवद् विधिः ।

# अथ महाकाली

सप्तबीजानि महाकालि सप्तबीजानि स्वाहा। यथा—बृहत्तन्त्रसारे (२६२ पृ०)—

बीजानि चोच्चरेत् पूर्वं महाकालिपदं ततः।
तदन्ते सप्तबीजानि स्वाहान्ता सर्वसिद्धिदा॥
विंशत्यर्णा महाविद्या महाकाल्याः प्रकीर्तिता।

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं महाकालि क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा।

एतासां पूजाजपादि दक्षिणावत्। विशेषस्तु भूपुरे इन्द्रादिदिक्पालान् तद्बहिर्वज्रादीन् भूगृहस्य पूर्वादिचतुर्द्वारे विष्णुं शिवं सूर्यं गणेशं पूजयेत्। ओं विष्णवे नमः, ओं शिवाय नमः, ओं सूर्याय नमः, ओं गणेशाय नमः।

तद्यथा—

भूगृहे लोकपालांश्च तदस्त्राणि च तद्बहिः।
भूपुरे च चतुर्दिक्षु पूजयेत् क्रमतः सुधीः॥
विष्णुं शिवं तथा सूर्यं गणेशं पूजयेत्ततः॥

ध्यानन्तु—

महामेघप्रभां देवीं कृष्णवस्त्रपिधायिनीम्।
ललज्जिह्वां घोरदंष्ट्रां कोटराक्षीं हसन्मुखीम्॥
नागराजलतोपेतां चन्द्रार्धकृतशेखराम्।
द्यां लिखन्तीं जटामेकां लेलिहानां शवं स्वयम्॥
नागयज्ञोपवीताङ्गीं नागशय्यानिषेदुषीम्।
नागेन रसनाहारकल्पितां रत्ननूपुराम्॥

वामे शिवस्वरूपं तं कल्पितं वत्सरूपकम् ।
द्विभुजां चिन्तयेद् देवीं नागयज्ञोपवीतिनीम् ॥
नरदेहसमारब्धकुण्डलश्रुतिमण्डिताम् ।
प्रसन्नवदनां सौम्यां नवरत्नविभूषिताम् ॥
नारदाद्यैर्मुनिगणैः सेवितां शिवमोहिनीम् ।
साट्टहासां महाभीमां साधकाभीष्टदायिनीम् ॥

जटामेकामिति धारयन्तीमिति शेषः। पूजादि सर्वं दक्षिणावत्। उच्चाटने महाकाल्या मन्त्रान्तरम्, यथा—

ओं फ्रें फ्रें क्रें क्रें शत्रून् गृहाण हुं फट् स्वाहा।

अत्र द्वितीयतृतीयबीजे पवर्गद्वितीयरेफैकादशस्वरबिन्दुभिः, चतुर्थपञ्चमे ककाररेफैकादशस्वरबिन्दुभिः।

अथास्य प्रयोगः—अत्राङ्गन्यासादिकं न कर्त्तव्यम्, तथा च—

न्यासशुद्ध्यादिकानाञ्च नात्र कार्या विचारणा ।
कृष्णतोयैश्च सम्पूर्णे कृष्णकुम्भे च कालिकाम् ॥
पञ्चवक्त्रां महारौद्रीं प्रतिवक्त्रं त्रिलोचनाम् ॥
शक्तिशूलधनुर्बाणखड्गखेटवराभयान् ।
दक्षादक्षभुजैर्देवीं बिभ्राणां भूरिभूषणाम् ॥

एवं ध्यात्वा यथाविध्युपचारैरभ्यर्च्य कुम्भे पूर्वादीशानपर्यन्तं ब्राह्मी-माहेश्वरी-कौमारी-वैष्णवी-वाराह्यैन्द्री-चामुण्डा-चण्डिका अष्टशक्तीः पूजयेत्। तथा—

नामोच्चारणसम्बन्धं वह्नौ प्रज्वलितेऽस्वरे ।
जुहुयाद् वैरिणां शुद्धौ देवीमन्त्रं जपंस्तथा ॥
समिधः पिचुमर्दस्य तथा विभीतकाष्ठिकाः ।
गृहधूमः श्मशानान्तविभीताङ्गारहोमतः ॥

सप्ताहाद् वैरिणं हन्ति कालिकामन्त्रयोगतः ॥
उच्चाटनं चापराह्णे सन्ध्यायां मारणं तथा ।
दक्षिणस्यां दिशि स्थित्वा ग्रामादेर्दक्षिणामुखः ॥

एकाक्षरः—क्रीं ।

अथातः संप्रवक्ष्यामि महाकालीमनुं प्रिये ।
यस्य विज्ञानमात्रेण सर्वसिद्धीश्वरो भवेत् ॥
एकाक्षरीसमा नास्ति विद्या त्रिभुवने प्रिये ।
महाकाली गुह्यविद्या कलिकाले च सिद्धिदा ॥
क्रोधीशं क्षतजारूढं धूम्रभैरव्यलक्षितम् ।
नादबिन्दुसमायुक्तं मन्त्रं स्वर्गेऽपि दुर्लभम् ॥

त्र्यक्षरः—ऐं क्रीं ह्रीं ।

वाग्भवं बीजमुच्चार्य कामराजपदं ततः ।
मायाबीजं ततो भद्रे त्र्यक्षरं मन्त्रमीरितम् ॥

अपरः—क्रीं हूं ह्रीं ।

कामराजं ततः कूर्चं मायाबीजमतः परम् ।
अपरं त्र्यक्षरं प्रोक्तं पूर्वोक्तं फलदं प्रिये ॥

अपरः—ओं ह्रीं ह्रीं ।

हालाहलं समुच्चार्य मायाद्वयमतः परम् ।
एतत्तु त्र्यक्षरं देवि सर्वकामफलप्रदम् ॥

(कंकालमालिनीतन्त्रे, १८ पृ०)

भैरव ऋषिः, उष्णिक् छन्दः, महाकाली देवता, पुरुषार्थचतुष्टय-सिद्ध्यर्थे विनियोगः । क्रीं क्रीं इत्यादिना न्यासः ।

ध्यानम्—

हिमालयगिरेर्मध्ये नगरे भैरवस्य च ।
दिव्यस्थाने महापीठे मणिमण्डपराजिते ॥
नारदाद्यैर्मुनिश्रेष्ठैः संसेवितपदाम्बुजाम् ।
नीलेन्दीवरवर्णिनीं युग्मापीनतुङ्गस्तनीम् ॥
सुप्तश्रीहरिपीठराजितवतीं भीमां त्रिनेत्रां शिवाम् ।
मुद्राखड्गकरां वराभययुतां चित्राम्बरोद्दीपिनीम् ॥
वन्दे चञ्चलचन्द्रकान्तमणिभिर्मालां दधानां पराम् ॥

**त्रयोदशाक्षरः**—फ्रें फ्रें क्रों क्रों पशून् गृहाण हुं फट् स्वाहा । (मन्त्रकोषे)

**चतुर्दशाक्षरः**—ओं क्ष्रैं क्ष्रैं क्रें क्रें पशुं गृहाण हुं फट् स्वाहा । (मेरुतन्त्रे) । ऋष्यादिर्नास्ति, न्यासस्याप्यावश्यकता नास्ति । कृष्णजलपूरित-कृष्णघटे ।

# श्मशानकाली

(आगमतत्त्वविलासे, चतुर्थपरिच्छेदे, १०६४ पृ०)

निजबीजत्रयं कूर्चद्वयं मायाद्वयं श्मशानकालि पुनस्तानि स्वाहा। यथा—

**सप्तबीजं समुद्धृत्य श्मशानकालि चेत्तथा।**
**पुनर्बीजं क्रमेणैव स्वाहान्ता सर्वसिद्धिदा॥**
**विंशत्येकाधिका विद्या श्मशानकालिका मता॥**

अस्याः सर्वं भद्रकालीवत्। मन्त्रस्तु–क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं श्मशानकालि क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा।

अथास्या मन्त्रान्तरं कालीतन्त्रे—

**वाणीं मायां ततो लक्ष्मीं कामबीजमतः परम्।**
**कालिके संपुटत्वेन चतुष्कं बीजमालिखेत्॥**
**एकादशार्णा देवेशि चतुर्वर्गप्रदायिनी॥**

मन्त्रस्तु—ऐं ह्रीं श्रीं क्लीं कालिके क्लीं श्रीं ह्रीं ऐं।

अन्यत्र **सप्ताक्षरः**—क्लीं कालिकायै नमः। तन्त्रसारे। ऋष्यादिरेकादशाक्षरमन्त्रवत्।

**दशाक्षरः**—क्रीं श्मशानकालिके क्रीं स्वाहा। तोडलतन्त्रे तृतीयपटले।

**निजबीजं महेशानि सम्बोधनपदं ततः।**
**पुनश्च कालिकाबीजं ततो वह्निवधूं न्यसेत्॥**

**एकादशाक्षरः**—ऐं श्रीं ह्रीं क्रीं कालिके ऐं श्रीं ह्रीं क्रीं।

वाणी रमा लज्जा कामकालिके पुनश्चतुर्बीजानि। कालीकल्पतरौ, ६५ पृ०। ऋषिः भृगुः, छन्दः निवृत्, देवता श्मशानकालिका, बीजम् ऐं।

शक्तिः ह्लीं, कीलकं क्रीं, चतुर्वर्गसिद्धये विनियोगः। अन्यत् सर्वं दक्षिणाकालिकावत्।

ध्यानम्—

**अञ्जनाद्रिप्रभां देवीं श्मशानालयवासिनीम्।**
**रक्तनेत्रां मुक्तकेशीं शुष्कमांसातिभीषणाम्॥**
**पिङ्गाक्षीं वामहस्तेन मद्यपूर्णं समांसकम्।**
**सद्यःकृन्तं शिरो दक्षहस्तेन दधतीं शिवाम्॥**
**स्मितवक्त्रां सदा वाममांसचर्वणतत्पराम्।**
**नानालङ्कारभूषाढ्यां नग्नां मत्तां सदाशिवैः॥**

(२) ऐं ह्लीं श्रीं क्लीं कालिके क्लीं श्रीं ह्लीं ऐं।

मन्त्रमहार्णवे तन्त्रसारे चोक्तध्यानश्लोकेषु बहुपाठभेदः।

पुरश्चरणम्—११ लक्षजपः।

**चतुर्दशाक्षरः**—(१) ओं हूं ह्लीं क्लीं श्मशानकालिके ओं हूं ह्लीं क्लीं।
(२) ओं हूं ह्लीं क्लीं श्मशानकालिके क्लीं ह्लीं हूं ओं।

फेत्कारिणीतन्त्रानुसारम्—भैरव ऋषिः, त्रिष्टुप् छन्दः, श्मशानकालिका देवता, क्रीं बीजम्, हूं शक्तिः, सकलसिद्ध्यर्थे विनियोगः। (१० पटले)

**निजबीजत्रयं भद्रे श्मशानकालिके ततः।**
**पुनर्बीजत्रयं भद्रे वह्निकान्तां समुच्चरेत्॥**
**चतुर्दशाक्षरी विद्या त्रिषु लोकेषु पूजिता॥**

(तोडलतन्त्रे, ३ पटले)

क्रीं क्रीं क्रीं श्मशानकालिके क्रीं क्रीं क्रीं स्वाहा।

**एकविंशत्यक्षरः**—क्रीं क्रीं क्रीं हूं हूं ह्लीं ह्लीं श्मशानकाल्यै क्रीं क्रीं क्रीं हूं हूं ह्लीं ह्लीं स्वाहा।

# कामकला-काली

**१—षोडशाक्षरो मन्त्रः—**

ह्रीं शाकिन्यङ्कुशसुधा योगिनी प्रमदा क्रुधः ।
भूतडाकिनी कल्पान्तफेत्कारी नरसिंहिका ॥
प्रेतास्त्रशिरसः प्रोक्ता कपिलोपास्या च षोडशी ॥

ह्रीं फ्रें क्रों वं छ्रीं स्त्रीं हूं स्फ्रों ख्फें ह्स्ख्फ्रें क्ष्रौं स्हौं फट् स्वाहा । सनकः ऋषिः, प्रतिष्ठा छन्दः, कामकलाकाली देवता, ह्रीं शक्तिः, म्लूं कीलकम् ।

**२—सप्तदशाक्षरः—**

तारमेघत्रपालक्ष्मो काली कामरुषः क्रमात् ।
योगिनीं प्रमदां चैव शाकिनीमङ्कुशं क्रमात् ॥
प्रसादक्षेत्रपालौ च पाशभूतौ समुद्धरेत् ।
ततोऽग्निस्त्रीं सप्तदशी मरीचिसमुपासिता ॥

ऐं ह्रीं श्रीं क्रीं क्लीं हूं छ्रीं स्त्रीं फ्रें क्रों हौं क्षौं आं स्फ्रों स्वाहा । महाकालसंहितायां कामकलाखण्डे । कर्दम ऋषिः, बृहती छन्दः, कामकला-काली देवता, ह्रीं शक्तिः, हूं कीलकम् ।

**३—अष्टादशाक्षरः —**

आद्यवर्गाद्यवर्णोऽक्ष्णा वामेन परिशीलितः ।
मूर्धनि मूर्धा यतृतीययुगधः परिकीर्तितः ॥
बिन्दुवामाक्षिसम्पृक्तो वह्निसर्वाद्यमस्तकः ।
कामश्रुत्यर्धचन्द्रेण तृतीयं स परो भवेत् ॥
दक्षस्कन्धोऽर्धदन्ताभ्यां चाधोरो बिन्दुमस्तकः ।
ओष्ठवर्गद्वितीयो ह पूर्वाधारोऽष्टबिन्दुयुक् ॥

षडक्षराणि सम्बोध्य यथानामस्थितिक्रमात् ।
प्रतिलोमेन चोद्धृत्य तानि बीजानि पञ्च वै ॥
भूबीजाद्यमारभ्य मारबीजान्तमेव हि ।
वैश्वानरवधूयुक्तो मन्त्रो ह्यष्टादशाक्षरः ॥

क्लीं क्रीं हूं क्रों स्फ्रों कामकलाकालि स्फ्रों क्रों हूं क्रीं क्लीं स्वाहा। कालीकल्पतरौ ६९ पृ० । महाकाल ऋषिः, बृहती छन्दः, कामकलाकाली देवता, क्लीं बीजम्, हूं शक्तिः, सर्वाभीष्टसिद्ध्यर्थे विनियोगः, न्यासः क्लां क्लीं इत्यादिना ।

महाकालसंहितायां कामकलाकालीखण्डे त्रैलोक्याकर्षणनामकोऽयं मन्त्रः कामकलाकालीमन्त्रेषु मुख्यमन्त्ररूपेण निर्दिष्टोऽस्ति ।

स्वतन्त्रतन्त्रे ध्यानं यथा—

मुखं बिन्दुवदाकारं तदधः कुचयुग्मकम् ।
तदधः स-परार्धं च चिन्तयेत्तदधोमुखम् ॥
सर्वविद्यामृताकारं पूर्णं सर्ववाग्विभवप्रदम् ।
सर्वार्थसाधकं सर्वं देववश्यप्रवर्तकम् ॥
तदधः स-परार्धं च स-परिष्कृतमण्डलम् ।
सर्वदेवाधिभूतञ्च सर्वदेवनमस्कृतम् ॥
सर्वाह्लादनसम्पूर्णं सर्वरञ्जनकारकम् ।
एतत्कामकलाध्यानं सुयोग्यं साधकोत्तमैः ॥

नित्योत्सवे तृतीयोल्लासे । ध्यानं तु—अथ बिन्दुना मुखं बिन्दुद्वयेन स्तनौ सपरार्धेन योनिरिति कामकलात्मिकां ध्यात्वा 'सौः' इति देवीशक्ति-बीजं श्रीदेव्या हृदयत्वेन भावयेदिति ।

# अथ कामकलाकालीमन्त्रः

(महाकालसंहितायाम्, पुरश्चर्यार्णवे नवमतरङ्गें)

श्रीदेव्युवाच—

परात्पर परेशान शशाङ्कृतशेखर ।
योगादियोगिन् सर्वज्ञ सर्वभूतदयापर ॥

त्वत्तः श्रुता मया मन्त्राः सर्वतन्त्रेषु गोपिताः ।
विधिवत् पूजनं चापि न्यासावरकक्रमैः ॥

तारा च छिन्नमस्ता च तथा त्रिपुरसुन्दरी ।
बाला च बगला चापि त्रिपुराभैरवी तथा ॥

काली दक्षिणकाली च कुब्जिका विवरेश्वरी ।
अघोरा राजमातङ्गी सिद्धिलक्ष्मीस्त्वरुन्धती ॥

अश्वारूढा भोगवती नित्यक्लिन्ना च कुक्कुटी ।
कौमारी चापि वाराही चामुण्डा चण्डिकापि च ॥

भुवनेशी तथोच्छिष्टचाण्डाली चण्डघण्टिका ।
कालसंकर्षिणी चापि गुह्यकाली तथा परा ॥

एताश्चान्याश्च वै देव्यः समन्त्राः कथितास्त्वया ।
किन्तु कामकलाकालीं नोक्तवानसि मे प्रभो ॥

ततः किं मय्यपि गोप्यं ते प्रायशः परमेश्वर ।
न हीदृशं त्रिलोकेषु तव किञ्चन विद्यते ॥

यदकथ्यं मयि भवेदपि प्राणाधिकाधिकम् ।
तत् किं गोपयसि प्राज्ञ मदीयं दैवतं महत् ॥

यद्यस्मि ते दयापात्रं मान्यास्मि स्नेहभाजनम् ।
अनुग्राह्यास्मि कान्तास्मि तदेमां वद साम्प्रतम् ॥

देवीं कामकलाकालीं समन्त्रध्यानपूर्विकाम् ॥

श्रीमहाकाल उवाच—

धन्यास्यनुगृहीतासि तया देव्यैव सर्वथा ।
यत् ते बुद्धिः समुत्पन्ना तां देवीं प्रति भामिनि ॥

विधाय शपथं देवि कथयामि तवाग्रतः ।
न हीदृशं भुक्तिमुक्तिसाधनं भुवि विद्यते ॥

यथार्थमात्थ देवि त्वं गोप्यत्वं चापि सर्वथा ।
किन्तु भक्तिविशेषात् ते कथयामि न संशयः ॥

राज्यं दद्याद् धनं दद्यात् स्त्रियं दद्याच्छिरस्तथा ।
न तु कामकलाकालीं दद्यात् कस्यापि न क्वचित् ॥

इन्द्रेणोपासिता पूर्वं देवराज्यमभीप्सिता ।
वरुणेन कुबेरेण ब्रह्मणा च मया तथा ॥

रामेण रावणेनापि यमेनापि विवस्वता ।
चन्द्रेण विष्णुना चापि तथान्यैश्च महर्षिभिः ॥

सहेलं वा सलीलं वा यस्याः स्मरणमात्रतः ।
विद्यालक्ष्मी राज्यलक्ष्मी कीर्तिलक्ष्मीर्वशे स्थिता ॥

विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
राज्यार्थी लभते राज्यं कान्तार्थी कामिनीं शुभाम् ॥
यशोऽर्थी कीर्तिमाप्नोति मुक्त्यर्थी मुक्तिमाप्नुयात् ।
अणिमाद्यष्टसिद्ध्यर्थी सिद्ध्यष्टकमवाप्नुयात् ॥

तथा—

द्विसप्ततितमं यावत् पुरुषाः पूर्वजाः स्थिताः ।
तेषां भाग्योदयैः पूर्णैर्विद्येयं यदि लभ्यते ।
तदा सर्वस्वदानेन गृह्णीयादविचारयन् ।
कृतकृत्यं मन्यमानो गुरोः पादावभिस्पृशन् ॥

तथा—

एकतः प्राणदानं स्यादेकतश्चैतदर्पणम् ।
तुलया विधृतं चेत् स्यादेतद्दानं विशिष्यते ॥

तथा—

कोटिजन्मार्जितैः पुण्यैर्लभ्यते वा न लभ्यते ।
शपथं कुरु देवेशि प्रकाश्येयं न कुत्रचित् ॥
सत्यं सत्यं त्रिसत्यं मे ततो वक्ष्यामि पार्वति ।
नो चेत् तेऽपि न वक्ष्यामि प्रमाणं तत्र सैव मे ॥

देव्युवाच—

शपे त्वच्चरणाब्जाभ्यां हिमाद्रि शिरसा शपे ।
शपे स्कन्दैकदन्ताभ्यां यद्येनामन्यतो ब्रुवे ॥
शपेऽथवा तया देव्या यां मे त्वं कथयिष्यसि ।
प्रकाशयामि यद्येनां सैव मे विमुखीभवेत् ॥

महाकाल उवाच—

साधु साधु महाभागे प्रतीतिर्मेऽधुना त्वयि ।
अकार्षीः शपथं यस्मात् तस्माद्वक्ष्याम्यसंशयम् ॥

समाहिता सावधाना भव देवि वरानने ।
विधेहि चित्तमेकाग्रं बद्ध्वाऽञ्जलिपुटं प्रिये ॥
कालीं कामकलापूर्वां शृणुष्वावहिता मम ॥

तथा—

या गुह्यकाली सैवेयं काली कामकलाभिधा ।
मन्त्रभेदाद् ध्यानभेदाद् भवेत् कामकलात्मिका ॥
यथा त्रिभेदा तारा स्यात् सुन्दरी सप्तसप्ततिः ।
दक्षिणा पञ्चभेदा स्यात् तथेयं गुह्यकालिका ॥
सप्तधा ध्यानमन्त्राभ्यां जायते भिन्नरूपिणी ।
यथा पञ्चाक्षरो मन्त्रो देवी चैकजटा स्मृता ॥
द्वाविंशत्यक्षरो मन्त्रो देवी दक्षिणकालिका ।
तथान्येष्वपि देवेषु मुख्येषु बहुषु प्रिये ॥
देवो कामकलाकाली मनुरष्टादशाक्षरः ।
षोडशार्णा यथा मुख्या सर्वश्रीचक्रमध्यमा ॥
तथेयं नवकालीषु सदा मुख्यतमा स्मृता ।
त्रैलोक्याकर्षणो नाम मन्त्रोऽस्याः परिकीर्तितः ॥
तस्योद्धारं प्रवक्ष्यामि शृणु यत्नेन पार्वति ।
श्रुत्वाऽवधारयस्वेमां सर्वकल्याणहेतवे ॥

२२

मन्त्रोद्धारमाह—

आद्यवर्गाद्यवर्णोऽक्ष्णा वामेन परिशीलितः ।
मूर्ध्नि मूर्ध्ना यतृतीययुगधः परिकीर्तितः ॥
बिन्दुवामाक्षिसंयुक्तो वह्निः खपरमस्तकः ।
वामश्रुत्यर्धचन्द्रेण तृतीयः स परो भवेत् ॥
दक्षस्कन्धोर्ध्वदन्ताभ्यां चाक्षरो बिन्दुमस्तकः ।
ओष्ठवर्गद्वितीयो ह पूर्वाधरोष्ठबिन्दुयुक् ॥
षडक्षराणि सम्बोध्य यथा नामस्थितिक्रमात् ।
प्रतिलोमेन चोद्धृत्य तानि बीजानि पञ्च वै ॥
भूतबीजाद्यमारभ्य मारबीजान्तमेव हि ।
वैश्वानरवधूयुक्तो मन्त्रो ह्यष्टादशाक्षरः ॥
अस्याः स्मरणमात्रेण यावन्त्यः सन्ति सिद्धयः ।
स्वयमायान्ति पुरतो जपादीनां च का कथा ॥
सप्त कामकलाकाल्या मनवः सन्ति गोपिताः ।
तेषु सर्वेषु मन्त्रेषु मुख्योऽयं परिकीर्तितः ॥
स्मरणादस्य मन्त्रस्य मूर्च्छिताः सर्वदेवताः ।
स्तम्भिता वेपमानाश्च उत्तिष्ठन्त्यतिविह्वलाः ॥
निदेशवर्तिनो भूत्वा वर्तन्ते चेटका इव ।
किं बहूक्तेन देवेशि सत्यपूर्वं ब्रवीम्यहम् ॥

प्रसङ्गादत्र किमपि वच्मि—अस्याः कामकलायाः सम्बन्धः स्थानं वा श्रीविद्योपासनाक्रमे श्रीकाली-उपासनाक्रमे चास्ति । श्रीविद्याक्रमे त्वस्या विवरणं सौन्दर्यलहर्यां त्रिपुरसुन्दरीस्तवे पुण्यानन्दरचिते कामकलाविलासे

तथा नटनानन्दरचितायां तद्व्याख्यायां तथा योगिनीहृदयतन्त्रे अमृतानन्दनाथरचितायां तद्व्याख्यायां दीपिकायां भास्कररायरचितायां तद्व्याख्यायां सेतुबन्धाख्यायां च विस्तरेण लभ्यते; किन्तु कालीक्रमे महाकालसंहितायाः कामकलाखण्डेऽपर्याप्तमेव किञ्चिद् रहस्यं प्राप्यते। अस्मिन् खण्डे किञ्चिद् भेदसत्त्वेऽपि पूर्णविवरणं कालीकुलक्रमानुसारं न दृश्यते। कालीक्रमे कामकलाया विशेषमहत्त्वं किञ्चित् प्रदर्शितं पूर्णानन्देन श्यामारहस्ये—अथादौ कामकलारूपामात्मानं विभाव्य मूलाधारात् कुण्डलिनीं परमशिवान्तं ध्यात्वा चन्द्रामृतेन सम्प्लाव्य करकच्छपिकाया पुष्पं गृहीत्वा सुषुम्णया बाह्यहृदयाष्टदलरक्तपद्ममध्ये ध्यायेत्। ध्यानमपि निरूपितं तत्र। वङ्गदेशे कालीपूजायां प्रथमं कामकलाध्यानमावश्यकं मन्यते। अतः श्रीक्रमे यथा कामकलासम्बन्धिविचारविमर्शो लभ्यते, तथैव कालीक्रमेऽप्यावश्यकः। एतदर्थं विद्वद्भिः साधकैर्यत्नः करणीय इति प्रार्थ्यते।

# सिद्धिकाली

**त्रयोविंशाक्षरो मन्त्रः —**

**प्रणवाद्या महाविद्या देवता सिद्धिकालिका ।**

ओं क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा । (तोडलतन्त्रे तृतीयपटले)

**ध्यानम्—**

**हंसः परब्रह्मरूपः साकारो हंसरूपकः ।**
**तारश्चक्रुर्वरारोहे निगमागमपक्षवान् ।।**
**शिवशक्तिपदद्वन्द्वं बिन्दुत्रयविलोचनम् ।**
**एवं हंसो मणिद्वीपे तस्य क्रोडे परः शिवः ।।**
**वामभागे सिद्धिकाली सदानन्दस्वरूपिणी ।**
**तस्याः प्रसादमासाद्य सर्वकर्ता महेश्वरः ।।**

# कंकालकाली

**१—द्वादशाक्षरो मन्त्रः**—ओं काली कंकाली किलकिले स्वाहा।

**२—त्रयोदशाक्षरः**—ओं ह्रीं काली कंकाली किल किल स्वाहा।
**पुरश्चरणम्**—दशसहस्रजपः। दशांशहोमः।

**३—चतुर्दशाक्षरः**—(१) ओं काली महाकाली केलिकलाभ्यां स्वाहा।
(२) ओं ह्रीं काली कंकाली किल किल फट् स्वाहा। (देवीरहस्ये)

**४—पञ्चदशाक्षरः**—(१) क्लीं कालि कालि महाकालि कोलेकिन्यै स्वाहा।

(२) ओं कां काली महाकाली केलिकलाभ्यां स्वाहा। (क्रियोड्डीशतन्त्रे)

**पुरश्चरणम्**—दिने दशसहस्रजपः। सायं दशांशहोमः कार्यः। त्रयोदशाक्षरपञ्चदशाक्षरमन्त्रौ डामरेश्वरतन्त्रे वर्तेते कालीकल्पतरावपि ८१ पृष्ठे।

# कामाख्या-काली

**१—त्र्यक्षरो मन्त्रः**—त्रीं त्रीं त्रीं ।

जृम्भणान्तं त्यक्तपाशं यात्रावारणरोहकम् ।
वामकर्णयुतं देवि नादबिन्दुयुतं पुनः ॥
एतत्तु त्रिगुणीकृत्य कल्पवृक्षमनुं जपेत् ॥

(कामाख्यातन्त्रे नवमपटले)

अक्षोभ्य ऋषिः, अनुष्टुप् छन्दः, कामाख्या देवता, सर्वार्थसिद्ध्यर्थं विनियोगः । त्रां त्रीं इत्यादिना न्यासः ।

ध्यानम्—

रक्तवस्त्रां वरोद्युक्तां सिन्दूरतिलकान्विताम् ।
निष्कलङ्कां सुधाधामवदनकमलोज्ज्वलाम् ॥
स्वर्णादिमणिमाणिक्यभूषणैर्भूषितां पराम् ।
नानारत्नादिनिर्माणसिंहासनोपरि स्थिताम् ॥
हास्यवक्त्रां पद्मरागमणिकान्तिमनुत्तमाम् ।
पीनोत्तुङ्गकुचां कृष्णां श्रुतिमूलगतेक्षणाम् ॥
कटाक्षैश्च महासम्पद्दायिनीं हरमोहिनीम् ।
सर्वाङ्गसुन्दरीं नित्यां विद्याभिः परिवेष्टिताम् ॥
डाकिनीयोगिनीविद्याधरीभिः परिशोभिताम् ।
कामिनीभिर्युतां नानागन्धाद्यैः परिगन्धिताम् ॥
ताम्बूलादिकराभिश्च नायिकाभिर्विराजिताम् ।
समस्तसिद्धिवर्गाणां प्रणतां च प्रतीक्षणाम् ॥

पुरश्चरणे लक्षजपः। घृतशर्करामधुपायसैर्दशसहस्रहोमः। सचन्दन-जलैस्तर्पणम्। सगन्धजलैरभिषेकः शतवारम्, दशोत्तमब्राह्मणभोजनम्।

**२—द्वाविंशत्यक्षरो मन्त्रः**—त्रीं त्रीं त्रीं हूं हूं स्त्रीं स्त्रीं कामाख्ये प्रसीद स्त्रीं स्त्रीं हूं हूं त्रीं त्रीं त्रीं स्वाहा।

**निजबीजत्रयं देवि क्रोधद्वयमतः परम्।**
**वधूबीजद्वयं चैव कामाख्यै च पुनर्वदेत्॥**

**अतिसुललितवेशां हास्यवक्त्रां**
**जितजलदसुकान्तिपट्टवस्त्रां प्रकाशाम्।**
**अभयवरकराढ्यां रत्नभूषाभिभव्यां**
**सुरतरुतलपीठे रत्नसिंहासनस्थाम्॥**

**हरिहरविधिवन्द्यां शुद्धबुद्धिस्वरूपां**
**मदनशरसंयुक्तां कामिनीं कामदात्रीम्।**
**निखिलजनविलासां कामरूपां भवानीं**
**कलिकलुषनिहन्त्रीं योनिरूपां स्मरामि॥**

कामाख्यातन्त्रे चतुर्थपटले। ऋष्यादिविधानं त्र्यक्षरवत्।

ध्यानम्—

**त्रिनेत्रां सम्मोहकरीं पुष्पचापेषु बिभ्रतीम्।**
**भगलिङ्गसमाख्यानां किन्नरीभ्योऽपि नृत्यताम्॥**

**वाणीलक्ष्मीसुधावाक्यप्रतिवाक्यमहोत्सुकाम्।**
**अशेषगुणसम्पन्नां करुणासागरां शिवाम्॥**

**प्रसीदेति पदं चैव पूर्वबीजानि कल्पयेत्।**
**ठद्वयान्ते मनुः प्रोक्तः सर्वतन्त्रेषु दुर्लभः॥**

# रक्षाकाली (निशाकाली)

**त्र्यक्षरो मन्त्रः**—क्रीं ह्लीं ह्रीं।

**चतुरक्षरो मन्त्रः**—ओं ह्रीं ह्लीं श्रीं।

अनयोर्मन्त्रयोः ऋषिर्दक्षिणामूर्तिः, छन्दः पङ्क्तिः, देवता श्रीनिशाकाली, बीजं ह्रीं, शक्तिः ह्लीं, कीलकम् ओम्, राष्ट्र-जनपद-नगर-ग्राम-रक्षार्थे विनियोगः। ह्रां ह्रीं इत्यादिना न्यासः। तत्त्वन्यासस्तु ओं आत्मतत्त्वाय स्वाहा पादादिनाभिपर्यन्तम्। ओं ह्रीं विद्यातत्त्वाय स्वाहा नाभ्यादिहृदयपर्यन्तम्। ओं ह्सौः शिवतत्त्वाय स्वाहा हृदयादिमस्तकपर्यन्तम्।

त्र्यक्षरमन्त्रस्य ध्यानम्—

चतुर्भुजां कृष्णवर्णां मुण्डमालाविभूषिताम्।
खड्गं च दक्षिणे पाणौ बिभ्रतीन्दीवरद्वयम्॥

कर्त्रीं च खर्परं चैव क्रमाद् वामेन बिभ्रतीम्।
द्यां लिहन्तीं जटामेकां बिभ्रतीं शिरसा द्वयम्॥

मुण्डमालाधरां शीर्षे ग्रीवायामथ चापराम्।
वक्षाग्रे नागहारं च बिभ्रतीं रक्तलोचनाम्॥

कृष्णवस्त्रधरां कट्यां व्याघ्राजिनसमन्विताम्।
वामपादं शवहृदि संस्थाप्य दक्षिणं पदम्॥

विलप्य सिंहपृष्ठे तु लेलिहानासवं स्वयम्।
साट्टहासां महाघोररावयुक्तां सुभीषणाम्॥

चतुरक्षरस्य ध्यानम्—

**ओं शवोपरि समासीनां मुण्डमालाविभूषिताम् ।**
**ध्यायेदष्टभुजैर्युक्तां करपद्मे विराजिताम् ।।**

**शक्तिशूलधनुर्बाणखड्गखेटवराभयाम् ।**
**वश्ववक्त्रां महारौद्रीं प्रतिवक्त्रं त्रिलोचनाम् ।।**

**प्रलयानलधूम्राभां कृष्णवर्णविधायिनीम् ।**
**जटाजूटसमायुक्तकेशजालविराजिताम् ।।**

पूजनं तु दक्षिणाकालीवत् । लोके ग्रामस्य रक्षार्थं क्वचन केचन सायं-काले मृण्मयीं मूर्तिं विधाय रात्रौ निरन्तरं पूजां स्तवं जागरणं च कृत्वा सूर्योदयात् प्राग् विसृजन्ति । वर्षाभ्यन्तरे सर्वैर्ग्रामवासिभिरवश्यमेवास्याः पूजनं कार्यम् । तत्कालसिद्धिप्रदा देव्येषा ।

# अथ सर्वाङ्गकालिका

यथा स्वतन्त्रतन्त्रे—

कामबीजं समालिख्य कालिकायै पदं लिखेत् ।
नमोऽन्त एष देवेशि सप्तार्णो मनुरुत्तमः ॥
सर्वाङ्गकालिका देवी अन्यत् सर्वं तु पूर्ववत् ॥

अन्यद् ध्यानादिकं पूजनं च सर्वं पूर्ववत् श्मशानकालिकावदित्यर्थः ।

# काल्या नित्या विद्याः

काल्याः पञ्चदशविद्या नित्याः, तासां नामानि—काली, कपालिनी, कुल्ला, कुरुकुल्ला, विरोधिनी, विप्रचित्ता तथा चोग्रा, उग्रप्रभा, दीप्ता, नीला, घना, बलाका, मात्रा, मुद्रा, मिता इति।

तासां मन्त्राः—

**१—काल्या यथा ऊनविंशाक्षरी**—ओं ह्रीं कालि कालि महाकालि कौमारि मह्यं देहि स्वाहा।

**विषबीजं तथा माया कालीति युगलं वदेत्।**
**महाकालिपदं प्रोच्य कौमारीति पदं वदेत् ॥**
**मह्यं देहि पदं देवि ठठयुक्ता मनुर्मता।**
**ऊनविंशाक्षरी विद्या काली नित्या प्रकीर्तिता ॥**

(शक्तिसंगमे सुन्दरीखण्डे परि०, पृ० १०, द्वादशपटले च)

**२—कपालिन्या ऊनविंशाक्षरी**—ओं ह्रीं क्रीं कपालिनि महाकपालप्रियमानसे कपालसिद्धि मे देहि हूं फट् स्वाहा।

**आदौ सप्तकुलं प्रोच्य कामं वह्निपदे स्थितम्।**
**इन्दिराबिन्दुभूषाढ्यं बीजं कालीस्वरूपकम् ॥**
**कपालिनि महाकालप्रियमानसे वदेत्।**
**कपालसिद्धिं मे देहि हूँ फट् स्वाहान्तको मनुः ॥**

(शक्तिसंगमतन्त्रे त्रयोदशपटले)

**३–कुल्लायाः सप्ताक्षरी**—ओं क्रीं कुल्लायै नमः।

**प्रणवं पूर्वमुद्धृत्य कालिकाबीजमुद्धरेत्।**
**कुल्लायै हृन्मनुर्देवि प्रोक्तः सप्ताक्षरो मनुः ॥**

(श० सं० त० १३ प०)

**४—कुरुकुल्लायाः सप्तविंशत्यक्षरी**—क्रीं ओं कुरुकुल्ले क्रीं ह्रीं मम सर्वजनवशमानय क्रीं कुरुकुल्ले ह्रीं स्वाहा ।

**कालिकाद्यं समुद्धृत्य कुरुकुल्ले-पदं वदेत् ।**
**कालीं मायां च कुरुकुल्ले··· ··· ··· ॥** इत्यादि ।

(श० सं० त० १४ पटले)

**५—विरोधिन्यास्त्रयोविंशाक्षरी**—ओं क्रीं ह्रीं क्लीं हूं विरोधिनि शत्रूनुच्चाटय विरोधय विरोधय शत्रुक्षयंकरि हूं फट् स्वाहा ।

**प्रणवं पूर्वमुद्धृत्य कालीप्रणवमुद्धरेत् ।**
**माया कायं ततः कूर्चं प्रोक्त्वा विरोधिनीपदम् ॥**
**शत्रूनुच्चाटयपदं विरोधयद्वयं वदेत् ।**
**शत्रुक्षयंकरी प्रोच्य हूं फट् स्वाहान्तको मनुः ॥**

(श० सं० त० १४ पटले)

**६—विप्रचित्तायाः सप्तत्रिंशाक्षरी**—ओं श्रीं क्लीं चामुण्डे विप्रचित्ते दुष्टघातिनि शत्रून् नाशय एतद्दिनावधि प्रिये सिद्धि मे हूं फट् स्वाहा ।

**प्रणवं कमलां कामं चामुण्डेपदमुच्चरेत् ।**
**विप्रचित्तेपदं प्रोच्य दुष्टघातिनि चोच्चरेत् ॥**
**शत्रून् नाशय चोच्चार्य एतद्दिनावधि प्रिये ।**
**सिद्धि मे देहि चोच्चार्य हूं स्वाहान्तगो मनुः ॥**

(श० सं० त० १५ पटले)

**७—उग्रायाः सप्ताक्षरी**—ओं स्त्रीं हूं ह्रीं ओं हूं फट् ।

**प्रणवं च वधूबीजं हुं बीजं भुवनान्ततः ।**
**पुनः पूर्वं ततो हूं फट् उग्रा सप्ताक्षरो मनुः ॥**

(श० सं० त० १४ पटले)

**८—उग्रप्रभायाः पञ्चविंशाक्षरी**—ओं ह्लूं ह्लूं उग्रप्रभे देवि कालि महादेवि स्वरूपं दर्शय हूं फट् स्वाहा ।

प्रणवं पूर्वमुद्धृत्य शिवबीजं समुद्धरेत् ।
वह्न्यारूढं नादबिन्दुं षष्ठस्वरविभूषितम् ॥
बीजद्वयं समुच्चार्य उग्रप्रभेस्वरूपकम् ।
देवि कालि महादेवि स्वरूपं दर्शयेति च ॥
हूं फट् स्वाहासमायुक्तः प्रोक्तस्तूग्रप्रभामनुः ॥

(श० सं० त० १५ पटले)

९—दीप्ताया ऊनविंशाक्षरी—ओं क्रीं ह्रीं हूं दीप्तायै सर्वमन्त्रफलदायै हूं फट् स्वाहा ।

प्रणवं कालिकाबीजं कौलिनीबीजमेव च ।
कूर्चबीजं समुद्धृत्य दीप्तायै तदनन्तरम् ॥
सर्वमन्त्रफलं प्रोच्य दायैशब्दं समुच्चरेत् ।
हूं फट् स्वाहान्तको मन्त्रस्तूनविंशाक्षरः परः ॥

(श० सं० त० १६ पटले)

१०—नीलाया एकविंशाक्षरी—हूं हूं क्रीं क्रीं ह्रीं ह्रीं हसबलमरी नीलपताके हूं फट् स्वाहा ।

कूर्चयुग्मं महादेवि कालीबीजद्वयं तथा ।
मायाद्वयं समुद्धृत्य हसबलमरीस्वरूपकम् ॥
अथ नीलपताके च हूं फडन्ता महेश्वरी ।

(श० सं० त० १६ पटले)

११—घनायाश्चतुर्दशाक्षरी—ओं क्रीं ओं घनालये घनाघने ह्रीं हूं फट् ।

प्रणवं पूर्वमुद्धृत्य कालिकात्र्यक्षरं तथा ।
घनालये घनाघने ह्रीं हूं फट् मनुर्मतः ॥

(श० सं० त० १७ पटले)

१२—**बलाकाया ऊनत्रिंशाक्षरी**—ओं क्रीं हूं ह्रीं बलाकाकालि अत्यद्भुतपराक्रमे अभीष्टसिद्धिं मे देहि हूं फट् स्वाहा।

**प्रणवं कालिकाबीजं कूर्चं माये समुद्धरेत्।**
**बलाकाकालिशब्दान्ते अत्यद्भुतपराक्रमे॥**
**बलाकाकालि शब्दान्ते अत्यद्भुतपराक्रमे।**
**अभीष्टसिद्धिं मे देहि हूं फट् स्वाहा मनुर्मतः॥**

(श० सं० तं० १७ पटले)

१३—**मात्रायाश्चतुरुत्तरशताक्षरी**—ओं क्री ह्री हूं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं लं क्षं ओं क्रीं ह्रीं हूं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं लं क्षं ओं क्रीं ह्रीं हूं।

**प्रणवं कालिकाबीजं मायाकूर्चं च मातृकाम्।**
**सबिन्दुमातृकावर्णं चतुर्बीजानि वै पुनः॥**
**पुनश्च मातृकावर्णं चतुर्बीजं पुनश्चरेत्।**
**एवं क्षान्ता महेशानि महामात्रा प्रकीर्तिता॥**

अत्र ध्येयम्—मन्त्रोद्धारश्लोकेन लिखितमन्त्रस्वरूपेण चेयं विद्या चतुरुत्तरशताक्षरीतोऽधिकाक्षरी भवति न तावती; किन्तु मन्त्रकोषे तेनैव नाम्ना निर्दिष्टेयं विद्या।

**विंशाक्षरी**—ओं क्रीं ह्रीं हूं महामात्रे सिद्धिं मे देहि सत्वरं हूं फट् स्वाहा।

**चतुर्बीजं महामात्रे सिद्धिं मे देहि सत्वरम्।**
**हूं फट् स्वाहेति देवेशि मात्रामन्त्रः परो मतः॥**

**षोडशाक्षरी**—ओं क्रीं हूं ह्रीं शिवे मात्रे ओं क्रीं हूं ह्रीं हूं फट् स्वाहा ।

**प्रणवं कालिकाबीजं कूर्चं माये ततः शिवे ।**
**मध्ये नित्या नाम दद्यात् सम्बुद्ध्यन्तं च केवलम् ।।**
**पुनर्बीजानि हूं फट् स्वाहान्ता.................. ।**

(श० सं० त० १७ पटले)

**१४—मुद्राया ऊनत्रिंशाक्षरी**—ओं क्रीं ह्री हूं प्री फ्रें मुद्राम्बे मुद्रासिद्धि मे देहि भो जगन्मुद्रास्वरूपिणि हूं फट् स्वाहा ।

**प्रणवं कालिकाबीजं माया कूर्चं क्रमेण च ।**
**प्रीं फ्रें बीजयुगं प्रोच्य मुद्राम्बापदमुद्धरेत् ।।**
**मुद्रासिद्धि मे देहि भो जगन्मुद्रास्वरूपिणि ।**
**हूं फट् स्वाहासमायुक्ता वीतिवर्णो मनुः शुभः ।।**

(श० सं० त० १७ पटले)

**१५—मितायाः सप्तविंशाक्षरी**—ओं क्री हूं ह्री ऐं मिते परिमिते पराक्रमाय ओं क्री हूं ह्री ऐं सोहं हूं फट् स्वाहा ।

**प्रणवं पूर्वमुद्धृत्य कालिकाबीजमुद्धरेत् ।**
**कूर्चबीजं तथा मायां वाग्भवं बीजमुद्धरेत् ।।**
**मितेपदं समुच्चार्य तथा परिमिते-पदम् ।**
**पराक्रमाय च पदं पुनर्बीजानि चोद्धरेत् ।।**
**सोहं हूं फट् ततः स्वाहा सप्तविंशतिवर्णवान् ।**

(श० सं० त० १८ पटले)

# त्रैलोक्यमोहनमन्त्रः

(योगिनीतन्त्रेतृतीय पटले ३१ पृष्ठे)

ऐं ह्रीं ह्रूं ह्रः स्वाहा विवादे पातु मां सदा ।
ह्रीं दक्षिणकालिकादेवतायै सभामध्ये जयप्रदा ।। १६ ।।
ह्रीं ह्रीं श्यामाङ्गि शत्रुं मारय मारय क्रीं क्रीं
त्रैलोक्यं वशमानय ह्रीं ह्रीं क्रीं मां रक्ष रक्ष
विवादे राजगेहे च द्वाविंशत्यक्षरा परा ।। १७ ।।
ब्रह्मराक्षसवेतालात् सर्वतो रक्ष मां सदा ।
कवचैर्वर्जितं यत्र तत्र मां पातु कालिका ।।
सर्वत्र रक्ष मां देवि मम मातृस्वरूपिणी ।। १८ ।।

कौशिक्या मन्त्रः —

समाप्तिनान्त्यदन्त्यस्तु षड्वर्गादिसबिन्दुभिः ।
षष्ठस्वरेण संस्पृष्टो बिन्दुना समलङ्कृतः ।।
कौशिकीमन्त्रतन्त्रोऽयं सर्वकामार्थदायकः ।।

(का० पु० ६१।७६)

शिवदूत्या मन्त्रः —

अन्तः समाप्तिसहितो बिन्द्विन्दुभ्यां दशावरः ।
स्वरेणोपान्तदन्त्येन संस्पृष्टोऽन्तेन पूर्वशः ।।
स एव बिन्दुयुगलः पूर्वस्थोपान्तपावकः ।
षष्ठस्वरकलाशून्यैः सहितः प्रथमस्थितः ।।
मन्त्रोऽयं शिवदूत्यास्तु शिवदूतीजयप्रदः ।।

कौशिकीललाटसम्भूतायाः काल्या मन्त्रः —

समाप्तिसहितो दन्त्यः प्रान्तस्तस्मात् पुरःसरः ।
षष्ठस्वराग्निबिन्द्विन्दुसहितः सादिरेव च ॥

(का० पु० ६१।९०)

प्रकीर्णो मन्त्रः कालिकापूजने—

कालिकां तु कलातीतां कल्याणहृदयां शिवाम् ।
कल्याणजननीं नित्यं कल्याणीं पूजयाम्यहम् ॥

# अथ श्यामामन्त्रः[1]

(श्रीविद्यार्णवतन्त्रे चतुर्विंशे श्वासे)

कालीतन्त्रे प्रथमपटले—

कामत्रयं वह्निसंस्थं रतिबिन्दुसमन्वितम् ।
कूर्चयुग्मं तथा लज्जायुगलं तदनन्तरम् ॥ १ ॥
दक्षिणे कालिके चेति पूर्वबीजानि चोच्चरेत् ।
अन्ते वह्निवधूं दद्याद् विद्याराज्ञी प्रकीर्तिता ॥ २ ॥

एवं वीरतन्त्रे—

अथातः संप्रवक्ष्यामि दक्षिणां कालिकां शुभाम् ।
कामाक्षरं वह्निसंस्थं वामनेत्रविभूषितम् ॥ १ ॥
बिन्दुनादसमायुक्तं बीजमेतत् त्रयं लिखेत् ।
कूर्चयुग्मं ततो देवि लज्जायुग्ममनन्तरम् ॥ २ ॥
दक्षिणे कालिके चेति सम्बोधनपदान्वितम् ।
सप्तबीजं पुनः प्रोच्य स्वाहान्तं मनुमुद्धरेत् ॥ ३ ॥

कालीतन्त्रे ध्यानं तु 'करालवदनां घोरामि'त्याद्यारभ्य 'श्मशानालयवासिनीम्'पर्यन्तं नवश्लोकात्मकं वर्तते । अन्यत्र 'स्वतन्त्रे' तु एतद्ध्यानं निर्दिष्टम्—'अञ्जनाद्रिप्रभां देवीं करालवदनां शिवाम्' इत्यादि ।

मन्त्रभेदः—

वर्गाद्यं वह्निसंयुक्तं रतिबिन्दुसमन्वितम् ।
एकाक्षरो महामन्त्रः सर्वकामफलप्रदः ॥
त्रिगुणस्तु विशेषेण सर्वशास्त्रप्रबोधकः ॥

---

१. अत्र ध्येयम्—विद्यार्णवतन्त्रोक्तविधिः, बृहत्तन्त्रसारोक्तविधिश्च प्रायः समानरूपेणैवास्ति ।

सिद्धेश्वरीतन्त्रे --

एवं ध्यात्वा जपेन्मन्त्रं लक्षमेकं विधानतः ।
तद्दशांशं विधानेन होमयेत् साधकोत्तमः ॥ १ ॥
मायाद्वयं कूर्चयुग्ममैन्द्रान्तं मादनत्रयम् ।
मायाबिन्द्वीश्वरयुतं दक्षिणे कालिके पदम् ॥ २ ॥
संहारक्रमयोगेन बीजसप्तकमुद्धरेत् ।
एकविंशाक्षरो मन्त्रस्ताराद्यः कालिकामनुः ॥ ३ ॥
स्वाहान्तश्च त्रयोविंशाक्षरोऽयं मनुराजकः ।
स्वाहां विनैकविंशत्यक्षरः कामप्रदो मनुः ॥ ४ ॥
विंशत्यर्णा महाविद्या स्वाहाप्रणववर्जिता ।
ध्यानपूजादिकं सर्वं दक्षिणावदुपाचरेत् ॥ ५ ॥

स्वतन्त्रे--

प्रणवं पूर्वमुद्धृत्य हृल्लेखाबीजमुद्धरेत् ।
रतिबीजं समुद्धृत्य पपञ्चमं भगान्वितम् ॥
ठद्वयेन समायुक्ता विद्याराज्ञी प्रकीर्तिता ॥

अस्य मन्त्रस्य पुरश्चरणं त्वेकविंशतिसहस्रजपः ।

ध्यानम्--

खड्गोद्भिन्नेन्दुबिम्बस्रवदमृतरसाप्लाविताङ्गी त्रिनेत्रा
सव्ये पाणौ कपालाद्गलदसृजमथो मुक्तकेशी पिबन्ती ।
दिग्वस्त्रा बद्धकाञ्ची मणिमयमुकुटाद्यैर्युता दीप्तजिह्वा
पायान्नीलोत्पलाभा रविशशिविलसत्कुण्डलालीढपादा ॥

# काल्याः शिवो महाकालस्तस्य मन्त्राः

**षोडशाक्षरः**—हूं हूं महाकाल प्रसीद प्रसीद ह्रीं ह्रीं स्वाहा ।

**कूर्चयुग्मं महाकाल प्रसीदेति पदद्वयम् ।**
**लज्जायुग्मं वह्निजायासंयुक्तः षोडशार्णकः ॥**

(श० सं० त० सुन्दरीखण्डे कालीकल्पतरौ)

कालिका ऋषिः, विराट् छन्दः, महाकालो देवता, हूं बीजम्, ह्रीं शक्तिः, स्वाहा कीलकम्, सर्वाभीष्टसिद्धये विनियोगः । ह्रां ह्रीं, इत्यादिना षडङ्गन्यासः । ध्यानम्—

**कोटिकालानलाभासं चतुर्भुजं त्रिलोचनम् ।**
**श्मशानाष्टकमध्यस्थं मुण्डाष्टकविभूषितम् ॥**

**पञ्चप्रेतस्थितं देवं त्रिशूलं डमरुं तथा ।**
**खड्गं च खर्परं चैव वामदक्षिणयोगिनम् ॥**

**बिभ्रतं सुन्दरं देहं श्मशानभस्मभूषितम् ।**
**नानाशवक्रीडकानं कालिकाहृदयस्थितम् ॥**

**लालयन्तं रतासक्तं घोरचुम्बनतत्परम् ।**
**गृध्रगोमायुसंयुक्तं फेरवीगणसंयुतम् ॥**

**जटापटलशोभाढ्यं सर्वशून्यालयस्थितम् ।**
**सर्वशून्यं मुण्डभूषं प्रसन्नवदनं शिवम् ॥**

(श्रीकालीनित्यार्चने)

**२—एकविंशाक्षरः**—ओं ह्रीं क्लीं हूं महाकालाय ह्रौं महादेवाय क्रीं कालिकायै ह्रौं ।

३—**एकोनत्रिंशदक्षरः**—हुं क्ष्रौं यां रां लां वां क्रों महाकालभैरव सर्वविघ्नान् नाशय नाशय ह्रीं श्रीं फट् स्वाहा ।

**कवचं क्ष्रौं समुद्धृत्य यां रां लां वां च क्रों ततः ।**
**महाकालभैरवेति सर्वविघ्नान्नाशयेति च ॥**
**नाशयेति पुनः प्रोच्य मायां लक्ष्मीं समुद्धरेत् ।**
**फट् स्वाहासमायुक्तो मन्त्रः सर्वार्थसाधकः ॥**
**महाकालं यजेद् देव्या दक्षिणे धूम्रवर्णकम् ।**
**बिभ्रतं दण्डखट्वाङ्गौ दंष्ट्राभीममुखं शिवम् ॥**
**व्याघ्रचर्मावृतकटिं तुन्दिलं रक्तवाससम् ।**
**त्रिनेत्रमूर्ध्वकेशं च मुण्डमालाविभूषितम् ॥**
**जटाभारलसच्चन्द्रखड्गमुग्रं ज्वलन्निभम् ॥**

(तन्त्रसारे, कालीकल्पतरौ च)

निरुत्तरतन्त्रे ध्यानं तु—

**धूम्रवर्णं महाकालं जटातारान्वितं प्रिये ।**
**त्रिनेत्रं शवरूपं च शक्तियुक्तं निरामयम् ॥**
**दिगम्बरं घोररूपं नीलाञ्जनसमप्रभम् ।**
**निर्गुणं च गुणाधारं कालीस्थानं पुनः पुनः ॥**

४—**त्रिंशदक्षरः**—ओं हूं स्फ्रौं यां रां लां वां क्रौं महाकालभैरव सर्वविघ्नान् नाशय नाशय ह्रीं श्रीं फट् स्वाहा ।

(दुर्गापूजा-श्यामापूजापद्धतौ, ९७ पृ०)

# अथ न्यासः

तान्त्रिककृत्यानां पूजायाश्चाङ्गेषु न्यासोऽपि मद्यते। न्यस्यत इति (नि+अस्+घञ्) न्यासः। पूजाजपादेः प्राग् विघ्ननाशमन्त्रसिद्ध्यर्थं देहान्तर्बहिर्वर्णादिन्यासः। शरीरावयवेषु अवस्थातुं देवानां मन्त्राणां च मानसिकरूपेणाह्वानम्, येन कलेवरं पवित्रं स्यात्, तथार्चनध्यानयोग्यं भवेत्, इत्येव न्यासप्रयोजनम्। तन्त्रेषु न्यासस्य बहुविधमाहात्म्यं चर्चितं कथयन्ति च तान्त्रिका यन्न्यासेन साधको देवमयो भवेत्। कुलार्णवे—

> **न्यायोपार्जितवित्तानामङ्गेषु विनिवेशनात्।**
> **सर्वरक्षाकराद् देवि न्यास इत्यभिधीयते॥**

शरीराङ्गेषु अङ्गुलिपर्वभिः समन्त्रकस्पर्शेन न्यासरूपेण साधको निर्भयो भूत्वा यत्र कुत्रापि (दुष्टमध्येऽपि) कार्यं कर्तुं क्षमो भवति, देवनिभश्च सम्पद्यते। जयाख्यसंहिताया एकादशपटले स्पष्टं प्रतिपादितम्। नित्योत्सव-नामकग्रन्थे तु न्यासस्य विस्तारो दृश्यते यत्करणे पर्याप्तसमयोऽपेक्ष्यते।

न्यासकालः —

> **प्रातःकालेऽथवा पूजासमये होमकर्मणि।**
> **जपकालेऽपि वा तेषां विनियोगः पृथक् पृथक्॥**
> **पूजाकाले समस्तं वा कुर्यात् साधकसत्तमः॥**

जयाख्यसंहिता-प्रपञ्चसार-कुलार्णवादिषु न्यासस्य बहुप्रकारत्वेन वर्णनं तथा शारदातिलकमहानिर्वाणादिषु कतिपयानां न्यासानामुल्लेखः। शारदा-तिलकस्य राघवभट्टकृतव्याख्यायां बहुविधा न्यासा उद्धृताः, शाक्तप्रमोद-विद्यार्णवतन्त्र-तन्त्रसारादिषु च सन्ति। पुराणेऽपि गरुडनारदब्रह्मपद्ममत्स्य-देवीभागवत-भागवत-कालिकादिषु चर्च्यते न्यासः।

न्यासाश्च बहुविधाः सन्ति—तत्र हंस-प्रणव-मातृका-मन्त्र-कर-अङ्ग-पीठ-न्यासादयः। न्यासेषु षोढा न्यासो विशिष्यते यतो ह्यस्यापि पुरश्चरण-मुच्यते तन्त्रान्तरे—

**देवीभावसमायुक्तो षोढान्यासपरो भवेत् ।**
**दशविद्याविधौ सा च दशधा भिन्नभिन्नतः ॥**

इत्यादि। अधिकं तु पुरश्चर्यार्णवे ११६५ पृष्ठे।

क्वचन केचन न्यासस्यावैदिकत्वान्न समाद्रियन्ते सम्मानपूर्वकम्, यथा—**'एतमेके नेच्छन्ति स हि विधिरवैदिकः'** इति। (संस्काररत्न-मालायाम्, पृष्ठे २२९); परन्तु तान्त्रिकास्तु विनाऽनेनाङ्गहीनतां मन्यन्ते। वैदिककर्मण्यपि लोके गायत्रीजपादौ दृश्यते न्यासः। अतोऽत्र केचन न्यासा उद्ध्रियन्ते—

## कालीतन्त्रोक्तप्रकारेण षोढा न्यासः

(शाक्तप्रमोदे)

**तत्र प्रथमो मातृकान्यासो** यथा—

अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं नमो हृदि।
एं ऐं ओं औं अं अः कं खं गं घं दक्षभुजे।
ङं चं छं जं झं ञं णं टं ठं डं ढं वामभुजे।
णं तं थं दं धं नं पं फं बं भं दक्षपादे।
मं यं रं लं वं शं षं सं हं लं क्षं वामपादे।

**अथ द्वितीयः**

श्रीं अं श्रीं अं श्रीं अं नमः ललाटे
श्रीं आं इति त्रिरावर्त्य नमः मुखवृत्ते
एवं श्रीं इं ,, ,, ,, दक्षनेत्रे

एवं श्रीं ईं इति त्रिरावर्त्यं नमः वामनेत्रे
,, ,, उं ,, ,, ,, दक्षकर्णे
,, ,, ऊं ,, ,, ,, वामकर्णे
,, ,, ऋं ,, ,, ,, दक्षनासायाम्
,, ,, ॠं ,, ,, ,, वामनासायाम्
,, ,, ऌं ,, ,, ,, दक्षगण्डे
,, ,, ॡं ,, ,, ,, वामगण्डे
,, ,, एं ,, ,, ,, ऊर्ध्वोष्ठे
,, ,, ऐं ,, ,, ,, अधरोष्ठे
,, ,, ओं ,, ,, ,, ऊर्ध्वदन्तपङ्क्तौ
,, ,, औं ,, ,, ,, अधोदन्तपङ्क्तौ
,, ,, अं ,, ,, ,, शिरसि
,, ,, अः ,, ,, ,, मुखे
,, ,, कं ,, ,, ,, दक्षिणबाहुमूले
,, ,, खं ,, ,, ,, कर्पूरे
,, ,, गं ,, ,, ,, मणिबन्धे
,, ,, घं ,, ,, ,, अङ्गुलीमूले
,, ,, ङं ,, ,, ,, अङ्गुल्यग्रे
,, ,, चं ,, ,, ,, वामबाहुमूले
,, ,, छं ,, ,, ,, कर्पूरे
,, ,, जं ,, ,, ,, मणिबन्धे
,, ,, झं ,, ,, ,, अङ्गुलीमूले
,, ,, ञं ,, ,, ,, अङ्गुल्यग्रे
,, ,, टं ,, ,, ,, दक्षिणोरुमूले
,, ,, ठं ,, ,, ,, जानुनि
,, ,, डं ,, ,, ,, गुल्फे
,, ,, ढं ,, ,, ,, अङ्गुलीमूले
,, ,, णं ,, ,, ,, अङ्गुल्यग्रे
,, ,, तं ,, ,, ,, वामोरुमूले

एवं श्रीं थं इति त्रिरावर्त्य नमः जानुनि
„ „ दं „ „ „ गुल्फे
„ „ धं „ „ „ अङ्गुलीमूले
„ „ नं „ „ „ अङ्गुल्यग्रे
„ „ पं „ „ „ दक्षपार्श्वे
„ „ फं „ „ „ वामपार्श्वे
„ „ बं „ „ „ पृष्ठे
„ „ भं „ „ „ नाभौ
„ „ मं „ „ „ उदरे
„ „ यं „ „ त्वगात्मने नमः, हृदये
„ „ रं „ „ असृगात्मने नमः, दक्षांसे
„ „ लं „ „ मांसात्मने नमः, ककुदि
„ „ वं „ „ मेद आत्मने नमः, वामांसे
„ „ शं „ „ अस्थ्यात्मने नमः, हृदयाद्दक्षभुजाग्रान्तम्
„ „ षं „ „ मज्जात्मने नमः, हृदयाद्वामभुजाग्रान्तम्
„ „ सं „ „ शुक्रात्मने नमः, हृदयाद्दक्षपादाग्रान्तम्
„ „ हं „ „ आत्मने नमः, हृदादिवामपादाग्रान्तम्
„ „ क्षं „ „ परमात्मने नमः, हृदयान्मस्तकान्तम्

### अथ तृतीयः

क्लीं श्रीं क्लीं श्रीं क्लीं श्रीं नमः ललाटे
„ „ „ „ मुखवृत्ते
„ „ „ „ दक्षनेत्रे
„ „ „ „ वामनेत्रे
„ „ „ „ दक्षकर्णे
„ „ „ „ वामकर्णे
„ „ „ „ दक्षनासायाम्
„ „ „ „ वामनासायाम्
„ „ „ „ दक्षगण्डे

| | | | | |
|---|---|---|---|---|
| क्लीं श्रीं | क्लीं श्रीं | क्लीं श्रीं | नमः | वामगण्डे |
| ,, | ,, | ,, | ,, | ऊर्ध्वोष्ठे |
| ,, | ,, | ,, | ,, | अधरोष्ठे |
| ,, | ,, | ,, | ,, | ऊर्ध्वदन्तपङ्क्तौ |
| ,, | ,, | ,, | ,, | अधोदन्तपङ्क्तौ |
| ,, | ,, | ,, | ,, | शिरसि |
| ,, | ,, | ,, | ,, | मुखे |
| ,, | ,, | ,, | ,, | दक्षिणबाहुमूले |
| ,, | ,, | ,, | ,, | कर्पूरे |
| ,, | ,, | ,, | ,, | मणिबन्धे |
| ,, | ,, | ,, | ,, | अङ्गुलीमूले |
| ,, | ,, | ,, | ,, | अङ्गुल्यग्रे |
| ,, | ,, | ,, | ,, | वामबाहुमूले |
| ,, | ,, | ,, | ,, | कर्पूरे |
| ,, | ,, | ,, | ,, | मणिबन्धे |
| ,, | ,, | ,, | ,, | अङ्गुलीमूले |
| ,, | ,, | ,, | ,, | अङ्गुल्यग्रे |
| ,, | ,, | ,, | ,, | वामबाहुमूले |
| ,, | ,, | ,, | ,, | कर्पूरे |
| ,, | ,, | ,, | ,, | मणिबन्धे |
| ,, | ,, | ,, | ,, | अङ्गुलीमूले |
| ,, | ,, | ,, | ,, | अङ्गुल्यग्रे |
| ,, | ,, | ,, | ,, | दक्षिणोरुमूले |
| ,, | ,, | ,, | ,, | जानुनि |
| ,, | ,, | ,, | ,, | गुल्फे |
| ,, | ,, | ,, | ,, | अङ्गुलीमूले |
| ,, | ,, | ,, | ,, | अङ्गुल्यग्रे |
| ,, | ,, | ,, | ,, | वामोरुमूले |
| ,, | ,, | ,, | ,, | जानुनि |

| | | | | |
|---|---|---|---|---|
| क्लीं श्रीं | क्लीं श्रीं | क्लीं श्रीं | नमः | गुल्फे |
| ,, | ,, | ,, | ,, | अङ्गुलीमूले |
| ,, | ,, | ,, | ,, | अङ्गुल्यग्रे |
| ,, | ,, | ,, | ,, | दक्षपार्श्वे |
| ,, | ,, | ,, | ,, | वामपार्श्वे |
| ,, | ,, | ,, | ,, | पृष्ठे |
| ,, | ,, | ,, | ,, | नाभौ |
| ,, | ,, | ,, | ,, | उदरे |
| ,, | ,, | ,, | ,, | हृदये |
| ,, | ,, | ,, | ,, | दक्षांसे |
| ,, | ,, | ,, | ,, | ककुदि |
| ,, | ,, | ,, | ,, | वामांसे |
| ,, | ,, | ,, | ,, | हृदयाद्दक्षभुजाग्रान्तम् |
| ,, | ,, | ,, | ,, | हृदयाद्वामभुजाग्रान्तम् |
| ,, | ,, | ,, | ,, | हृदयाद्दक्षपादाग्रान्तम् |
| ,, | ,, | ,, | ,, | हृदयाद्वामपादाग्रान्तम् |
| ,, | ,, | ,, | ,, | हृदयान्मस्तकान्तम् |

### अथ चतुर्थः

ह्लीं श्रीं ह्लीं श्रीं ह्लीं श्रीं नमः ललाटे, एवं ह्लीं श्रीं, इति त्रिरावर्त्यं नमोऽन्ते च प्रयुज्य दक्षनेत्रं वामनेत्रं दक्षकर्णं वामकर्णं दक्षनासिकां वामनासिकां दक्षगण्डं वामगण्डम् ऊर्ध्वोष्ठम् अधरोष्ठम् ऊर्ध्वदन्तपङ्क्तिम् अधोदन्तपङ्क्तिं शिरो मुखं दक्षिणबाहुमूलं कर्पूरं मणिबन्धम् अङ्गुलीमूलम् अङ्गुल्यग्रं वामबाहुमूलं कर्पूरं मणिबन्धम् अङ्गुलीमूलम् अङ्गुल्यग्रं दक्षिणोरुमूलं जानु गुल्फम् अङ्गुलीमूलम् अङ्गुल्यग्रं वामोरुमूलं जानु गुल्फम् अङ्गुलीमूलम् अङ्गुल्यग्रं दक्षिणपार्श्वं वामपार्श्वं पृष्ठं नाभिम् उदरं हृदयं दक्षांसं ककुदं वामांसं हृदयाद्दक्षभुजाग्रान्तं हृदयाद्वामभुजाग्रान्तं हृदयाद्दक्षपादाग्रान्तं हृदयाद्वामपादाग्रान्तं हृदयान्मस्तकान्तं क्रमशः स्पृशेत् ।

### अथ पञ्चमः

मूलं ह्लां ह्लां ॠं ॠं क्लूं नमः, इति मन्त्रेण पूर्वोक्तक्रमानुसारेण ललाटमारभ्य हृदयान्मस्तकान्तं क्रमशः स्पृशेत् प्रत्येकाङ्गस्पर्शे मन्त्रमुच्चार्यैव स्वाङ्गस्पर्शो विधेयः।

### अथ षष्ठः

मूलं नमः, इति मन्त्रेण ललाटाद्यारभ्य हृदयान्मस्तकान्तपर्यन्तं पूर्वोक्तक्रमानुसारं प्रत्येकमङ्गं स्पृशेत् तत्र प्रत्येकाङ्गस्पर्शे मन्त्रोच्चारणमावश्यकम्।

षोढा न्यासे त्वेष क्रमोऽनुलोमक्रमेण भवति, विलोमक्रमे तु विपरीतक्रमात् प्रत्येकाङ्गन्यास एकवारमेव विधेयः। तत्र मूलं नमः, इत्युच्चार्य प्रथमं हृदयान्मस्तकान्तं तदनन्तरं हृदादिवामपादाग्रान्तम् एवं ललाटपर्यन्तं क्रमशः स्पृशेत्।

अनन्तरमष्टोत्तरसंख्यकमूलेन व्यापकं कुर्यात्। ततस्तत्त्वन्यासः—ततः पादादिनाभिपर्यन्तं क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं ओं आत्मतत्त्वाय नमः, नाभ्यादिहृदयपर्यन्तं दक्षिणे कालिके ओं विद्यातत्त्वाय नमः, हृदादिशिरःपर्यन्तं क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं ओं शिवतत्त्वाय नमः।

### बीजन्यासः

ब्रह्मरन्ध्रे क्रीं नमः, भ्रूमध्ये क्रीं नमः, ललाटे क्रीं नमः, नाभौ ह्रीं नमः, गुह्ये ह्रीं नमः, वक्त्रे हूं नमः, गुर्वङ्गे हूं नमः। क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं दक्षिणे कालिके क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं स्वाहा, इति विद्याबीजेन ततो मूलेन नवधा सप्तधा पञ्चधा व्यापकन्यासं कुर्यात्। ततो ध्यानम्—

करालवदनामित्याद्यारभ्य सार्धसप्तश्लोकैरष्टभिर्वा ध्यानं कुर्यात्।

अन्यत् सर्वं शाक्तप्रमोदे द्रष्टव्यम्।

## दक्षिणाकालिकाध्यानम्

ओं करालवदनां घोरां मुक्तकेशीं चतुर्भुजां
कालिकां दक्षिणां दिव्यां मुण्डमालाविभूषिताम् ।
सद्यश्छिन्नशिरःखड्गवामाधोर्ध्वकराम्बुजां
अभयं वरदं चैव दक्षिणोर्ध्वाधपाणिकाम्[1] ॥ १ ॥
महामेघप्रभां श्यामां तथैव च दिगम्बरीं
कण्ठावशक्तमुण्डालीं गलद्रुधिरचर्चिताम् ।
कर्णावतंसतां नीतशवयुग्मभयानकां
घोरदंष्ट्रां करालास्यां पीनोन्नतपयोधराम् ॥ २ ॥
शवानां करसंघातैः कृतकाञ्चीं हसन्मुखीं
सृक्कद्वयगलद्रक्तधाराभिः स्फुरिताननाम् ।
घोररूपां[2] महारौद्रीं श्मशानालयवासिनीं[3]
दन्तुरां दक्षिणव्यापिमुक्तालम्बिकचोच्चयाम् ॥ ३ ॥
शवरूपमहादेवहृदयोपरि संस्थितां
शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम् ।
महाकालेन च समं विपरीतरतातुरां
भजेत् त्रिजगतां धात्रीं स्मेराननसरोरुहाम्[4] ॥ ४ ॥
एवं संचिन्तयेत् कालीं धर्मकामार्थसिद्धिदाम् ॥

---

१. दक्षद्वयकराम्बुजाम् ;          २. घोररावामिति पाठः ।
३. बालार्कमण्डलाकारलोचनत्रितयान्विताम्, इति पाठोऽत्र विद्यार्णवतन्त्रे बृहत्तन्त्रसारे चास्ति ।
४. श्मशानालयवासिनीम् (विद्यार्णवे), सर्वकामसमृद्धिदाम् (तन्त्रसारे), सुखप्रसन्नवदनाम्, इति पाठः वि० तन्त्रे तन्त्रसारे च ।

## श्मशानकाल्या ध्यानम्

ओं अञ्जनाद्रिनिभां देवीं श्मशानालयवासिनीं
रक्तनेत्रां मुक्तकेशीं शुष्कमांसातिभीषणाम् ।
पिङ्गाक्षीं वामहस्तेन मद्यपूर्णं समांसकं
सद्यः कृत्तशिरो दक्षहस्तेन दधतीं शिवाम् ।।
स्मितवक्त्रां सदाचाममांसचर्वणतत्परां
नानालङ्कारभूषाङ्गीं लग्नां मत्तां सदासवैः ।।

### भद्रकालीध्यानम्

ओं क्षुत्क्षामा कोटराक्षी मसिमलिनमुखी मुक्तकेशी रुदन्ती
नाहं तृप्ता वदन्ती जगदखिलमिदं ग्रासमेकं करोमि ।
हस्ताभ्यां धारयन्ती ज्वलदनलशिखा सन्निभं पाशयुग्मं
दन्तैर्जम्बूफलाभः परिहरतु भयं पातु मां भद्रकाली ।।

गायत्री—ओं क्रीं कालिकायै विद्महे श्मशानवासिन्यै धीमहि तन्नो घोरे प्रचोदयात् ।

ध्यानन्तु—

महामेघप्रभां देवीं कृष्णवस्त्रपिधायिनीम् ।
लोलजिह्वां घोरदंष्ट्रां कोटराक्षीं हसन्मुखीम् ।।
नागहारलतोपेतां चन्द्रार्द्धकृतशेखराम् ।
द्यां लिखन्तीं जटामेकां लेलिहानासवं स्वयम् ।।
नागयज्ञोपवीताङ्गीं नागशय्यानिषेदुषीम् ।
पञ्चाशन्मुण्डसंयुक्तवनमालां महोदरीम् ।।
सहस्रफणसंयुक्तमनन्तं शिरसोपरि ।
चतुर्दिक्षु नागफणावेष्टितां गुह्यकालिकाम् ।।

तक्षकसर्पराजेन वामकङ्कणभूषिताम् ।
अनन्तनागराजेन कृतदक्षिणकङ्कणाम् ।
नागेनरशनाहारकल्पितां रत्ननूपुराम् ॥
वामे शिवस्वरूपं तत्कल्पितं वत्सरूपकम् ।
द्विभुजां चिन्तयेद्देवीं नागयज्ञोपवीतिनीम् ॥
नरदेहसमाबद्धकुण्डलश्रुतिमण्डिताम् ।
प्रसन्नवदनां सौम्यां नवरत्नविभूषिताम् ॥
नारदाद्यैर्मुनिगणैः सेवितां शिवमोहिनीम् ।
अट्टहासां महाभीमां साधकाभीष्टदायिनीम् ॥

द्यां लिखन्तीं जटामेकामिति धारयन्तीमिति शेषः । अनन्तरं शिरसोपरि दधतीमिति शेषः । गुह्येत्युपलक्षणम् । इति श्यामाप्रकरणम् ।

**कालिकाध्यानम्** (पुरश्चर्यार्णवस्य ११ तरङ्गे, ९५६ पृ०)—

दशास्यां दशपादां च दशहस्तां विधिस्तुताम् ।
इन्द्रनीलद्युतिं खड्गं चक्रं शंखं शिरः शरान् ॥
दक्षहस्तेषु दधतीं गदां शूलं भुशुण्डिकाम् ।
परिघं च धनुर्वामे दधतीं ब्रह्मसंस्तुताम् ॥
मधुकैटभनाशार्थं स्वालङ्कारां त्रिवीक्षणाम् ।

तन्त्रान्तरे—

खड्गं चक्रगदेषु चापपरिघान् शूलं भुशुण्डीं शिरः
शंखं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां
यामस्तौत् स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥

एतत्तु दुर्गासप्तशतीप्रथमचरितस्यादावप्युल्लिखितं विद्यते ।

ध्यानान्तरं[1] स्वतन्त्रे—

अञ्जनाद्रिप्रभां देवीं करालवदनां शिवाम् ।
मुण्डमालावलीकीर्णां मुक्तकेशीं स्मिताननाम् ।। १ ।।
महाकालहृदम्भोजस्थितां पीनपयोधराम् ।
विपरीतरतासक्तां घोरदंष्ट्रां शवैः सह ।। २ ।।
नागयज्ञोपवीताढ्यां चन्द्रार्धकृतशेखराम् ।
सर्वालङ्कारसंयुक्तां मुण्डमालाविभूषिताम् ।। ३ ।।
मृतहस्तसहस्रैस्तु बद्धकाञ्चीं दिगंशुकाम् ।
शिवाकोटिसहस्रैस्तु योगिनीभिर्विराजिताम् ।। ४ ।।
रक्तपूर्णमुखाम्भोजां मद्यपानप्रसक्तिकाम् ।
वह्न्यर्कशशिनेत्रां तु रक्तविस्फुरिताननाम् ।। ५ ।।
विगतांशुकिशोराभ्यां कृतकर्णावतंसिनीम् ।
कण्ठावसक्तमुण्डालीं गलद्रुधिरचर्चिताम् ।। ६ ।।
श्मशानवह्निमध्यस्थां ब्रह्मकेशववन्दिताम् ।
सद्यश्छिन्नशिरःखड्गवराभीतिकराम्बुजाम् ।। ७ ।।

१. विद्यार्णवतन्त्रे, २४ श्वासे, २१३ पृ० (प्राच्यप्रकाशनम्, वाराणसी १९८७) ।

## दक्षिणाकालीध्यानम्

करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ।
कालिकां दक्षिणां दिव्यां मुण्डमालाविभूषिताम् ॥ १ ॥
सद्यश्छिन्नशिरःखड्गवामोर्ध्वाधः कराम्बुजाम् ।
अभयं वरदं चैव दक्षिणाधोर्ध्वपाणिकाम् ॥ २ ॥
महामेघप्रभां श्यामां तथा चैव दिगम्बराम् ।
कण्ठावसक्तमुण्डालीं गलद्रुधिरचर्चिताम् ॥ ३ ॥
कर्णावतंसतां नीतशवयुग्मभयानकाम् ।
घोरदंष्ट्रां करालास्यां पीनोन्नतपयोधराम् ॥ ४ ॥
शवानां करसंघातैः कृतकाञ्चीं हसन्मुखीम् ।
सृक्कद्वयगलद्रक्तधाराविस्फारिताननाम् ॥ ५ ॥
घोररूपां महारौद्रीं श्मशानालयवासिनीम् ।
दन्तुरां दक्षिणव्यापिमुक्तलम्बकचोच्चयाम् ॥ ६ ॥
शवरूपमहादेवहृदयोपरि संस्थिताम् ।
शिवाभिर्घोररूपाभिश्चतुर्दिक्षु समन्विताम् ॥ ७ ॥
महाकालेन सार्द्धोर्ध्वमुपविष्टरतातुराम् ।
सुखप्रसन्नवदनां स्मेराननसरोरुहाम् ॥ ८ ॥
एवं संचिन्तयेद् देवीं श्मशानालयवासिनीम् ॥

हंसतन्त्रोक्तं ध्यानम्—

नमामि दक्षिणामूर्ति कालिकां परमभैरवीम् ।
भिन्नाञ्जनचयप्रख्यां प्रवीरशवसंस्थिताम् ॥ १ ॥

गलच्छोणितधाराभिः स्मेराननसरोरुहाम् ।
पीनोन्नतकुचद्वन्द्वां पीनवक्षोनितम्बिनीम् ।। २ ।।
दक्षिणां मुक्तकेशालीं दिगम्बरविनोदिनीम् ।
महाकालशवाविष्टां स्मेरानन्दोपरि स्थिताम् ।। ३ ।।
मुखं सान्द्रस्मितामोदमोदिनीं मदविह्वलाम् ।
आरक्तमुखसान्द्राभिर्नेत्रालीभिर्विराजिताम् ।। ४ ।।
शवद्वयकृतोत्तंसां सिन्दूरतिलकोज्ज्वलाम् ।
पञ्चाशन्मुण्डघटितमालाशोणितलोहिताम् ।। ५ ।।
नानामणिविशोभाढ्यनानालङ्कारशोभिताम् ।
शवास्थिकृतकेयूरशङ्खकङ्कणमण्डिताम् ।। ६ ।।
शववक्षस्समारूढां लेलिहानां शवं क्वचित् ।
शवमांसकृतग्रासां साट्टहासं मुहुर्मुहुः ।। ७ ।।
खड्गमुण्डधरां वामे सव्येऽभयवरप्रदाम् ।
दन्तुरां च महारौद्रीं चण्डनादातिभीषणाम् ।। ८ ।।
शिवाभिर्घोररूपाभिर्वेष्टितां भयनाशिनीम् ।
मा भैर्मा भैस्स्वभक्तेषु जल्पन्तीं घोरनिःस्वनैः ।।
यूयं किमिच्छथ ब्रूत ददामीति प्रभाषिणीम् ।। ९ ।।

अष्टभुजायाः काल्या ध्यानम्—

अष्टबाहुर्महाकाया कालमेघसमप्रभा ।
शङ्खचक्रगदाकुम्भमुसलांकुशपाशयुक् ।।
वज्रं करे बिभ्रती सा महाकाली मुदेऽस्तु नः ।।

कालरात्र्या ध्यानम्—

करालरूपा कालाब्जसमानाकृतिविग्रहा ।
कालरात्रिः शुभं दद्याद् देवी चण्डाट्टहासिनी ।।

कालिकायाः प्रणाममन्त्रः—

ओं नमामि कालिकां देवीं कलिकल्मषनाशिनीम् ।
नमामि शम्भुपत्नीञ्च नमामि भवसुन्दरीम् ।।
आद्यां देवीं नमस्कृत्य नमस्त्रैलोक्यमोहिनीम् ।
नमामि सत्यसङ्कल्पां सर्वपर्वतवासिनीम् ।।

कालिकाया विशेषस्तन्त्रान्तरे—

कालिकापूजने श्रद्धा यदा संजायते हृदि ।
न तदा ग्रहरोगाणां भयमस्ति कदाचन ।।
कालीनिन्दाकरा लोके भविष्यन्ति गतायुषः ।
तेषां पुत्रकलत्राणां नाशोऽन्ते नरकं व्रजेत् ।।
महाकालस्य कलनात् त्वमाद्या कालिका परा ।
कालसंकलनात् काली सर्वेषामादिरूपिणी ।।
कालत्वादादिभूतत्वादाद्या कालीति गीयते ।।

शक्तिसंगमे वीररात्र्यादयः प्रोक्ताः—

यथा—वीररात्रिः, महारात्रिः, कालरात्रिः, घोररात्रिः, मोहरात्रिः, क्रोधरात्रिः, इत्यादिबह्व्यो निर्दिष्टास्तत्र कालरात्रिः—

दीपोत्सवचतुर्दश्या त्वमाया योग एव तु ।
कालरात्रिर्महेशानि ताराकाली प्रियंकरी ।।

(पुरश्चर्या० ९६० पृष्ठे)

दक्षिणकाल्या ध्यानम्[1]—

भौमवारे चितास्थाने कुक्षि सिन्दूरमानयेत् ।। ३५ ।।

---

१. मुण्डमालातन्त्रे १९ पटले ।

तेनैव कुलकाष्ठे तु यन्त्रं कृत्वा तदन्तरे ।
तेनैव कुलकाष्ठे तु स्फेंद्वन्द्वं च किटिद्वयम् ।। ३६ ।।

देशं लिखेच्च न मनूत्तमः ... ... ... ... ।। ३७ ।।

पत्रे महिषमर्दिन्या नववर्णं लिखेत्ततः ।
तद्बाह्ये जयदुर्गाख्यां श्मशानभैरवीं ततः ।। ३८ ।।

लिखित्वा पूजयेद्रात्रौ भद्रकालीं समाहितः ।
कामाख्या सुखमास्थाय ध्यात्वा कामकलातनुम् ।। ३९ ।।

दिग्वासा गलितः शेषा चिकुरः कुलकौलिकः ।
ध्यायेत् कालीं करालास्यां दंष्ट्रां नीलविलोचनाम् ।। ४० ।।

स्फुरच्छवकरश्रोणिकृतकाञ्चीं दिगम्बराम् ।
वीरासनसमासीनां महाकालोपरि स्थिताम् ।। ४१ ।।

श्रुतिमूलसमाकीर्णसृक्कणीं चण्डनादिनीम् ।
मुण्डमालागलद्रक्तचर्चितां पीवरस्तनीम् ।। ४२ ।।

मदिरामोदनास्फालकल्पिताखिलमोदिनीम् ।
वामे खड्गं च मुण्डञ्च धारिणीं दक्षिणे करे ।। ४३ ।।

वराभययुतां घोरवदनां लोलजिह्विकाम् ।
सदन्तपक्षसंयुक्तवामकर्णविभूषणाम् ।। ४४ ।।

शिवाभिर्घोररावाभिः सेवितां प्रलयोदिताम् ।
चण्डहास-चण्डनाद-चण्डास्फालैश्च भैरवैः ।। ४५ ।।

गृहीतनरकङ्काल-जयशब्दपरायणैः ।
सेविताखिलशब्दौघमुनिभिः सेवितां सदा ।। ४६ ।।

एवं तां कालिकां ध्यात्वा पूजयेत् कुलनायकः ।
विना परपुरावेशं विचचारान्तःप्रसर्पणम् ।। ४७ ।।

यत् किञ्चित् कुलसिद्धिस्तु जायते न मनागपि ।
सर्वसिद्धिप्रदा देवी हेलयापि च चिन्तया ।। ४८ ।।

अतः सा दक्षिणानाम्नी त्रिषु लोकेषु गीयते ।
ततोऽष्टशतमामन्त्र्य सिद्धार्थं श्वेतसम्भवम् ।। ४९ ।।

इतः परं देव्यनुष्ठानादिविधिर्लिखितोऽस्ति तस्मादत्र न लिख्यते।

कामकलाया ध्यानम् (सौन्दर्यलहर्याम्)—

मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो
हरार्धं ध्यायेद् यो हरमहिषि ते मन्मथकलाम् ।
स सद्यः संक्षोभं नयति वनिता इत्यतिलघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ।। १९ ।।

इदं पद्यं कामकलाया ध्यानमस्ति । ज्ञायते च सौभाग्यवर्धिनी-पदार्थ-चन्द्रिका-डिण्डिमभाष्यम्–गोपालसुन्दरी–आनन्दलहरीटीका–कैवल्यवर्धिनी-टीकाभिः ।

अपरञ्चात्रैव—

तडिल्लेखातन्वीं तपनशशिवैश्वानरमयीं
निषण्णां षण्णामप्युपरि कमलानां तव कलाम् ।
महापद्माटव्यां मृदितमलमायेन मनसा
महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ।। २१ ।।

इदमपि कामकलायाः सूक्ष्मध्यानं सौभाग्यवर्धिनी-गोपालसुन्दरी-आनन्दलहरीटीका-कैवल्यवर्धिनी-आनन्दगिरीया टीकाभिरवगम्यते ।

दशसु महाविद्यासु दक्षिणाकालिकाया भैरवो महाकालोऽस्तीत्यस्य समर्चा कालिकादक्षभागे कर्तव्या। तदुक्तं तोडलतन्त्रे प्रथमपटले—

**शृणु चार्वङ्गि सुभगे कालिकायाश्च भैरवम्।**
**महाकालं दक्षिणाया दक्षभागे प्रपूजयेत्॥**
**महाकालेन वै सार्धं दक्षिणा रमते सदा॥**

महाकाल्येव आद्या शक्तिर्गीयते, इत्यपि प्रोच्यतेऽत्रत्यैनैकविंशति-श्लोकेन। इयमेव कालस्वरूपिणी, शिवस्य हृदयकमले स्थिता संहाररूपा, अस्याः प्रभावादेव महाकालो जगत् संहरति। सा च संहाररूपा काली मूर्तिधारणाय व्यक्तरूपेण यदा बहिर्गता तदानीमेव सदाशिवः सहसा शवरूपेण संवृत्तः। अथ च देवी शववाहना संजाता। निर्गतायां महाशक्तौ शिवः शक्तिहीनत्वात् शवत्वमापद्यते, नापि लीलायुक्तः; किन्तु तदानीं स्वहृदय एव शक्तिं स्थापयति, न तु नितान्तं तां त्यजति तथा तदा तद्बलेन जगतः सृष्टिस्थितिलयकर्ता। हृदयस्थदेवीभावमादायैव शववाहनत्वं साधयन्ति साधकाः।

## कालिकामन्त्रः
(तोडलतन्त्रे तृतीयपटले)

शृणु देवि सदानन्दे कालिकामन्त्रमुत्तमम् ।
यस्याः प्रसङ्गमात्रेण जीवन्मुक्तो भवेन्नरः ॥ ८ ॥
शिवाद्यं बिन्दुनादाढ्यं वामनेत्राग्निसंयुतम् ।
सिद्धविद्या त्वियं भद्रे विद्याराज्ञी सुदुर्लभा ॥ ९ ॥
इदं बीजत्रयं चाद्यं गगनं बिन्दुभूषितम् ।
वामश्रवणसंयुक्तं द्वन्द्वञ्चापरकं शृणु ॥ १० ॥
ईशानं वह्निसंयुक्तं वामनेत्रेन्दुसंयुतम् ।
द्वितयं परमेशानि सम्बोधनपदं ततः ॥ ११ ॥
पुनर्बीजत्रयं कूर्चं मायाद्वन्द्वञ्च ठद्वयम् ।
द्वाविंशत्यक्षरं मन्त्रं विद्या वह्निसुदुर्लभा ॥ १२ ॥
वाग्भवाद्या महाविद्या श्रीकाली देवता स्मृता ।
प्रणवाद्या महाविद्या देवता सिद्धिकालिका ॥ १३ ॥
निजबीजद्वयं कूर्चबीजैकं परमेश्वरि ।
त्र्यक्षरी[1] परमा विद्या चामुण्डा कालिका स्मृता ॥ १४ ॥
एतस्याः सदृशी विद्या सिद्धिदा नास्ति सुन्दरि ।
यथा षडक्षरी[2] विद्या तथा विद्या च त्र्यक्षरी ॥ १५ ॥

---

१. क्रीं क्रीं हूं ;    २. क्रीं क्रीं क्रीं फट् स्वाहा ।

निजबीजत्रयं भद्रे श्मशानकालिके ततः ।
पुनर्बीजत्रयं भद्रे वह्निकान्तां समुच्चरेत् ॥ १६ ॥

चतुर्दशाक्षरी[3] विद्या त्रिषु लोकेषु पूजिता ।
दक्षिणाकालिका सिद्धकालिका गुह्यकालिका ॥ १७ ॥

श्रीकालिका भद्रकाली चामुण्डा कालिका परा ।
श्मशानकालिका देवी महाकालीति चाष्टधा ॥ १८ ॥

निजबीजं महेशानि सम्बोधनपदं ततः ।
पुनश्च कालिकाबीजं ततो वह्निवधूं न्यसेत् ॥
इति चाष्टविधं मन्त्रं सर्वतन्त्रेषु गोपितम् ॥ १९ ॥

इतः परं तारायाः मन्त्रोऽत्र २०–२९ श्लोकपर्यन्तं वर्णितः, ततः परमुभयोराराधनविधिर्निरूपितोऽस्ति ।

कालिकायाश्च तारायाः आराधनमिहोच्यते ।
प्रातरुत्थाय मन्त्रज्ञः सहस्रारे गुरुं यजेत् ॥ ३० ॥

षट्चक्रं भेदयित्वा तु चाष्टोत्तरशतं जपेत् ।
ततः प्रणम्य विधिवत् स्नानकर्म समाचरेत् ॥ ३१ ॥

अद्येत्यादि समुच्चार्य सौरमासं समुच्चरेत् ।
देवताप्रीतये पश्चात् स्नापयेच्छुद्धवारिणा ॥ ३२ ॥

ओङ्कारं च समुच्चार्य गङ्गे चेति समुच्चरेत् ।
यमुनेति ततः पश्चाद् गोदावरि सरस्वति ॥ ३३॥

नर्मदेति समुच्चार्य सिन्ध्रुकावेरिसंयुतम् ।
अस्मिन् जले च सन्निधिं कुरु शब्दमथो वदेत् ॥ ३४ ॥

---

३. क्रीं क्रीं क्रीं श्मशानकालिके क्रीं क्रीं क्रीं स्वाहा ।

आनयेदङ्कुशाख्येन रविसंयुक्तमण्डलात् ।
मुद्राचतुष्टयं देवि दर्शयेद् बहुयत्नतः ॥ ३५ ॥

सूर्यायाभिमुखं तोयं निःक्षिप्य रविसंख्यया ।
मूलमन्त्रं समुच्चार्य स्फालयेच्चचरणद्वयम् ॥ ३६ ॥

चरणान्निःसृते तोये त्रींनिमज्य जपन् मनुम् ।
मूलमन्त्रं त्रिर्जप्त्वा तु मुद्रया कुम्भसंज्ञया ॥ ३७ ॥

जलादुत्थाय देवेशि तिलकं कुलवर्त्मतः ।
आत्मविद्याशिवैस्तत्त्वैराचमेत् पाथसा ततः ॥ ३८ ॥

वह्निजायान्विता मन्त्रा विज्ञेया प्रणवादिकाः ।
गङ्गे चेत्यादिना देवि तीर्थस्यावाहनं चरेत् ॥ ३९ ॥

मूलेन दर्भया भूमौ त्रिवारं निःक्षिपेत् सुधीः ।
तज्जलेन सप्तवारमात्माभिषेकमाचरेत् ॥ ४० ॥

अङ्गन्यासं ततः कृत्वा वामहस्ते सुरेश्वरि ।
गगनं वायुबीजञ्च वरुणं भूमिबीजकम् ॥ ४१ ॥

वह्निबीजं बिन्दुयुक्तं त्रिवारं जपमाचरेत् ।
अनेन मनुना देवि तज्जलं चाभिमन्त्रितम् ॥ ४२ ॥

मूलमन्त्रं समुच्चार्य सप्तधा तत्त्वमुद्रया ।
अभिषेचनमात्रेण मुच्यते सर्वपातकैः ॥ ४३ ॥

शेषजलं महेशानि दक्षहस्ते समानयेत् ।
इडया पूरयेत् तोयं क्षालयेद् देहमध्यगम् ॥ ४४ ॥

ततः पिङ्गलया देवि तत् तोयं तु विरेचयेत् ।
कृष्णरूपं तदुदकं पापरूपं विचिन्तयेत् ॥ ४५ ॥

पुरतो वज्रपाषाणे फट्कारेण विनिःक्षिपेत् ।
हस्तं प्रक्षाल्य चाचम्य प्राणायामपुरःसरम् ॥ ४६ ॥

तर्पयेत् कुलदेवञ्च सूर्यायार्घ्यं निवेदयेत् ।
देवतार्घ्यं ततः पश्चाद् गायत्रीं परमाक्षरीम् ॥ ४७ ॥

प्रणवञ्च समुद्धृत्य कालिकायै ततो वदेत् ।
विद्महे इति संलिख्य श्मशानं च समुद्धरेत् ॥ ४८ ॥

वासिनीं ङेयुतां देवि धीमहीति ततो वदेत् ।
तन्नो घोरे महेशानि प्रजपेत् तु प्रचोदयात् ॥ ४९ ॥

गायत्रीं प्रपठेद् धीमान् त्रिवारं जलमुत्क्षिपेत् ।
ततो जपेन् महामन्त्रं गायत्रीं परमाक्षरीम् ॥ ५० ॥

अङ्गन्यासं ततः कृत्वा आचम्य परमेश्वरि ।
इष्टदेवीं महेशानि ध्यायेत्तु रविमण्डले ॥ ५१ ॥

इतः परं ताराया गायत्रीनिर्देशोऽस्ति, तद्यथा—

ओं तारायै विद्महे इति महोग्रायै ततो वदेत् ।
धीमहीति ततः पश्चात् तन्नो देवी प्रचोदयात् ॥ ५२ ॥

प्राणायामं ततः कृत्वा चाष्टोत्तरशतं जपेत् ।
सूत्राकारेण देवेशि पूजाविधिरिहोच्यते ॥ ५३ ॥

स्वस्ति वाच्य च सङ्कल्प्य घटं संस्थाप्य यत्नतः ।
मन्त्रेणाचमनं कार्यं सामान्यार्घ्यं ततो न्यसेत् ॥ ५४ ॥

तज्जलैर्द्वारमभ्युक्ष्य द्वारपूजां समाचरेत् ।
त्रिविधं विघ्नमुत्सार्य भूतापसारणं ततः ॥ ५५ ॥

आसनं च समभ्यर्च्य गुरुदेवं नमेत् सुधीः ।
करशुद्धिं च तालञ्च त्रयं दिग्बन्धनं ततः ॥ ५६ ॥

वह्निना वेष्टनं कार्यं भूतशुद्धिमथाचरेत् ।
मातृकायाः षडङ्गं च कुर्यादन्तरमातृकाम् ॥ ५७ ॥

मातृकाध्यानमाचर्य बाह्ये तु मातृकां न्यसेत् ।
पीठन्यासं ततः कृत्वा प्राणायामं समाचरेत् ॥ ५८ ॥

ऋष्यादिकं कराङ्गञ्च वर्णन्यासं समाचरेत् ।
षोढान्यासं ततो देवि व्यापकं तदनन्तरम् ॥ ५९ ॥

एवं समाहितमनास्तत्त्वन्यासं समाचरेत् ।
बीजन्यासं ततो देवि व्यापकं विन्यसेत् सुधीः ॥ ६० ॥

मूलेन सप्तधा ध्यानं मानसैः पूजनं चरेत् ।
विशेषार्घ्यं पीठपूजां पुनर्ध्यानं सनेत्रकम् ॥ ६१ ॥

मुद्रादिदर्शनं कार्यमावाहनषडङ्गकम् ।
धेन्वादिकं ततः प्राणप्रतिष्ठां मूलपूजनम् ॥ ६२ ॥

आज्ञाप्रार्थनमङ्गानि काल्यादीन् परिपूजयेत् ।
ब्राह्म्यादीन्यसिताङ्गादीनि महाकालं प्रपूजयेत् ॥ ६३ ॥

खड्गादीन् गुरुपङ्क्तिञ्च पुनर्देवीं प्रपूजयेत् ।
बलिदानं ततो होमं प्राणायामं ततो जपम् ॥ ६४ ॥

जपं समर्पयेद् धीमान् प्राणायामं ततश्चरेत् ।
एतस्मिन् समये देवि कारणादीन् समाचरेत् ॥ ६५ ॥

अर्घ्यं दत्त्वा महेशानि चात्मानञ्च समर्पयेत् ।
स्तुतिञ्च कवचं स्मृत्वा चाष्टाङ्गं प्रणमेत् सुधीः ॥६६॥

शिवोऽहमिति संचिन्त्य संहारेण विसर्जयेत् ।
ऐशान्यां मण्डलं कृत्वा चाण्डाल्युच्छिष्टपूर्विकाम् ॥ ६७ ॥

अर्घ्यं सन्धार्य शिरसि चन्दनं च ललाटके ।
नैवेद्यं किञ्चित् स्वीकृत्य विहरेच्च निजेच्छया ॥ ६८ ॥

संक्षेपपूजामथवा कुर्यान्मन्त्री समाहितः ।
आदावृष्यादि विन्यस्य करशुद्धिस्ततः परम् ॥ ६९ ॥

अङ्गुलीव्यापकन्यासौ हृदादिन्यास एव च ।
तालत्रयं च दिग्बन्धः प्राणायामस्ततः परम् ॥ ७० ॥

ध्यानं मानसयागञ्च अर्घ्यस्थापनमेव च ।
पीठपूजां पुनर्ध्यानं ततश्चावाहनं चरेत् ॥ ७१ ॥

जीवन्यासं ततः कृत्वा पूजयेत् परदेवताम् ।
अङ्गपूजां च काल्यादीन् ब्राह्मयादींश्चाष्टभैरवान् ॥ ७२ ॥

महाकालं पूजयित्वा गुरुपङ्क्तिं यजेत् ततः ।
खड्गादीन् पूजयित्वा तु पुनर्देवीं प्रपूजयेत् ॥ ७३ ॥

प्राणायामं ततः कृत्वा प्रजपेत् साधकाग्रणीः ।
देव्या हस्ते जपफलसमर्पणमथाचरेत् ॥ ७४ ॥

प्राणायामं ततः कृत्वा चाष्टाङ्गं प्रणमेत् सुधीः ।
स्तुतिश्च कवचं स्मृत्वा विशेषार्घ्यं प्रदापयेत् ।। ७५ ।।

आत्मसमर्पणं कृत्वा संहारेण विसर्जयेत् ।
ऐशान्यां मण्डलं कृत्वा चाण्डाल्युच्छिष्टपूर्विका ।। ७६ ।।

नैवेद्यं किञ्चित् स्वीकृत्य विहरेच्च निजेच्छया ।। ७७ ।।

।। इति तोडलतन्त्रे सर्वतन्त्रोत्तमोत्तमे हरपार्वतीसंवादे तृतीयः पटलः ।।

# कालीमन्त्रवासना

(तोडलतन्त्रे षष्ठपटले)

श्रीदेव्युवाच—

श्रुतं महाकालिकाया मन्त्रं परममायायाः ।
संक्षेपं कथितं नाथ वासनां वद मां प्रति ॥ १ ॥

श्रीशिव उवाच—

शृणु देवि महामन्त्रवासनां सर्वसिद्धिदाम् ।
यस्याः श्रवणमात्रेण मन्त्राः सिद्धा भवन्ति हि ॥ २ ॥

ककारस्योर्ध्वकोणेषु प्राणो वायुः प्रतिष्ठितः ।
अपानो वायुकोणे च समानो मध्यदेशतः ॥ ३ ॥

उदानोऽङ्कुशकोणे च मात्रायां व्यान एव च ।
बीजं तु कालिकारूपं प्रकारं शृणु पार्वति ॥ ४ ॥

कलाभागे जटाजूटं केशञ्च परमेश्वरि ।
बिन्दुर्मस्तकभालन्तु नासानेत्रञ्च पार्वति ॥ ५ ॥

श्रोत्रयुग्मं तथा वक्त्रं स्कन्दनादव्यवस्थितम् ।
चतुर्बाहुं तथा देहं स्तनद्वन्द्वं कटिद्वयम् ॥ ६ ॥

हृदयं जठरं पादं तथा सर्वाङ्गुलिः शिवे ।
ब्रह्मरूपं ककारञ्च सर्वाङ्गं तनुसंशयः ॥ ७ ॥

शकारं कामरूपं च योनिरूपं न चान्यथा ।
चन्द्रसूर्याग्निरूपं च रेफं परमदुर्लभम् ॥ ८ ॥

सर्वाङ्गद्योतनं तेजो जगदानन्दरूपकम् ।
बिन्दुनिर्वाणदं नादं महामोक्षप्रदं सदा ॥ ९ ॥

सर्वविघ्नहरं देवि ककारं तोयरूपकम् ।
सर्वपापहरं रेफं तस्माद् वह्निर्न चान्यथा ॥ १० ॥

ईकारं परमेशानि शक्तिं चाव्ययरूपिणीम् ।
महामोक्षप्रदा देवि तस्मान्माया प्रकीर्तिता ॥ ११ ॥

ककारं ब्रह्मरूपं च मकारं विष्णुरूपकम् ।
रेफः संहाररूपत्वाच्छिवरूपो न चान्यथा ॥ १२ ॥

ब्रह्माविष्णुशिवः साक्षात् ककारं परमेश्वरि ।
अनुच्चार्य्यं तदेव स्याद् विना मायायुतं शिवे ॥ १३ ॥

मायायुक्तं यदा देवि तदा मुक्तिप्रदं महत् ।
अत एव महेशानि मायाशक्तिर्निगद्यते ॥ १४ ॥

ककारं धर्मदं देवि ईकारं चार्थदायकम् ।
रकारं कामदं कान्ते मकारं मोक्षदायकम् ॥ १५ ॥

एकत्रोच्चारणाद् देवि निर्वाणमोक्षदायिनी ।
माहात्म्यं देवदेवेशि किं वक्तुं शक्यते मया ॥ १६ ॥

जीवकोटिसहस्रेण वक्त्रकोटिशतेन च ।
जन्मान्तरसहस्रेण वर्णितुं नैव शक्यते ॥ १७ ॥

विधिवल्लक्षजापेन पुरश्चरणमुच्यते ॥ १८ ॥

एतद्रूपं महामायां कूर्चबीजं तु सुन्दरि ।
वाग्भवं प्रणवं देवि एतद्रूपं न संशयः ॥ १९ ॥

द्रुतसिद्धिप्रदा विद्या वह्निजाया परा मनुः ।
सम्बोधनपदेनैव सदा सन्निधिकारिणी ॥ २० ॥

अथ वक्ष्ये महाविद्यापुरश्चरणमुत्तमम् ।
कथितं मन्त्रराजस्य त्रिपुरश्चरणं शृणु ॥ २१ ॥

दिवा लक्षं जपन् मन्त्रं हविष्याशी जितेन्द्रियः ।
दिव्यवीरमते देवि रात्रौ लक्षं जपेत् सुधीः ॥ २२ ॥

अथ षडक्षरस्यास्य शृणु देवि पुरस्क्रियाम् ।
दिव्यवीरमतेनैव विंशत्येकेन पार्वति ॥ २३ ॥

तथा त्र्यक्षरं मन्त्रं प्रजपेत् साधकाग्रणीः ।
ध्यानपूजादिकं सर्वं समानं वीरवन्दिते ॥ २४ ॥

एतस्याः सदृशी विद्या फलदा नास्ति योगिनि ।
सर्वमन्त्रस्य चैतन्यं शृणु पार्वति सादरम् ॥ २५ ॥

सहस्रारे महापद्मे बिन्दुरूपं परं शिवम् ।
कुण्डलिनीं समुत्थाप्य हंसेन मनुना सुधीः ॥ २६ ॥

नासाग्रे या स्थिरा दृष्टिर्जायते परमेश्वरि ।
तदेव मन्त्रचैतन्यं कुण्डलीचक्रगं भवेत् ॥ २७ ॥

सहस्रारे महापद्मे कुण्डल्या सहितं गुरुम् ।
भावयेत् सर्वमन्त्राणां चैतन्यं जायते प्रिये ॥
तदैव प्रजपेन्मन्त्रं सिद्धिदं नात्र संशयः ॥ २८ ॥

## यन्त्रम्

इष्टदेवतां ध्यातुं प्रतिमा चित्रं यन्त्रं चेति प्रतीकत्रयमुपयुज्यते,

तत्रान्यापेक्षया यन्त्रं सूक्ष्मम् । यन्त्रमेव चक्रशब्देनापि कथ्यते पूजाविधौ । अस्य चर्चा पुराणे तन्त्रे च बहुशो लभ्यते । यच्छत्यत्रेति निरुक्त्या 'यम्+त्र' इति व्युत्पत्त्या निष्पन्नोऽयं शब्दोऽनेकार्थोऽपि मण्डलवदत्र देवाद्यधिष्ठानत्वेन गृह्यते । कुलार्णवतन्त्रेऽस्य विषये लिखितमित्थम्—

**यन्त्रं मन्त्रमयं प्रोक्तं देवता मन्त्ररूपिणी ।**
**यन्त्रे सा पूजिता देवी सहसैव प्रसीदति ॥**
**कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात् ।**
**यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः ॥** (६।८५-८६)

वर्षक्रियाकौमुद्याम्—

**विना यन्त्रेण पूजा चेद् देवता न प्रसीदति ।** (पृ० १४७)

अगस्त्यसंहितायाम्—

**यमभूतादिसर्वेभ्यो भयेभ्योऽपि कुलेश्वरि ।**
**त्रायते सततं चैव तस्माद् यन्त्रमितीरितम् ॥** (१७।६१)

कौलावलीनिर्णये—

**विना यन्त्रेण या पूजा विना मांसेन तर्पणम् ।**
**विना शक्त्या तु यत्पानं तत्सर्वं निष्फलं भवेत् ॥** (८।४१-४२)

रामपूर्वतापनीये—

**साभयस्यास्य देवस्य विग्रहो यन्त्रकल्पना ।**
**विना यन्त्रेण चेत्पूजा देवता न प्रसीदति ॥** (१।१२)

तान्त्रिकाः 'यम त्रा त्रै वा' इत्युभाभ्यामस्य निष्पत्तिं स्वीकुर्वन्ति । तथा यन्त्रं मन्त्रमयं मन्यन्ते, अर्थान्मन्त्रादेवास्य विकासः । यन्त्रं खलु देवस्वरूपमेव ।

पूजायां यन्त्रं महदुपकरणम् । तथा सर्वत्रैवास्योपयोगो युक्तः । तदुक्तम्—

**सर्वेषामेव मन्त्राणां पूजा यन्त्रे प्रशस्यते ।**
**यन्त्रे मन्त्रं समाराध्य यदभीष्टं तदाप्नुयात् ॥**

(वर्षक्रियाकौ०, पृ० १४०)

कलशस्थापनाशक्तस्तु यन्त्रादौ पूजां कर्त्तुं शक्नोति—'कलशस्थापनाशक्तो यन्त्रादौ पूजनं चरेत्' इति सिद्धान्तसारे । आदिशब्देन प्रतिमाशिवलिङ्गशालग्रामादयो गृह्यन्ते । तदुक्तं मेरुतन्त्रे—

**गणेशसूर्यविष्ण्वीशदेवीनां पूजनं क्रमात् ।**
**दशस्थानानि देवानां पूजार्थं कल्पितानि वै ॥**
**शिवलिङ्गे मणौ यन्त्रे शालग्रामे घटे रवौ ।**
**स्थण्डिलेऽग्नौ मूर्ध्नि हृदि स्थानेष्वेतेषु पूजयेत् ॥**
**भूमावेव कृता पूजा पुत्रायुर्धननाशिनी ॥**

मेरुतन्त्रे यन्त्रनिर्माणाय सामग्र्यः—सुवर्णरजतताम्रमाणिक्यमरकत-लोहत्रयश्रीपर्णीविद्रुमभूर्यपत्रशालग्रामभूम्यादयः कार्यविशेषनिर्देशनपुरःसरं निर्दिष्टाः, तथा तासां मानं विधिं च तत्र प्रदर्शितं तदर्थं पुरश्चर्यार्णवस्य षष्ठतरङ्गे द्रष्टव्यम् (५१८–५२६ पृ०) ।

अपि च—

**देवस्य मन्त्ररूपस्य यन्त्रव्याप्तिमजानताम् ।**
**कृतार्चनादिकं सर्वं व्यर्थं भवति शाम्भवि ॥**

(तत्रैव, ५२४ पृ०)

**पूजायन्त्रं दक्षमार्गे तत्तद्गन्धाष्टकेन च ।**
**लिखेद् वा केशरहिमरोचनाभिः समालिखेत् ॥**
**वाममार्गे लिखेदाद्यपुष्पेण यदि यन्त्रकम् ।**
**षण्मासं पूजनात्तत्र त्वरितं सिद्धिमाप्नुयात् ॥**

अभावे कुसुम-रक्तचन्दनादिकमपि चर्चितम् (पुरश्चरणचन्द्रिकायाम्, ५२४ पृ०)। स्वतन्त्रतन्त्रे—स्वर्णरजतताम्रपाषाणाष्टधातुषु गन्धेन यन्त्र-लेखनं विहितम्—

**एतेन गन्धयोगेन योगिचक्रं समालिखेत् ।**

(तत्रैव, ५२५ पृ०)

यामले—

**एवं यन्त्रं विनिर्माय तत्र देवीं प्रपूजयेत् ।**

देवीमित्युपलक्षणम्, स्वेष्टदेवतामित्यर्थः ।

एतावतावश्यकं मत्वाऽत्र कतिपयकालिकायन्त्राणामाकृतिं तत्सपर्यां च लिखामि समासतः । इदमत्रावधेयं यद् यन्त्रोद्धारश्लोकास्त्वाकरग्रन्थेभ्यो मया गृहीताः; किन्तु यन्त्ररचना या विहिता सा यतस्तत उद्धृतैवानुक्रियते, न तु स्वतः क्रियतेऽतोऽत्र यदि त्रुटिरवलोक्येत तत्र न मे दोषः । अपि च—यावन्ति मन्त्राणि प्राप्तानि तान्येवात्रोद्धृतानि न सर्वाणि । सहैव तत्तद्देवता-मन्त्रध्यानादीन्यपि सौकर्याय प्रदर्शितानि प्रकरणेऽस्मिन् ।

## अथ कालीध्यानम्

(शाक्तप्रमोदे)

**शवारूढां महाभीमां घोरदंष्ट्रां हसन्मुखीम् ।**
**चतुर्भुजां खड्गमुण्डवराभयकरां शिवाम् ॥ १ ॥**
**मुण्डमालाधरां देवीं ललज्जिह्वां दिगम्बराम् ।**
**एवं संचिन्तयेत्कालीं श्मशानालयवासिनीम् ॥ २ ॥**

### यन्त्रोद्धारः

**आदौ त्रिकोणमालिख्य त्रिकोणं तद्बहिर्लिखेत् ।**
**ततो वै विलिखेन्मन्त्री त्रिकोणत्रयमुत्तमम् ॥ १ ॥**

ततस्त्रिवृत्तमालिख्य लिखेदष्टदलं ततः ।
वृत्तं विलिख्य विधिवल्लिखेद् भूपुरमेककम् ॥ २ ॥



एतद्यन्त्ररचना यन्त्रोद्धारश्लोकसहिता शाक्तप्रमोदे लिखिता तथैवात्रोद्धृता मया; किन्तु श्लोकेनेयं न संघटते। श्लोकेन तु त्रिकोणपञ्चकं समायाति।

**मन्त्रोद्धारः**

कालीबीजत्रयं प्रोक्त्वा लज्जाबीजद्वयं ततः ।
हूँकारौ द्वौ ततः पश्चाद्दक्षिणे कालिके ततः ॥ १ ॥
कालीबीजत्रयं तस्माल्लज्जाबीजद्वयं पठेत् ।
द्वौ च स्वाहान्तहूँकारौ कालीमन्त्र उदाहृतः ॥ २ ॥

**मन्त्रः**

क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं दक्षिणे कालिके क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं स्वाहा ।

**दक्षिणकालीसपर्यापद्धतिः**, तत्र विस्तरेण भूतशुद्धिः, षडङ्गन्यासः, अन्तर्मातृकान्यासः, स्थितिक्रमः, संहारक्रमः, षोढान्यासः, प्रथम-द्वितीय-तृतीय-चतुर्थ-पञ्चमप्रकारेण तथा षष्ठात्मकोऽनुलोमविलोमप्रकाराभ्याम्। तत्त्वन्यासः, बीजन्यासः, मानसपूजा, बहिःपूजा, अर्घ्यस्थापनविधिः, सहस्रनामावली, कुमारीपूजनम्, बलिः, होमादि, इति सर्वं तथा संक्षिप्त-पूजाविधिश्च शाक्तप्रमोद एव द्रष्टव्यम्।

कालीमन्त्रानुष्ठानप्रकारस्तु विद्यार्णवतन्त्रे (विद्यारण्ययतिविरचिते), बृहत्तन्त्रसारे (कृष्णानन्द-आगमवागीशकृते), तन्त्रोक्तप्रयोगे (सतीशचन्द्र-गिरिप्रणीते) विस्तरेण वर्तते, तत्सर्वं तत्रैव द्रष्टव्यम्। प्रायस्तेषु समान-रूपेण निरूपणमस्ति।

## कालीपूजनयन्त्रम्

**आदौ षट्कोणमारच्य त्रिकोणत्रितयं ततः।**
**पद्ममष्टदलं बाह्ये भूपूरं तत्र पूजयेत् ॥**



अपरं कालीपूजायन्त्रम्

कालीपीठे यजेद्देवीं पञ्चकोणाढ्यकर्णिके ।
अष्टपत्रे षोडशाब्जे वृत्ते भूपुरसंयुते ॥



कालीपूजापद्धतौ श्यामायन्त्रम्



## गुह्यकाल्यादीनां यन्त्रम्

(महाकाल्या अपि इदमेव यन्त्रम्)

त्रिकोणं चैव षट्कोणं नवकोणं मनोहरम् ।
त्रिवृत्तं साष्टपत्रं च सुकिञ्जल्कसमन्वितम् ॥
भूपुरत्रितयारूढं योनिमण्डलमण्डितम् ।
त्रिपञ्चारमिदं चक्रं सर्वतन्त्रप्रकीर्तितम् ॥

(बृहत्तन्त्रसारे, २६२ पृष्ठे)

त्रिकोणं त्रिकोणाकारमित्यर्थः । तथा च षट्कोणपदेनात्राधोमुखत्रिकोणद्वयमभिहितम्, न तूर्ध्वाधोभावेन षट्कोणमित्यर्थलाभाय । षट्कोणस्य विशेषणं त्रिकोणमन्यथाष्टादशकोणत्वायतेस्त्रिपञ्चारत्वानुपपत्तेश्च ।

केचित्तु त्रिकोणं चैव षट्कोणं त्रिकोणद्वितयं पुनरिति पाठस्तत्र त्रिकोणपदं न विशेषणम्,षट्कोणपदञ्च उपदर्शितत्रिकोणद्वयपरम् । भूपुरं चतुरस्रम् । योनिमण्डलमधोमुखत्रिकोणम्, तेन मण्डितमर्थाद् वेष्टितम् ।

## अथ गुह्यकाली

विश्वसारे—

अथ वक्ष्ये महेशानि विद्यां सर्वफलप्रदाम् ।
चतुर्वर्गप्रदां साक्षान्महापातकनाशिनीम् ॥
सर्वसिद्धिप्रदां नित्यां भुक्तिमुक्तिप्रदायिनीम् ।
गुह्यकालीं महाविद्यां त्रैलोक्ये चातिदुर्लभाम् ॥
इन्द्रादिरूढं वर्गाद्यं रतिबिन्दुसमन्वितम् ।
त्रिगुणं च ततः कृत्वा ईशानञ्च समुद्धरेत् ॥

षष्ठस्वरसमायुक्तं नादबिन्दुकलान्वितम् ।
द्विगुणञ्च ततः कृत्वा ईशानद्वयमुद्धरेत् ॥
वामाक्षिवह्निसंयुक्तं नादबिन्दुकलायुतम् ।
तद् गुह्ये कालिके प्रोक्त्वा चाथवा दक्षिणे वदेत् ॥
सप्तबीजं ततः पूर्वक्रमेण योजयेत्ततः ।
वह्निजायावधिः प्रोक्ता विद्या त्रैलोक्यमोहिनी ॥

अथवेति गुह्ये कालिके बीजद्वयं दक्षिणे कालिके वा मन्त्रः ।

कामबीजं ततः कूर्चं तदन्ते भुवनेश्वरी ।
गुह्ये च कालिके चेति तथा बीजद्वयं भवेत् ॥
स्वाहान्ता कथिता विद्या सर्वतन्त्रेषु गोपिता ।
एषा तु षोडशी प्रोक्ता चतुर्वर्गफलप्रदा[1] ॥

श्यामायन्त्रम्



१. बृहत्तन्त्रसारे, २६१ पृष्ठे।

अस्यार्थः—आदौ निजबीजं ततः कूर्चं माया ततः सम्बोधनपद-द्वयम्। ततो निजबीजद्वयं कूर्चद्वयं मायाद्वयं वह्निवल्लभा। कामबीजद्वयं हित्वा भवेद्विद्या चतुर्दशी। अस्य मन्त्रस्येति शेषः।

**सप्तबीजं पुरा प्रोक्तं गुह्येऽन्ते कालिके पुनः।**
**स्वाहान्ता कथिता विद्या सर्वतन्त्रेषु गोपिता॥**

एषापि चतुर्दशाक्षरी। अस्यां नामादिपदं हित्वा चेत्तदा दक्षिणे पञ्चदशाक्षरी। तथा च—

**दक्षिणे पदमाभाष्य भवेत् पञ्चदशाक्षरी।**
**कामबीजं परित्यज्य अथवा षोडशाक्षरी॥**

एतेन षोडशाक्षरविद्यायाः कामबीजाभावेन पञ्चदशाक्षरी भवति।

**कामबीजं समुद्धृत्य सम्बुद्ध्यन्तपदद्वयम्।**
**पुनः कामं तदन्ते च दद्याद्वह्नेश्च सुन्दरीम्॥**
**एषा नवाक्षरी विद्या गुह्यकाल्याः समीरिता।**
**दक्षिणे पदमाभाष्य भवेद् विद्या दशाक्षरी॥**

एतासां पूजनं तु तत्रैव—

**पूर्ववन्न्यासवर्गन्तु पूर्ववत् पूजयेच्छिवाम्।**
**पूर्ववच्च जपेद् विद्यां सर्वं पूर्ववदेव हि॥**

बलिदानं पूर्ववत् परिकल्पयेत्।

**बलिमन्त्रस्तु**—एह्येहि जगन्मातर्जगतां जननि गृह्ण गृह्ण मम बलिं सिद्धिं देहि देहि शत्रुक्षयं कुरु कुरु हूं हूं ह्लीं ह्लीं फट् फट् ओं कालिकायै नमः फट् स्वाहा। यद्वा गुह्यकाल्या अयं बलिमन्त्रः—एह्येहि गुह्यकालि मम बलिं गृह्ण गृह्ण मम शत्रून् नाशय नाशय खादय खादय स्फुर स्फुर छिन्दि छिन्दि सिद्धिं देहि हूं फट् स्वाहा।

तथायं वा आसनमन्त्रः—ओं सदाशिवमहाप्रेताय गुह्यकाल्यासनाय नमः ।

गुह्यकालीयन्त्रं महाकालसंहितायाम्

सबिन्दुत्र्यारपञ्चारविभिन्ननवकोणयुक् ।
वृत्तयोरन्तरेऽष्टारयुतं तदनु भाविनि ।।

वस्वर्कमुपचच्छदनाम्भोजवृत्तान्वितं ततः ।
अष्टाशनिसमायुक्तमन्तर्बहिरथापि च ।।

अष्टशलाष्टमुण्डाढ्यं वह्निज्वालायुतेन हि ।
श्मशानेनावृतं शेषं शोणितोदेन वेष्टितम् ।।

यन्त्रराजमिदं देवि पूजनाय प्रकल्पितम् ।
भरतश्च्यवनश्चापि हारीतश्च जबालकः ।।

दक्षश्चैते जनाः पञ्च पूजयन्त्यमुनाम्बिकाम् ।
बिन्दुः पञ्चारषट्कोणत्रिकोणनवकोणगः ।।

अष्टारवृत्तसहितषोडशच्छदपद्मयुक् ।
पुनर्वृत्तान्वितः शेषे पूर्ववत् सकलं प्रिये ।।
पूज्योऽयं रामयक्षेशनाहुषाणां वरानने ।

अथ कामकलायन्त्रं महाकालसंहितायाम्—

यन्त्रमस्याः प्रवक्ष्यामि तत्र धेहि मनः प्रिये ।
भूपुरे वसुपत्राढ्ये पद्ममष्टदलान्वितम् ।।

केशराणि प्रकल्प्यानि तदन्तश्चापि कर्णिकाम् ।
कर्णिकान्तस्त्रिकोणस्य त्रितयं पृथगेष हि ।।

बहिस्त्रिकोणकोणेषु लिखेद् बीजत्रयं शुभम् ।
मायाबीजं तु वामे स्यात् क्रोधबीजं तु दक्षिणे ॥

अधः पाशं विनिर्दिश्य कन्दर्पार्णं तु मध्यतः ।
तदन्तःस्थायिनी देवी तत्र सर्वं प्रतिष्ठितम् ॥

एतद् यन्त्रं महादेवि सर्वकामफलप्रदम् ।
एतस्य सर्वयन्त्राणि कलां नार्हन्ति षोडशीम् ॥

**श्मशानकालीयन्त्रं स्वतन्त्रतन्त्रे—**

पद्मं चाष्टदलं वृत्तं तद्बाह्येऽष्टकवर्गकम् ।
धरण्यां विलिखेदाद्यं चतुष्कं च चतुष्ककम् ॥
पर्वादि उत्तरान्तं च मध्ये देवीं प्रपूजयेत् ॥

**अथ मातृकायन्त्रम्** (शारदायाम्)—

व्योमेन्दौ रसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्केशरं
यन्त्रान्तर्गतपञ्चवर्गयशलार्णादित्रिवर्गं क्रमात् ।
आशास्वस्त्रिषु लान्तलाङ्गलियुजा क्षोणीपुरेणावृतं
पद्मं कल्पितमत्र पूजयत तां वर्णात्मिकां देवताम् ॥

व्योमो हकारः। इन्दुः सकारः। औ इति स्वरूपम्। रसनार्णो विसर्गः। तेन हंसः इति। आशासु दिक्षु। अस्त्रिषु कोणेषु। लान्तो वकारः। लांगली ठकारः।

**श्यामासपर्यायन्त्रम्** (कालीतन्त्रे)—

आदौ त्रिकोणं विन्यस्य त्रिकोणं च बहिर्न्यसेत् ।
ततो विलिखेन्मन्त्री त्रिकोणत्रयमुत्तमम् ॥

ततो वृत्तं समालिख्य लिखेदष्टदलं ततः ।
वृत्तं विलिख्य विधिवल्लिखेद् भूपुरमेककम् ॥

यन्त्रान्तरमुक्तम् (कुमारीकल्पे)—

आदौ त्रिकोणं विन्यस्य त्रिकोणं तद्‌बहिर्न्यसेत् ।
बहिस्त्रिकोणमालिख्य षट्‌कोणं च बहिर्न्यसेत् ॥
मध्ये बैन्दवं चक्रं बीजेनापि विभूषितम् ।
षट्‌कोणात्तु बहिः पद्मं भूपुरैकेण संयुतम् ॥
ज्ञात्वैवं मुक्तिमाप्नोति यन्त्रमेतन्न संशयः ॥

पद्ममष्टदलम् । भूपुरञ्च चतुर्द्वारयुक्तम् । तदुक्तं भैरवतन्त्रे—

शक्त्यग्निभ्याञ्च षट्‌कोणं तत्र शक्तित्रयं लिखेत् ।
पद्ममष्टदलं भूमिश्चतुर्द्वारसुसंयुतम् ॥

शक्तिरधोमुखत्रिकोणम् । वह्निरूर्ध्वमुखत्रिकोणम् । ताभ्यां षट्‌कोणे सिद्धे तन्मध्ये वाऽधोमुखत्रिकोणत्रयं लिखेत् ।

यन्त्रस्थलं यथा (भैरवतन्त्रे)—

स्वर्णादिरचिते पात्रे रक्तचन्दनचर्चिते ।
स्वयम्भुकुसुमावते वा रक्तावते चान्यथा शुचि ॥
रक्तचन्दनलेखन्याऽथवा स्वर्णशलाकया ॥

रक्तचन्दनचर्चिते पशुना स्वयम्भुकुसुमाद्यक्ते वीरेण यन्त्रं लेखनीयमित्यर्थः ।

कुमारीकल्पे—

एतत्तु विलिखेत् ताम्रे कुण्डगोलविलेपिते ।
स्वयम्भुकुसुमैर्युक्ते कुङ्कुमारुणसेविते ॥

स्वतन्त्रे—

स्वयम्भुकुसुमं कुण्डगोलोत्थं रोचनाऽगुरुः ।
काश्मीरमृगनाभी च मद्यं मलयजोद्भवम् ॥
एष गन्धः समाख्यातः सर्वदा चण्डिकाप्रियः ।
एतेन गन्धयोगेन योनिचक्रक्रमं लिखेत् ॥

मुण्डमालायाम्—

ताम्रपात्रे कपाले वा श्मशाने काष्ठनिर्मिते ।
शनिभौमदिने वापि वीरमृतकसम्भवे ॥
स्वर्णे रौप्ये तथा लौहे चक्रमच्यं विधानतः ॥

अत्रापि कपालादिविधेर्वीरपरत्वं वेदितव्यम् ।

**यन्त्रनिर्माणपात्रं** मुण्डमालातन्त्रे—

ताम्रपात्रे कपाले वा श्मशानकाष्ठनिर्मिते ।
शनिभौमदिने वापि शरीरे मृतसम्भवे ॥
स्वर्णरूप्येऽथवा लोहे चक्रं कार्यं विधानतः ॥

श्यामायन्त्रम्



## गुह्यकालीयन्त्रम्



श्मशानकाल्याः पूजायन्त्रम्

(आगमतत्त्वविलासे, चतुर्थपरिच्छेदे, १०६५ पृ०)

**पद्ममष्टदलं वृत्तं तद्बाह्ये धरणीतलम् ।**
**चतुर्द्वारसमायुक्तं मध्ये मूलं समालिखेत् ॥**
**दलेष्वष्टासु विलिखेत् कवर्गाद्यष्टवर्गकम् ।**
**धरण्यां विलिखेदाद्यं चतुष्कञ्च चतुष्कके ॥**
**पूर्वादि उत्तरान्तं च मध्ये देवीं प्रपूजयेत् ।**

धरणीतलं चतुरस्रम् । अष्टवर्गकम्—क च ट त प य श ह वर्गात्मकम् । हवर्गो हक्षौ । आद्यं बीजचतुष्कं धरण्यां चतुष्कके, चतुर्द्वारे इत्यर्थः ।

प्रातःकृत्यादि प्राणायामान्तं कर्म कृत्वा ऋष्यादिन्यासं कुर्यात् । शिरसि भृगु-ऋषये नमः । मुखे निवृच्छन्दसे नमः । हृदि श्मशानकालिकायै

देवतायै नमः। गुह्ये ऐं बीजाय नमः। पादयोः ह्रीं शक्तये नमः। सर्वाङ्गे क्रीं कीलकाय नमः। ततः कराङ्गन्यासौ। यथा—ऐं ह्रीं श्रीं क्रीं हृदयाय नमः। ऐं ह्रीं श्रीं शिरसे स्वाहा, इत्येवं शिखायां बाह्वोः नेत्रयोः कार्यम्। ओंकारसहितसकलबीजेषु प्रत्येकद्वारा करन्यासः कार्यः। यथोक्तम्—'चतुस्त्रिश्च चतुर्वर्णैः द्विरावृत्त्या षडङ्गकम्' इति।

अस्यायं भावः—चतुर्भिस्त्रिभिः पुनश्चतुर्भिर्बीजैर्द्विरावृत्त्या षडङ्गन्यासः कार्यं इति।

अथ ध्यानम्—

अञ्जनाद्रिनिभां देवीं श्मशानालयवासिनीम्।
रक्तनेत्रां मुक्तकेशीं शुष्कमांसातिभैरवाम्॥
पिङ्गाक्षीं वामहस्तेन मद्यपूर्णं समांसकम्।
सद्यः कृत्तशिरो दक्षहस्तेन दधतीं शिवाम्॥
स्मितवक्त्रां सदा चाममांसचर्वणतत्पराम्।
नानालङ्कारभूषाङ्गीं नग्नां मत्तां सदासवैः॥
एवं ध्यात्वा यजेद् देवीं श्मशाने तु विशेषतः।
गृहे वापि गृहस्थोऽपि मत्स्यमांसैः सुशोभनैः॥
नग्नो भूत्वा महापूजां कुर्याद् रात्रौ विशेषतः॥

पूजा तु प्रातःकृत्यादिध्यानमानसपूजार्घ्यं संस्थाप्य पुनर्ध्यात्वा यथोक्तोपचारैरभ्यर्च्य पत्रेषु ब्राह्म्याद्यास्तद्बहिरसिताङ्गदीन् सम्पूज्य धूपादिविसर्जनान्तं कर्म समापयेत्। पुरश्चरणमेकादशलक्षजपः।

## श्मशानकालिकायन्त्रम्




## श्मशानकालीमन्त्रः

कालीतन्त्रे—

वाणीं मायां ततो लक्ष्मीं कामबीजमतः परम् ।
कालिके संपुटत्वेन चतुष्कं बीजमालिखेत् ॥
एकादशार्णा देवेशि चतुर्वर्गप्रदायिनी ।

अथ मन्त्रस्वरूपम्—ऐं ह्रीं श्रीं क्लीं कालिके क्लीं श्रीं ह्रीं ऐं ।

श्मशानकालीयन्त्रम्—

पद्ममष्टदलं वृत्तं तद्बाह्ये धरणीतलम् ।
चतुर्द्वारसमायुक्तं मध्ये मूलं समालिखेत् ॥
दलेष्वष्टसु विलिखेत् कवर्गाद्यष्टवर्गकम् ।
धरण्यां विलिखेदाद्यं चतुष्कं च चतुष्कके ॥
पूर्वादि-उत्तरान्तं च मध्ये देवीं प्रपूजयेत् ॥

## श्मशानकालीयन्त्रम्




अनुष्ठानप्रकारोऽन्यो विधिश्च तन्त्रसाराद् ग्राह्यः ।

**संग्रहो मन्त्रयन्त्राणां कृतोऽयं यत्नतो मया ।**
**तेन माता महाकाली प्रीयतां वरदायिनी ॥ इति ।**

# कालीपूजाविधिः

(कालीपूजापद्धतौ)

बृहत्पूजासूत्रम्—

सूत्राकारेण देवेशि पूजाविधिरिहोच्यते ।
स्वस्ति वाच्य च सङ्कल्प्य घटं संस्थाप्य यत्नतः ॥

मन्त्रेणाचमनं कार्यं सामान्यार्घ्यं ततो न्यसेत् ।
तज्जलैर्द्वारमभ्युक्ष्य द्वारपूजां समाचरेत् ॥

त्रिविधं विघ्नमुत्सार्य भूतापसारणं ततः ।
आसनं च समभ्यर्च्य गुरुदेवं नमेत् सुधीः ॥

करशुद्धिं तालत्रयं दत्त्वा दिग्बन्धनं ततः ।
वह्निना वेष्टनं कार्यं भूतशुद्धिमथाचरेत् ॥

मातृकायाः षडङ्गं च कुर्यादन्तरमातृकाम् ।
मातृकाध्यानमुच्चार्य बाह्ये तु मातृकां न्यसेत् ॥

पीठन्यासं ततः कृत्वा प्राणायामं समाचरेत् ।
ऋष्यादिकं कराङ्गं च वर्णन्यासं समाचरेत् ।
षोढा न्यासं ततो देवि व्यापकं तदनन्तरम् ॥

एवं समाहितमनास्तत्त्वन्यासं समाचरेत् ।
बीजन्यासं ततो देवि व्यापकं विन्यसेत् सुधीः ॥

मूलेन सप्तधा ध्यानं मानसैः पूजनं चरेत् ।
विशेषार्घ्यं पीठपूजां पुनर्ध्यानं सनेत्रकम् ॥

मुद्रादिदर्शनं कार्यमावाहनं तु षडङ्गकम् ।
धेन्वादिकं ततः प्राणप्रतिष्ठा मूलपूजनम् ॥

आज्ञाप्रार्थनमङ्गानि काल्यादींश्च प्रपूजयेत् ।
ब्राह्म्याादीन्यसिताङ्गादीन् महाकालं प्रपूजयेत् ॥

खड्गादीन् गुरुपङ्क्तिञ्च पुनर्देवीं प्रपूजयेत् ।
बलिदानं ततो होमं प्राणायामं ततो जपम् ॥

जपं समर्पयेद् धीमान् प्राणायामं पुनश्चरेत् ।
अर्घ्यं दत्त्वा महेशानि चात्मानं च समर्पयेत् ॥

स्तुतिञ्च कवचं स्मृत्वा चाष्टाङ्गं प्रणमेत् सुधीः ।
शिवोऽहमिति संचिन्त्य संहारेण विसर्जयेत् ॥

ऐशान्यां मण्डलं कृत्वा चान्तालूच्छिष्टपूर्विका ।
अर्घ्यं सन्धार्य शिरसि चन्दनं च ललाटके ।
नैवेद्यं किञ्चित् स्वीकृत्य विहरेच्च निजेच्छया ॥

॥ अथ संक्षेपपूजासूत्रम् ॥

संक्षेपपूजामथवा कुर्यान्मन्त्री समाहितः ।
आदावृष्यादि विन्यस्य करशुद्धिस्ततः परम् ॥

अङ्गुलीव्यापकन्यासौ हृदादिन्यास एव च ।
तालत्रयञ्च दिग्बन्धः प्राणायामस्ततः परम् ॥

ध्यानं मानसयागं च अर्घ्यस्थापनमेव च ।
पीठपूजां पुनर्ध्यानं ततस्त्वावाहनं चरेत् ॥

जीवन्यासं ततः कृत्वा पूजयेत् परदेवताम् ।
अङ्गपूजां काल्यादीर्ब्राह्म्याद्यादीरष्टभैरवान् ॥

महाकालं पूजयित्वा गुरुपङ्क्तिं यजेत् ततः ।
खड्गादीन् पूजयित्वा तु पुनर्देवीं प्रपूजयेत् ॥

प्राणायामं ततः कृत्वा प्रजपेत् साधकाग्रणीः ।
देव्या हस्ते जपफलसमर्पणमथाचरेत् ॥

प्राणायामं पुनः कृत्वा चाष्टाङ्गं प्रणमेत् सुधीः ।
स्तुतिञ्च कवचं स्मृत्वा विशेषार्घ्यं प्रदापयेत् ॥

आत्मसमर्पणं कृत्वा संहारेण विसर्जयेत् ।
ऐशान्यां मण्डलं कृत्वा चान्तालूच्छिष्टपूर्विका ॥
नैवेद्यं किञ्चित् स्वीकृत्य विहरेच्च निजेच्छया ॥

इति सूत्रम् ।

अथ प्रयोगः—तत्रादौ मूलमन्त्रं संस्मरन् देवीगृहद्वारि गत्वा 'वज्रोदके हूँ फट् स्वाहा' इत्यनेन जलमानीय तेन आसनं सम्प्रोक्ष्य उदङ्मुखस्तत्रोपविश्य 'ओं ह्रीं विशुद्धसर्वपापानि शमयाशेषविकल्पमपनय ओं हूं फट् स्वाहा' इत्यनेन हस्तौ पादौ च प्रक्षाल्य पापापनोदनार्थं कृताञ्जलिः पठेत्—'ओं देवि त्वं प्राकृतं चित्तं पापाक्रान्तमभून्मम । तन्निःसारय चित्तान्मे पापं हूँ फट् च ते नमः ॥ ओं सूर्यः सोमो यमः कालो महाभूतानि पञ्च वै । एते शुभाशुभस्येह कर्मणो नव साक्षिणः' ॥ ततो मूलमन्त्रं संस्मृत्य 'ओ ह्रीं स्वाहा' इत्यनेन त्रिराचम्य स्वस्तिवाचनं कुर्यात् । यथा—ह्रीं हूं स्वस्ति नः कात्यायनी अपर्णश्रवा स्वस्ति नः काली ह्रौं मेधा अमृतमयी हूं स्वस्ति नः प्रत्यङ्गिरा देवता दधातु, ह्रीं श्रीं हूं फट् स्वाहा । ततः

सङ्कल्पं[1] कुर्यात् । यथा—विष्णुरोम् तत्सद् अद्य अमुके मासि, अमुकराशि[2]-स्थिते भास्करे, अमुके पक्षे, अमुकतिथौ, अमुकगोत्रः, अमुकशर्मा, अमुककामः श्रीमद्दक्षिणकालीप्रीतिकामो वा गणेशादिदेवतापूजनपूर्वकं श्रीमद्दक्षिणकालीपूजनमहं करिष्ये, इति सङ्कल्प्य सूक्तं पठेत् । यथा—ओं ऐन्द्राद्या नो विवेशी पुष्टां मा कृणोति सतां सिञ्चध्वं प्राहितामभरोतिः स्वर्गमादधत् कृत्स्नादेव ऊहते ॥

ततः स्वयमसमर्थश्चेत्, अत्र ब्राह्मणं वृणुयात् ।

**अथ वरणम्**—पद्धत्यनुसारेण कर्त्तव्यम् ।

**अथ घटस्थापनम्**—तत्रायं क्रमः—नातिह्रस्वं नातिदीर्घं निर्व्रणं सुदृढं कलशमानीय 'क्रीं' इति सम्प्रोक्ष्य 'ऐं' इति शोधयेत् । 'ह्रीं' इति मण्डले कलशं संस्थाप्य 'ह्रीं' इति जलैः पूरयेत् । ततः —

**ओं गङ्गाद्याः सरितः सर्वाः सरांसि जलदा नदाः ।**
**ह्रदाः प्रस्रवणाः पुण्याः स्वर्गपातालभूगताः ॥**
**सर्वतीर्थानि पुण्यानि घटे कुर्वन्तु सन्निधिम् ।**

इति घटे तीर्थन्यासं विधाय 'श्रीं' इति पल्लवं[3] दत्त्वा 'हूं' इति फलं संस्थाप्य 'स्त्रीं' इति स्थिरीकृत्य 'रं' इति सिन्दूरं 'यं' इति पुष्पं मूलमन्त्रेण दूर्वाञ्च दत्वा 'ओं' इति अभ्युक्षणं कृत्वा 'हूं फट् स्वाहा' इति कुशैस्ताडयेत् । ततो मन्त्राचमनं कुर्यात् ।

---

१. सङ्कल्पे फलप्रमाणम्—

हरीतकीफलं श्रेष्ठं संकल्पे विधिपूर्वकम् ।
तदभावे च रम्भा वा न गुवाकं कदाचन ॥

२. दीपान्वितामावास्यापूजनसम्बन्धे तु राश्युल्लेखो न कर्तव्यः, तस्य गौणचान्द्रतया जन्मतिथिवन्निर्देशादिति केचित् ।

३. पल्लवमाह (तन्त्रसारे)—

पनसाम्रं तथाश्वत्थं वटं वकुलमेव च ।
पञ्चपल्लवमित्युक्तं मुनिभिस्तन्त्रवादिभिः ॥

**अथ मन्त्राचमनम्**[1]—'क्रीं' इति मन्त्रेण जलं त्रिः पीत्वा—'ओं काल्यै नमः', 'ओं कपालिन्यै नमः' इति द्विरोष्ठमार्जनं 'ओं कुल्लायै नमः' इति करौ प्रक्षालयेत्। 'ओं कुरुकुल्लायै नमः' इति मुखम्, 'ओं विरोधिन्यै नमः' इति दक्षनासाम्, 'ओं विप्रचित्तायै नमः' इति वामनासाम्,'ओं उग्रायै नमः' इति दक्षिणनेत्रम्, 'ओं उग्रप्रभायै नमः' इति वामनेत्रम्, 'ओं दीप्तायै नमः' इति दक्षिणकर्णम्,'ओं नीलायै नमः' इति वामकर्णम्,'ओं घनायै नमः' इति नाभिम्, 'ओं वलाकायै नमः' इति हृदयम्, 'ओं मात्रायै नमः' इति शिरः, 'ओं मुद्रायै नमः', 'ओं मितायै नमः' इति बाहुमूलद्वयं स्पृशेत्। ततः 'ओं मणिधरि वज्रिणि महाप्रतिसरे रक्ष रक्ष हूँ फट् स्वाहे'ति ग्रन्थि शिखां च बध्नीयात्।

**अथ सामान्यार्घ्यस्थापनम्**[2]—हस्तक्षालनार्थं पात्रं पृष्ठदेशे स्थापयित्वा भूमौ त्रिकोण[3]वृत्तभूविश्वं विलिख्य तत्र 'ओं आधारशक्तये नमः' इति गन्धपुष्पाभ्यां सम्पूज्य 'फट्' इति प्रोक्षणीपात्रं प्रक्षाल्य तदुपरि स्थापयित्वा 'नमः' इति जलेनापूर्य अङ्कुशमुद्रया 'ओं गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन् संनिधिं कुरु'॥ इति सूर्यमण्ड-

---

१. मन्त्राचमनप्रमाणम् (तन्त्रसारे)—

कात्यादिभिस्त्रिभिः पीत्वा काल्यादिभिरुपस्पृशेत्॥

२. सामान्यार्घ्यं यथा (तन्त्रसारे)—

त्रिकोणवृत्तभूबिम्बमण्डलं रचयेत् सुधीः।
आधारशक्ति सम्पूज्य तन्त्रधारां विनिःक्षिपेत्॥
अस्त्रेण पात्रं संशोध्य हृन्मन्त्रेण प्रपूरयेत्।
निःक्षिपेत् तीर्थमावाह्य गन्धादीन् प्रणवेन च॥
दर्शयेद् धेनुमुद्रां वै सामान्यार्घ्यमिदं स्मृतम्।
पात्रं तोयैः प्रपूर्याथ प्रणवं दशधा जपेत्॥

३. त्रिकोणप्रकारमाह (रुद्रयामले)—

यत्र यत्र महाविद्या शक्तिविद्या उपासिता।
तत्र तत्र त्रिकोणं च अधोमुखमुदीरितम्॥

लात् तीर्थमावाह्य 'ओं' इति गन्धपुष्पदूर्वाक्षतादीनि तत्र विनिःक्षिप्य 'हूं' इत्यवगुण्ठ्य 'वं' इति धेनुमुद्रया अमृतीकृत्य योनिमुद्रां प्रदर्श्य मत्स्य-मुद्रया आच्छाद्य 'क्रीं' इति मूलमन्त्रं दशधा जपेदिति। ततो गणेशादिपञ्च-देवता लक्ष्म्यादींश्च पूजयेत्। ततः 'फट्' इति द्वारमभ्युक्ष्य द्वारदेवता[1] आवाह्य पूजयेत्।

**अथ द्वारपूजा**—यथा ऊर्ध्वोदुम्बरे—गां गणेशाय नमः। वामे—क्षां क्षेत्रपालाय नमः। दक्षे—वां वटुकाय नमः। अधः—यां योगिनीभ्यो नमः। एवं क्रमेण गां गङ्गायै नमः, यां यमुनायै नमः, श्रीं लक्ष्म्यै नमः, ऐं सरस्वत्यै नमः, इति द्वारचतुष्टयं सम्पूज्य नैर्ऋत्यां ओं ब्रह्मणे नमः, ओं वास्तुपुरुषाय नमः, इति पूजयेत्। ततो विघ्नानुत्सारयेत्।

**अथ विघ्नापसारणम्**—तत्रादौ मूलेन दिव्यदृष्ट्या[2] दिव्यान् विघ्नान् उत्सार्य 'अस्त्राय फट्' इत्यनेनान्तरिक्षगान् विघ्नानुत्सारयेत्[3]। ततो वाम-पादपार्ष्णिघातत्रयेण भौमान् विघ्नानुत्सारयेत्। ततो नाराचमुद्रया 'फट्' इति मन्त्रेण श्वेतसर्षपादीन् गृहीत्वा—

---

१. द्वारदेवता यथा (स्वतन्त्रतन्त्रे)—

गणेशं क्षेत्रपालं च योगिनीं वटुकं तथा।
गङ्गां च यमुनां चैव लक्ष्मीं वाणीं ततो यजेत्॥
नैर्ऋत्यां दिशि वास्त्वीशं ब्रह्माणं च समर्चयन्।
सामान्यार्घ्यस्य तोयेन प्रोक्षयेद् रागमन्दिरम्॥

२. दिव्यदृष्टिर्यथा (विश्वसारे)—

अनिमेषचक्षुषा दृष्टिर्दिव्यदृष्टिः प्रकीर्तिता।
अस्त्राय फडिति मन्त्रेण वारयेच्चान्तरिक्षगान्॥
वामपार्ष्णिघातत्रयं दत्वा भौमान्निवारयेत्॥

३. विघ्नोत्सारण यथा संमोहनतन्त्रे—

गृहं प्रविश्य कुर्याच्च पूजाद्रव्यनिरीक्षणम्।
अनन्तरं देशिकेन्द्रो दिव्यदृष्ट्यावलोकयेत्॥
दिव्यानुत्सारयेद्विघ्नान् अस्त्राद्भिश्चान्तरिक्षगान्।
पार्ष्णिघातैस्त्रिभिर्भौमान् इति विघ्नान्निवारयेत्॥

**ओं अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥**

इति पठित्वा विकिरेत्[1] । 'ओं सर्वविघ्नानुत्सारय हूं फट् स्वाहा' इत्यनेन जलेन भूमिं संशोध्य भूमौ हस्तं दत्त्वा 'ओं पवित्रवज्रभूमे हूं हूं फट् स्वाहा' इत्यनेन भूमिम् अभिमन्त्रयेत् । ततस्तस्यां भूमौ त्रिकोणं विलिख्य 'ओं आधारशक्त्यादिभ्यो नमः' इति सम्पूज्य तत्र विहितासनं संस्थाप्य 'ओं आः सुरेखे वज्ररेखे हूं फट् स्वाहा' इत्यनेन तत्र त्रिकोणं विलिख्य 'ओं ह्रीं आधारशक्तिकमलासनाय नमः' इत्यासनं सम्पूज्य आसनं धृत्वा पठेत् ।

**अथ आसनशुद्धिः**—अस्य आसनोपवेशनमन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसनारोपणे विनियोगः । इति पठित्वोपविश्य कृताञ्जलिः —

**ओं पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।**
**त्वं च धारय मां नित्यं पवित्रं कुरु चासनम् ॥**

इति पठेत् । ततः स्वदक्षिणे गन्धपुष्पाक्षतदीपान् दक्षे वामे पुरतो नैवेद्यादीन् वामे चार्घ्यम् अन्यत् सर्वं पूजोपकरणं दक्षे संस्थाप्य पृष्ठे हस्तक्षालनार्थं पात्रमेकं संस्थापयेत् । ततो दक्षे प्रोक्षितप्रोक्षणीपात्रं संस्थाप्य शुद्धोदकेनापूर्य तदुपरि मूलमन्त्रं पठित्वा तेनोदकेन मूलमन्त्रेण सर्वोपकरणानि संप्रोक्ष्य धेनुमुद्रां प्रदर्श्य पुष्पं शोधयेत् । यथा—'ओं शताभिषेक हूं फट् स्वाहा' इत्यनेन पुष्पे देव्या अधिष्ठानं कारयित्वा 'ओं पुष्पके तु राजार्हते शताय सम्यक् सम्बन्धाय हूं हेति' पुष्पं संपृश्य, 'ओं पुष्पे पुष्पे महापुष्पे सुपुष्पे पुष्पसम्भवे । पुष्पचयावकीर्णे हूं फट् स्वाहा'इत्यनेन पुष्पं परिशोध्य

---

१. विकिरा यथा (तन्त्रसारे)—

लाजचन्दनसिद्धार्थभस्मदूर्वाकुशाक्षताः ।
विकिरा इति सन्दिष्टाः सर्वविघ्नौघनाशकाः ॥

देव्या आवाहनान्तं यावत् सर्वोपकरणानि आच्छादयेत्। ततः 'ओं वज्रोदके हूं फट् स्वाहा' इत्यनेन आत्मरक्षां कृत्वा वामे 'ओं गुरुभ्यो नमः', 'ओं परमगुरुभ्यो नमः', 'ओं परापरगुरुभ्यो नमः', 'ओं परमेष्ठिगुरुभ्यो नमः', दक्षिणे 'ओं गणेशाय नमः', मध्ये 'क्रीं श्रीमद्दक्षिणकालिकायै नमः' इति प्रणम्य 'ऐं अस्त्राय फट्' इति सगन्धरक्तपुष्पं गृहीत्वा 'क्लीं' इति हस्ताभ्यां निर्मथ्य 'ऐं' इति आघ्राय 'ह्सौः' इति मन्त्रेण ऐशान्यां पुष्पं त्यजेत्। ततस्तर्जनीमध्यमाभ्यां 'ओं अस्त्राय फट्' इति मन्त्रेण ऊर्ध्वोर्ध्व-तालत्रयं दत्त्वा अङ्गुष्ठतर्जनीयोगेन छोटिकाभिर्दशदिग्बन्धनं कृत्वा 'रं' इति जलधारया चतुर्दिक्षु वह्निप्राकारं विचिन्त्य मूलमन्त्रेण स्वदेहं सम्मार्ज्य हृदि हस्तं दत्त्वा 'ओं दुर्गे दुर्गे रक्षिणि स्वाहा', 'ओं आं हूं फट् स्वाहा' इति आत्मरक्षां विधाय प्राणायामं कृत्वा भूतशुद्धिं कुर्यात्।

**अथ भूतशुद्धिः**[1]—'रं' इति जलधारया वह्निप्राकारं विचिन्त्य स्वाङ्के उत्तानौ करौ कृत्वा 'हंसः' इति मन्त्रेण हृदयस्थं जीवात्मानं दीपकलिका-कारं मूलाधारस्थितकुलकुण्डलिन्या सह सुषुम्णावर्त्मना मूलाधारस्वा-धिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यषट्चक्राणि भित्त्वा शिरोऽवस्थिताधो-मुखसहस्रमुखकमलकर्णिकान्तर्गतपरमात्मनि संयोज्य, अत्रैव पृथिव्यप्तेजो-वाय्वाकाशगन्धरसरूपस्पर्शशब्दनासिकाजिह्वाचक्षुस्त्वक्श्रोत्रवाक्पाणिपाद-पायूपस्थप्रकृतिमनोबुद्ध्यहङ्काररूपचतुर्विंशतितत्त्वानि विलीनानि विभाव्य, दक्षिणनासापुटं धृत्वा 'यं' इति वायुबीजं धूम्रवर्णं वामनासापुटं विचिन्त्य,

---

१. गुप्तसाधनतन्त्रे—

भूतशुद्धौ महादेव यदि देहं तु नाशयेत्।
कुत्र स्थाने भवेत् सृष्टिरमृतं कुत्र सम्भवेत्॥

महादेव उवाच—

वामकुक्षौ स्थितः पापपूरुषः कज्जलप्रभः।
अस्य संहरणार्थाय महती प्रकटीकृता॥
लिङ्गदेहो महेशानि अस्य देहो न संशयः।
पापदेहं भवेद् भग्नं स्वदेहं नैव नाशयेत्॥

तस्य षोडशवारजपेन दक्षिणनासया वायुं रेचयेत्। ततो दक्षिणनासापुटे 'रं' इति वह्निबीजं रक्तवर्णं ध्यात्वा, तस्य षोडशवारजपेन वायुना देहमापूर्य, नासापुटौ धृत्वा, तस्य चतुःषष्टिवारजपेन कुम्भकं कृत्वा, पापपुरुषेण सह देहं दग्ध्वा, तस्य द्वात्रिंशद्वारजपेन वामनासया भस्मना सह वायुं रेचयेत्। ततः 'ठं' इति चन्द्रबीजं शुक्लवर्णं वामनासापुटे ध्यात्वा, तस्य षोडशवारजपेन ललाटे चन्द्रं नीत्वा, नासापुटौ धृत्वा 'वं' इति वरुणबीजस्य चतुःषष्टिवारजपेन कुम्भकं कृत्वा, तस्मात् ललाटस्थ-चन्द्राद् गलितसुधया मातृकावर्णात्मिकया समस्तदेहं विरचय्य 'लं' इति पृथिवीबीजस्य द्वात्रिंशद्वारजपेन देहं सुदृढं विचिन्त्य, दक्षिणनासया वायुं रेचयेत्। ततः 'सोऽहम्' इति मन्त्रेण जीवात्मानं स्वहृदयमानीय कुलकुण्डलिनीं पृथिव्यादीनि च यथास्थाने स्थापयेत्। ततः स्वहृदये हस्तं दत्त्वा, प्राणप्रतिष्ठां कुर्यात्। यथा—आं ह्रीं क्रों ह्रीं हंसः श्रीमद्दक्षिण-कालिकायाः प्राणा इह प्राणाः, एवं आं ह्रीमित्यादि सर्वेन्द्रियाणि, आं ह्रीमित्यादि-वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। ततो मातृकान्यासं कुर्यात्।

---

**संक्षेपभूतशुद्धिः—**

धर्मकन्दसमुद्भूतं ज्ञाननालं सुशोभनम्।
ऐश्वर्याष्टदलोपेतं परं वैराग्यकर्णिकम्॥
स्वीयहृत्कमलं ध्यायेत् प्रणवेन प्रकाशितम्।
कृततत्कर्णिकासंस्थं प्रदीपकलिकाभिभम्॥
जीवात्मानं हृदि ध्यात्वा मूले संचिन्त्य कुण्डलीम्।
सुषुम्णावर्त्मनात्मानं परमात्मनि योजयेत्॥

**प्रकारान्तरम्—**

ओं मूलशृङ्गाच्छिरः-सुषुम्णापथेन जीवं शिवं परमशिवपदे योजयामि स्वाहा। यं लिङ्गशरीरं शोषय शोषय स्वाहा। रं संकोचशरीरं दह दह स्वाहा। परमशिव सुषुम्णापथेन भूशृंगाटमुल्लसोल्लस ज्वल ज्वल प्रज्वल प्रज्वल हंसः सोऽहं स्वाहा।

अथ मातृकामन्त्रस्य ब्रह्म-ऋषिर्गायत्री छन्दः, मातृका-सरस्वती देवता, हलो बीजानि, स्वराः शक्तयः, अव्यक्तं कीलकम्, मातृकान्यासे विनियोगः।

**ऋष्यादिन्यासः—**(शिरसि) ओं ब्रह्मणे ऋषये नमः, इति मध्यमानामिकाभ्याम्। (मुखे) ओं गायत्री-छन्दसे नमः, तर्जनीमध्यमाभ्याम्। (हृदि) मातृकासरस्वत्यै देवतायै नमः, अङ्गुष्ठानामिकाभ्याम्। (गुह्ये) ओं हल्भ्यो बीजेभ्यो नमः, (पादयोः) ओं स्वरेभ्यः शक्तिभ्यो नमः। (सर्वाङ्गे) ओं अव्यक्ताय कीलकाय नम इति न्यसेत्।

**अथ करन्यासः**–अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः, इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः, उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः, एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः, ओं पं फं बं भं मं औं कनिष्ठाभ्यां नमः, अं यं रं लं वं शं षं सं हं लं क्षं अः करतलकरपृष्ठाभ्यां नमः।

**अथाङ्गन्यासः—**अं कं खं गं घं ङं आं हृदयाय नमः, इं चं छं जं झं ञं ईं शिरसे स्वाहा, उं टं ठं डं ढं णं ऊं शिखायै वषट्, एं तं थं दं धं नं ऐं कवचाय हुम्, ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट्, अं यं रं लं वं शं षं सं हं लं क्षं अः अस्त्राय फट्।

**अन्तर्मातृकान्यासः—**

**ओं आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे**
**द्वैपत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के।**
**वासान्ते बालमध्येऽफकठसहिते कण्ठदेशे स्वराणां**
**हक्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि॥**

इति ध्यात्वा (अंगुष्ठानामिकाभ्याम्) अं नमः आं नमः, इत्यादिक्रमेण इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः इति क्रमेण षोडशवर्णान् सबिन्दून् नमोऽन्तान् षोडशदलकमले कण्ठमूले न्यसेत्, एवं कं खं गं घं ङं चं छं जं झं ञं टं ठं इति द्वादशवर्णान् सबिन्दून् नमोऽन्तान् द्वादशदलकमले हृदये न्यसेत्, डं ढं णं तं थं दं धं नं पं फं इति दशवर्णान् सबिन्दून् नमोऽन्तान् नाभौ न्यसेत्, बं भं मं यं रं लं इति षड्वर्णान् सबिन्दून् नमोऽन्तान् षड्दलकमले लिङ्गमूले न्यसेत्, हं क्षं इति द्वौ वर्णौ सबिन्दू नमोऽन्तौ द्विदलकमले नेत्रमध्ये न्यसेत्।

बाह्यमातृकान्यासः—

**ओं पञ्चाशल्लिपिभिर्विभक्तमुखदोः पन्मध्यवक्षःस्थलां**
**भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ।**
**मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-**
**र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ।।**

इति ध्यात्वा न्यसेत् । यथा—(ललाटे) अं नमः, (मुखे) आं नमः, (दक्षिणनेत्रे) इं नमः, (वामनेत्रे) ईं नमः, (दक्षिणकर्णे) उं नमः, (वामकर्णे) ऊं नमः, (दक्षिणनासापुटे) ऋं नमः, (वामनासापुटे) ॠं नमः, (दक्षिणगण्डे) ऌं नमः, (वामगण्डे) ॡं नमः, (ओष्ठे) एं नमः, (अधरे) ऐं नमः, (ऊर्ध्वदन्तपङ्क्तौ) ओं नमः, (अधोदन्तपङ्क्तौ) औं नमः, (मस्तके) अं नमः, (मुखे) अः नमः, (दक्षिणबाहुमूले) कं नमः, (कूर्परे) खं नमः (मणिबन्धे) गं नमः, (अंगुलिमूले) घं नमः, (अंगुल्यग्रे) ङं नमः, (वामबाहुमूले) चं नमः, (कूर्परे) छं नमः, (मणिबन्धे) जं नमः, (अंगुलिमूले) झं नमः, (अंगुल्यग्रे) ञं नमः,(दक्षिणोरुमूले) टं नमः,(जानुनि) ठं नमः, (गुल्फे) डं नमः, (अंगुलिमूले) ढं नमः, (अंगुल्यग्रे) णं नमः,(वामोरुमूले) तं नमः, (जानुनि) थं नमः, (गुल्फे) दं नमः, (अंगुलिमूले) धं नमः, (अंगुल्यग्रे) नं नमः, (दक्षिणपार्श्वे) पं नमः, (वामपार्श्वे) फं नमः, (पृष्ठे) बं नमः, (नाभौ) भं नमः, (उदरे) मं नमः, (हृदि) यं नमः, (दक्षिणस्कन्धे) रं नमः, (ककुदि) लं नमः, (वामस्कन्धे) वं नमः, (हृदयादिदक्षिणकराग्रे) शं नमः, (हृदयादिवामकराग्रे) षं नमः, (हृदयादिदक्षिपादाग्रे) सं नमः, (हृदयादिवामपादाग्रे) हं नमः, (हृदयादिजठरे) लं नमः, (हृदयादिमुखे) क्षं नमः ।

मातृकान्यासस्थाननिरूपणं तन्त्रसारे—

**ललाटे मुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः ।**
**ओष्ठदन्तोत्तमाङ्गास्यदोःपत्सन्ध्यग्रकेषु च ।।**
**पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेंऽसके ।**
**ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे तथा ।।**
**जठराननयोर्न्यसेन्मातृकार्णान् यथाक्रमम् ।।**

कालीपूजापद्धतिग्रन्थे संहारमातृकान्यासोऽप्युल्लिखितः ।

अस्या ध्यानम्—

ओं अक्षसूत्रं हरिणपोतमुदग्रचक्रं
विद्यां करैरविरतं दधतीं त्रिनेत्राम् ।
अर्धेन्दुमौलिमरुणामरविन्दरामां
वर्णेश्वरीं प्रणमत स्तनभारनम्राम् ॥

**न्यासस्तु**—क्षकारादिरकारान्तः । यथा—क्षं नमः हृदयादिमुखे, इत्येव क्रमेण वर्णान् न्यस्य, अनन्तरं गुरुपरमगुरुपरापरगुरुपरमेष्टिगुरुगणेशादीन् आदित्यादिग्रहान्, इन्द्रादिलोकपालान् संपूज्य आत्मनो हृदये पीठन्यासं कुर्यात् । अस्य विस्तरेण विधिस्तु तत्रैव द्रष्टव्यः । एवं तस्मिन् ग्रन्थे सृष्टि-न्यास-स्थितिन्यास-श्रीकण्ठन्यासा अपि टिप्पण्यां प्रदर्शिताः सन्ति, ते सर्वे तत एवावबोधनीयाः । अत्र तस्मिन् विषये दिङ्मात्रं प्रदर्श्यते ।

सृष्टिन्यासे ध्यानन्तु—

ओं शरत्पूर्णेन्दुशुभ्रां सकलगुणमयीं लोलरक्तत्रिनेत्रां
शुक्लालङ्कारभूषां शशिमुकुटजटाटोपयुक्तां प्रसन्नाम् ।
पुंस्त्रीस्रक्पूर्णकुम्भान् वरमपि दधतीं शुक्लपट्टाम्बराढ्यां
वाग्देवीं पद्मवक्त्रां कुचभरनमितां चिन्तयेत् साधकेन्द्रैः ॥

एवं ध्यात्वा ललाटादिस्थानेषु अकारादिक्षकारान्तं क्रमेण न्यसेत् । यथा ललाटे अं नमः, मुखवृत्ते आं नमः, एवं क्रमेण मकारपर्यन्तं विन्यस्य, हृदये यं त्वगात्मने नमः, दक्षिणांशे रं असृगात्मने नमः, ककुदि लं मांसात्मने नमः, वामांशे वं मोदात्मने नमः, हृदयादिदक्षहस्ते शं अस्थ्यात्मने नमः, हृदयादिवामहस्ते षं मज्जात्मने नमः, हृदयादिदक्षपदे सं शुक्रात्मने नमः, हृदयादिवामपदे हं प्राणात्मने नमः, हृदाद्युदरे लं जीवात्मने नमः, हृदादिमुखे क्षं परमात्मने नम इति विशेषोऽस्ति ।

स्थितिन्यासे ध्यानं यथा—

सिन्दूरकान्तिममिताभरणां त्रिनेत्रां
विद्याक्षसूत्रमृगपोतवरान् दधानाम् ।
पार्श्वे स्थितां भगवतीमपि काञ्चनाभां
ध्यायेत् कराग्रधृतपुस्तकवर्णमालाम् ॥

एवं ध्यात्वा न्यसेत् ।

श्रीकण्ठन्यासे ध्यानं यथा—

अञ्जनाद्रिनिभां देवीं करालवदनां शिवाम् ।
मुण्डमालावलीकीर्णां मुक्तकेशीं स्मिताननाम् ॥
महाकालहृदम्भोजस्थितां पीनपयोधराम् ।
विपरीतरतासक्तां घोरदंष्ट्रां शिवैः सह ॥
नागयज्ञोपवीताढ्यां चन्द्रार्धकृतशेखराम् ।
सर्वालङ्कारसंयुक्तां मुण्डमालाविभूषिताम् ॥
मृतहस्तसहस्रैस्तु बद्धकाञ्चीं दिगंशुकाम् ।
शिवकोटिसहस्रैस्तु योगिनीभिर्विराजिताम् ॥
रक्तपूर्णमुखाम्भोजां मद्यपानप्रयत्निकाम् ।
वह्न्यर्कशशिनेत्राञ्च रक्तविस्फुरिताननाम् ॥
विगतासुकिशोराभ्यां कृतकर्णावतंसिनीम् ।
कण्ठावसक्तमुण्डालिगलद्रुधिरचर्चिताम् ॥
श्मशानवह्निमध्यस्थां ब्रह्मकेशववन्दिताम् ।
सद्यःकृत्तशिरःखड्गवराभीतिकराम्बुजाम् ॥ इति ।

पद्धत्यनुसारेण न्यासो विधेयः, यथा—ललाटे अं श्रीकण्ठपूर्णोदरीभ्यां नमः, मुखवृत्ते आं अनन्तविजयाभ्यां नमः, इत्यादि । विस्तरस्तु पद्धतौ द्रष्टव्यः ।

# श्मशानकालीपूजाक्रमः

प्रातःकृत्यादिप्राणायामान्तं कर्म कृत्वा ऋष्यादिन्यासं कुर्यात्। यथा—शिरसि भृगु-ऋषये नमः, मुखे निवृच्छन्दसे नमः, हृदि श्मशानकालिकायै नमः, गुह्ये ऐं बीजाय नमः, पादयोः ह्रीं शक्तये नमः, सर्वाङ्गे क्लीं कीलकाय नमः। अथ कराङ्गन्यासौ कुर्यात्। यथा—ऐं अङ्गुष्ठाभ्यां नमः, ह्रीं तर्जनीभ्यां स्वाहा, श्रीं मध्यमाभ्यां वषट्, क्रौं अनामिकाभ्यां हुम्, कालिके कनिष्ठाभ्यां वौषट्, क्लीं श्रीं ह्रीं ऐं करतलकरपृष्ठाभ्यां फट्। एवं हृदयादिषु। ततो ध्यायेत्। यथा—

**ओं अञ्जनाद्रिनिभां देवीं श्मशानालयवासिनीम्।**
**रक्तनेत्रां मुक्तकेशीं शुष्कमांसातिभैरवाम्॥**
**पिङ्गाक्षीं वामहस्तेन मद्यपूर्णं समांसकम्।**
**सद्यःकृत्तशिरो दक्षहस्तेन दधतीं शिवाम्॥**
**स्मितवक्त्रां सदा चाममांसचर्वणतत्पराम्।**
**नानालङ्कारभूषाङ्गीं नग्नां मत्तां सदासवैः॥**

एवं ध्यात्वा मानसैः सम्पूज्य अर्घ्यस्थापनं कुर्यात्। पुनः कराङ्गन्यासौ कृत्वा पुनर्ध्यात्वा देवीं पूजयित्वा पत्रेषु ब्राह्म्यादिकं तद्बहिर्भैरवांश्च पूजयेत्। अन्यत् सर्वं दक्षिणकालिकावत्। अस्या मन्त्रस्तु—

**वाणीं मायां ततो लक्ष्मीं कामबीजमतः परम्।**
**कालिके सम्पुटत्वेन चतुष्कं बीजमालिखेत्॥**
**एकादशार्णा देवेशि चतुर्वर्गप्रदायिनी।**
**ऐं ह्रीं श्रीं क्लीं कालिके क्लीं श्रीं ह्रीं ऐं॥**

(ऐं ह्रीं श्रीं क्लीं, इत्यपि वा)

प्रकारान्तरन्तु—

**कामबीजं समालिख्य कालिकायै समालिखेत्।**
**नमोऽन्तेन च देवेशि सप्तार्णो मनुरुत्तमः॥**

एतेन क्लीं कालिकायै नमः।

# भद्रकाल्या महाकाल्याश्च प्रकरणम्

मन्त्रस्तु—

भद्रकालीं तथा ङेऽन्तां बीजमध्ये नियोजयेत् ।
स्वाहान्ता कथिता विद्या विंशत्यर्णात्मिका परा ॥

चतुर्वर्गप्रदा विद्या भद्रकाली शुभावहा ।
बीजानि चोच्चरेत् पूर्वं महाकालिपदं ततः ॥

तदन्ते सप्तबीजानि स्वाहान्ता सर्वसिद्धिदा ।
विंशत्यर्णा महाविद्या महाकाल्याः प्रकीर्तिता ॥

क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ भद्रकाल्यै क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा । क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ महाकालि! क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा ।

ध्यानन्तु—

क्षुत्क्षामा कोटराक्षी मसिमलिनमुखी मुक्तकेशी रुदन्ती
नाहं तृप्ता वदन्ती जगदखिलमिदं ग्रासमेकं करोमि ।
हस्ताभ्यां धारयन्ती ज्वलदनलशिखासन्निभं पाशयुग्मं
दन्तैर्जाम्बूनदाभैः परिहरतु भयं पातु मां भद्रकाली ॥

अन्यत् सर्वं दक्षिणावत् । विशेषस्तु–भूपुरे ऐन्द्रादीन् वज्रादींश्च, भूगृहस्य पूर्वादिद्वारचतुष्टये विष्णुं शिवं सूर्यं गणपतिं पूजयेत् ।

**मतान्तरे निशाकाली-पूजा—**

आचम्य स्वस्तिवाचनादिकं सर्वं दक्षिणकालिकापूजावत् कृत्वा ऋष्यादिन्यासं कुर्यात् । यथा—(शिरसि) दक्षिणामूर्तये नमः, (मुखे) ओं पंक्तिच्छन्दसे नमः, (हृदि) ओं परात्परतरा-शक्तिकालिकायै नमः ।

ततस्तत्त्वन्यासः—'ओं आत्मतत्त्वाय स्वाहा' इति पादादिनाभिपर्यन्तं 'ओं ह्रीं विद्यातत्त्वाय स्वाहा' नाभ्यादिहृदिपर्यन्तं 'ओं हसौः शिवतत्त्वाय स्वाहा' इति हृदयादिशिरःपर्यन्तम्। ततो 'ह्रीं अङ्गुष्ठाभ्यां नमः' इत्यादिना कराङ्गन्यासादिकं विधाय मूलेन सप्तधा व्यापकन्यासं कृत्वा ध्यायेत्। यथा—

ओं शवोपरि समासीनां मुण्डमालाविभूषिताम्।
ध्यायेदष्टभुजैर्युक्तां करपद्मे विराजिताम्॥

शक्तिशूलधनुर्बाणखड्गखेटवराभयाम्।
पञ्चवक्त्रां महारौद्रीं प्रतिवक्त्रत्रिलोचनाम्॥

प्रलयानलधूम्राभां कृष्णवर्णविधायिनीम्।
जटाजूटसमायुक्तकेशजालविराजिताम्॥

कृष्णवस्त्रधरां कट्यां नागपाशेन वेष्टिताम्।
हास्ययुक्तां निशाकालीं सदाघूर्णितलोचनाम्॥

इति ध्यात्वा 'ओं ह्रीं ह्रीं श्रीं निशाकाल्यै नमः' इति मन्त्रेण पूजयेत्। अन्यत् सर्वं दक्षिणकालिकावत्।

**मतान्तरे रक्षाकालीपूजा—**

आचम्य स्वस्तिवाचनादिकं सर्वं दक्षिणकालिकापूजावत् कृत्वा ऋष्यादिन्यासो यथा—शिरसि दक्षिणामूर्तये ऋषये नमः। मुखे पङ्क्तिच्छन्दसे नमः। हृदि कालिकायै देवतायै नमः। ध्यानं यथा—

चतुर्भुजा कृष्णवर्णा मुण्डमालाविभूषिता।
खड्गञ्च दक्षिणे पाणौ बिभ्रतीन्दीवरद्वयम्॥

कर्तृकां खर्परञ्चैव क्रमाद् वामेन बिभ्रती।
द्यां लिखन्तीं जटामेकां बिभ्रती शिरसा द्वयीम्॥

मुण्डमालाधरा शीर्षे ग्रीवायामथ चापरे ।
वक्षसा नागहारं च बिभ्रती रक्तलोचना ॥

कृष्णवस्त्रधरा कट्यां व्याघ्राजिनसमन्विता ।
वामपादं शवहृदि संस्थाप्य दक्षिणं पदम् ॥

विन्यस्य सिंहपृष्ठे तु लेलिहाना शिवं स्वयम् ।
साट्टहासा महाघोररावयुक्ता सुभीषणा ॥

मन्त्रस्तु—क्रीं क्रौं स्वाहा। अन्यत् सर्वं दक्षिणकालिकावत्। (अयं निशाकाली–रक्षाकालीपूजाविधिर्न सर्वसम्मतः।)

आदौ षट्कोणमारच्य त्रिकोणत्रितयं ततः ।
पद्ममष्टदलं बाह्ये भूपुरं तत्र पूजयेत् ॥

कालीपूजनयन्त्रम्



**कालीपूजनविधिः —**

प्रथमं 'सद्यश्छिन्नशिरः कृपाणमभयम्' इत्यादिश्लोकानुरूपभावनया दक्षिणां कालीं ध्यात्वा मानसीं पूजां चरेत्। ततः स्ववामभागे भूमौ हूंगर्भितं त्रिकोणमुल्लिख्य साधारमर्घ्यपात्रं संस्थाप्य तत्र जलगन्धादि प्रक्षिप्य गङ्गादितीर्थानि आवाहयेत्। पुनः 'यं वह्निमण्डलाय दशकलात्मने नमः' इति मन्त्रेणाधारस्य, 'अं सूर्यमण्डलाय द्वादशकलात्मने नमः' इति मन्त्रेण शङ्खस्य, 'उं सोममण्डलाय षोडशकलात्मने नमः' इति मन्त्रेण जलस्य पूजां विदध्यात्। तत्पश्चाद् 'ओं क्रां हृदयाय नमः' इति मन्त्रेणार्घ्यपात्रस्य वह्निकोणे, 'ओं क्रीं शिरसे स्वाहा', इत्यनेन ईशाने, 'ओं क्रूं शिखायै वषट्' इति नैऋत्ये, 'ओं क्रैं कवचाय हुम्' अनेन वायव्ये, 'ओं क्रौं नेत्रत्रयाय वौषट्' इति मध्ये, 'ओं क्रः अस्त्राय फट्' इति मन्त्रेण चतुर्दिक्षु पूजनं विधाय मत्स्यमुद्रया अर्घ्यपात्रमावृत्य दशवारं मूलमन्त्रं प्रजप्य धेनुमुद्रया अमृतीकरणं कृत्वा योनिमुद्रां प्रदर्श्य अर्घ्यपात्रात् किञ्चिज्जलं प्रोक्षणीपात्रे निधाय तज्जलेन आत्मानं पूजनसामग्रीं च सम्प्रोक्ष्यानन्तरं पीठपूजा कर्तव्या।

**पीठपूजाविधिः —**

प्रथमं कर्णिकासु ओं आधारशक्तये नमः, ओं प्रकृत्यै नमः, ओं कमठाय नमः, ओं शेषाय नमः, ओं पृथिव्यै नमः, ओं सुधाम्बुधये नमः, ओं मणिद्वीपाय नमः, ओं चिन्तामणिगृहाय नमः, ओं श्मशानाय नमः, ओं पारिजाताय नमः, इति मन्त्रैः पूजनं विधाय पश्चात् कर्णिकामूले 'ओं रत्नवेदिकायै नमः' इति मन्त्रेण, ततः कर्णिकोपरि 'ओं मणिपीठाय नमः' इति मन्त्रेण पूजनं कर्तव्यम्।

पुनश्च चतुर्दिक्षु ओं मुनिभ्यो नमः, ओं देवेभ्यो नमः, ओं शिवाभ्यां नमः, ओं शिवमुण्डेभ्यो नमः, ओं धर्माय नमः, ओं ज्ञानाय नमः, ओं वैराग्याय नमः, ओं ऐश्वर्याय नमः, ओं अधर्माय नमः, ओं अज्ञानाय नमः, ओं अवैराग्याय नमः, ओं अनैश्वर्याय नमः, ह्रीं ज्ञानात्मने नमः, एभिर्मन्त्रैः पूजनं विधाय अनन्तरं केशरेषु पूर्वादिक्रमेण ओं जयायै नमः, ओं विजयायै नमः, ओं अजितायै नमः, ओं अपराजितायै नमः, ओं नित्यायै नमः, ओं विलासिन्यै नमः, ओं घोरायै नमः, ओं मङ्गलायै नमः, केशरोपरि ह्रीं कालिकायोगपीठात्मने नमः इति मन्त्रपूर्वकं पूजनमाचरणीयम्।

अथ पीठस्योत्तरे ओं गुरुभ्यो नमः, ओं परमगुरुभ्यो नमः, ओं परापरगुरुभ्यो नमः, ओं परमेष्ठिगुरुभ्यो नमः, मन्त्रैर्गुरुपूजनं कृत्वा पुनः कालिकां ध्यात्वा पुष्पाञ्जलिना मूलमन्त्रेण कल्पितमूर्तौ 'ओं देवेशि भक्तिसुलभे परिवारसमन्विते। यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ।। मूलं दक्षिणे कालिके देवि इहावह इहावह इह तिष्ठ इह तिष्ठ सन्निरुद्धस्व इह सन्निहिता भव' इति मन्त्रेणावाहनं कुर्यात् ।

पुनः 'हूं' इत्यनेनावगुण्ठनं कृत्वाऽङ्गन्यासमन्त्रैः सकलीकरणं धेनुमुद्रया अमृतीकरणं परमीकरणमुद्रया परमीकरणं कृत्वा क्रमशः भूतिनी-आकर्षणी-योनिमुद्राः प्रदर्श्य प्राणान् प्रतिष्ठाप्य मूलमन्त्रेण सम्पूज्य तत्पश्चाद् घण्टापूजनपूर्वकं घण्टावादनं विधाय धूपदीपनैवेद्यपुष्पाञ्जलिप्रदक्षिणा-नमस्कारान् समर्पयेत् ।

**तत आवरणपूजा**—श्रीदक्षिणे कालिके देवि आवरणं ते पूजयामि, इति भगवत्याज्ञामादाय षडङ्गपूजा कर्तव्या। तद्यथा आग्नेये ओं क्रां हृदयाय नमः, ईशाने ओं क्रीं शिरसे स्वाहा, नैऋत्ये ओं क्रूं शिखायै वषट्, वायव्ये ओं क्रैं कवचाय हुम्, अग्रे ओं क्रौं नेत्रत्रयाय वौषट्, चतुर्दिक्षु ओं क्रः अस्त्राय फट्, इति संपूज्य मूलेन पुष्पाञ्जलिं दद्यात् । इति प्रथमावरणम् । पुनः षट्कोणेषु क्रमशः—ओं काल्यै नमः, ओं कपालिन्यै नमः, ओं कुल्लायै नमः, ओं कुरुकुल्लायै नमः, ओं विरोधिन्यै नमः, ओं विप्रचित्तायै नमः, इति मन्त्रैः सम्पूज्य मूलेन पुष्पाञ्जलिं दद्यात् ।

अनन्तरं त्रिषु त्रिकोणेषु प्रथमत्रिकोणकोणेषु ओं उग्रायै नमः, ओं उग्रप्रभायै नमः, ओं दीप्तायै नमः, इति मन्त्रेण संपूज्य द्वितीयत्रिकोण-कोणेषु ओं नीलायै नमः, ओं घनायै नमः, ओं वलाकायै नमः, इति मन्त्रेण सम्पूज्य तृतीयत्रिकोणकोणेषु ओं मात्रायै नमः, ओं मुद्रायै नमः, ओं मित्रायै नमः, इति मन्त्रेण संपूज्य पुष्पाञ्जलिं दद्यात् । ततो भूपुरे क्रमशोऽष्टदिक्षु ओं महाभैरव्यै नमः, ओं सिंहभैरव्यै नमः, ओं धूम्रभैरव्यै नमः, ओं भीमभैरव्यै नमः, ओं उन्मत्तभैरव्यै नमः, ओं वशीकरणभैरव्यै नमः, ओं मोहनभैरव्यै नमः, ओं महाभैरव्यै नमः, इति मन्त्रैर्भैरवीः समर्च्य मूलेन पुष्पाञ्जलिं दद्यात् ।

ततो भूपुराद् बहिर्दशदिग्पालान् पूजयेत्—ओं इन्द्राय नमः, ओं अग्नये नमः, ओं यमाय नमः, ओं निर्ऋतये नमः, ओं वरुणाय नमः, ओं वायवे नमः, ओं सोमाय नमः, ओं ईशानाय नमः, ओं ब्रह्मणे नमः, ओं अनन्ताय नमः, इति मन्त्रैः। अनन्तरं दिग्पालायुधान् पूजयेत्—ओं वज्राय नमः, ओं शक्तये नमः, ओं दण्डाय नमः, ओं खड्गाय नमः, ओं पाशाय नमः, ओं अंकुशाय नमः, ओं गदायै नमः, ओं त्रिशूलाय नमः, ओं चक्राय नमः, ओं पद्माय नमः, इति मन्त्रैः। ततो मूलमन्त्रेण वारत्रयं पुष्पाञ्जलिं प्रदाय महाकालभैरवस्य ध्यानं कुर्यात्।

**महाकालं यजेद् देव्या दक्षिणे धूम्रवर्णकम्।**
**बिभ्रतं दण्डखट्वाङ्गौ दंष्ट्राभीममुखं शिशुम्॥**
**व्याघ्रचर्मावृतकटिं तुन्दिलं रक्तवाससम्।**
**त्रिनेत्रमूर्ध्वकेशं च मुण्डमालाविभूषितम्॥**
**जटाभारलसच्चन्द्रखण्डमुग्रं ज्वलन्निभम्॥**

इति ध्यात्वा 'हूं क्ष्रौं यां रां लां वां आं क्रीं महाकालभैरव सर्वविघ्नान् नाशय नाशय ह्रीं श्रीं फट् स्वाहा' इति मन्त्रेण पाद्याद्युपचारैर्विधिवत् संपूज्य त्रिवारं तर्पणं कुर्यात्।

पुनर्मूलमन्त्रेण गन्धाद्युपचारैर्देवीं समभ्यर्च्य ध्यात्वा च तद्ध्यान-पूर्वकं जपं विदध्यात्। काम्ये तु जिह्वायां कर्पूरं लेपयेत्। जपं समाप्य गुह्यातिगुह्यगोप्त्री त्वमित्यादिश्लोकेन देव्या वामहस्ते जपं समर्प्य प्रदक्षिणां साष्टाङ्गप्रणिपातं च विधाय जगन्मङ्गलकवचं पठेत्। पुनर्देव्यङ्गेषु आधारदेवता विलीनीकृत्य संहारमुद्रया 'दक्षिणे कालिके क्षमस्व' इत्युक्त्वा देवीं विसर्जयेत्। पुनर्देव्यास्तेजः पुष्पेण साकं हृदि विनिवेश्य निवेदितनैवे-द्यस्याल्पमंशं 'ओं उच्छिष्टचाण्डालिन्यै नमः' इति मन्त्रेण ईशाने विन्यस्य निर्माल्यं शिरसि निधाय विसर्जयेत्।

मन्त्रपुरश्चरणं लक्षद्वयम्। दिने हविष्यान्नं प्राश्य लक्षमेकं जपं कुर्यात्, रात्रौ ताम्बूलचर्वणं कृत्वा शय्यायां लक्षमेकं जपेत्। जपसमाप्तौ दशांश-

हवनं तर्पणं मार्जनं ब्राह्मणभोजनं गुरुदक्षिणादानं कृत्वा आशीर्वादं गृह्णीयात् ।

कालीपीठे यजेद्देवीं पञ्चकोणाढ्यचकर्णिके ।
अष्टपत्रे षोडशाब्जे वृत्ते भूपुरसंयुते ।।

कालीपजनयन्त्रम्



# महाकाली-मन्त्रपूजा

(कंकालमालिनीतन्त्रे चतुर्थपटले)

**श्रीपार्वत्युवाच—**

कथयस्व विरूपाक्ष महाकालीमनुं प्रभो ॥ १ ॥

**श्रीभैरव उवाच—**

अथातः संप्रवक्ष्यामि महाकालीमनुं प्रिये ।
यस्य विज्ञानमात्रेण सर्वसिद्धीश्वरो भवेत् ॥ २ ॥
श्रिया विष्णुं समः कान्त्या षड्मुखेन समः सुखी ।
शौचेन शुचिना तुल्यो बलेन पवनोपमः ॥३॥
वागीश्वरसमो वाचि धनेन धनपः स्वयम् ।
सार्वज्ञ्ये शम्भुना तुल्यो दाने दधीचिना समः ॥ ४ ॥
आज्ञया देवराजोऽसौ ब्राह्मण्येन प्रजापतिः ।
भृगोरिव तपस्वी च चन्द्रवत् प्रीतिवर्धनः ॥ ५ ॥
तेजसाग्निसमा भक्त्या नारदः शिवकृष्णयोः ।
रूपेण मदनः साक्षात् प्रतापे भानुसन्निभः ॥ ६ ॥
शास्त्रचर्चास्वाङ्गिरसा जामदग्न्यः प्रतिज्ञया ।
सिद्धानां भैरवः साक्षाद् गङ्गेव मलनाशकः ॥ ७ ॥
अथवा बहुनोक्तेन किं वा तेन वरानने ।
न तस्य क्षुरितं किञ्चिद् महाकालीं स्मरेद् धिया ॥८॥

शब्दब्रह्ममयीं स्वाहां भोगमोक्षैकदायिकाम् ।
भोगेन मोक्षमाप्नोति श्रुत्वा गुरुमुखात् परम् ॥ ९ ॥

तां विद्यां शृणु वक्ष्यामि यया भैरवतां व्रजेत् ।
[1]क्रोधीशं [2]क्षतजारूढं [3]धूम्रभैरवलक्षितम् ॥ १० ॥

नादबिन्दुसमायुक्तं मन्त्रं स्वर्गेऽपि दुर्लभम् ।
एकाक्षरीसमा नास्ति विद्या त्रिभुवने प्रिये ॥ ११ ॥

महाकाली गुह्यविद्या कलिकाले च सिद्धिदा ।
अथान्यत् सम्प्रवक्ष्यामि दक्षिणां कालिकां पराम् ॥१२॥

[4]वाग्भवं बीजमुच्चार्य कामराजं[5] ततः परम् ।
मायाबीजं[6] ततो भद्रे त्र्यक्षरं मन्त्रमीरितम् ॥ १३ ॥

कामराजं ततः [7]कूर्चं मायाबीजमतः परम् ।
अपरं त्र्यक्षरं प्रोक्तं पूर्वोक्तं फलदं प्रिये ॥ १४ ॥

[8]हालाहलं समुच्चार्य मायाद्वयमतः परम् ।
एतत्तु त्र्यक्षरं देवि सर्वकामफलप्रदम् ॥ १५ ॥

एतेषां चैव मन्त्राणां फलमन्यत् शृणु प्रिये ।
न कालनियमो नास्ति नारिमित्रादिदूषणम् ॥ १६ ॥

कायक्लेशकरं नैव प्रयासो नास्य साधने ।
दिवा वा यदि वा रात्रौ जपः सर्वत्र शोभनः ॥ १७ ॥

भोगमोक्षविरोधोऽत्र साधने नास्ति निश्चितम् ।
भोगेन लभते मोक्षं नरोऽपि विद्ययाऽनया ॥ १८ ॥

---

१. क, २. र, ३. ई, ४. ऐं, ५. क्लीं, ६. ह्रीं, ७. हूं, ८ ओम् ।

अस्या जपात्तथा ध्यानात् लभेन्मुक्ति चतुर्विधाम् ।
नानया सदृशी विद्या नानया सदृशो जपः ॥ १९ ॥

नानया सदृशं ध्यानं नानया सदृशं तपः ।
सत्यं सत्यं पुनः सत्यं सत्यपूर्वं वदाम्यहम् ॥ २० ॥

अनया सदृशी विद्या नास्ति सिद्धिः सुगोचरे ।
अथ संक्षेपतो वक्ष्ये पूजाविधिमनुत्तमम् ॥ २१ ॥

विस्तारे कस्य वा शक्तिः को वा जानाति तत्त्वतः ।
पूजा च त्रिविधा प्रोक्ता नित्यनैमित्तिकाम्यतः ॥ २२ ॥

अत्रैव नित्यपूजां च वक्ष्ये तां च निशामय ।
भैरवोऽस्य ऋषिः प्रोक्त उष्णिक् छन्द उदाहृतम् ॥ २३ ॥

देवता मुनिभिः प्रोक्ता महाकाली पुरातनी ।
विनियोगश्च विद्यायाः पुरुषार्थचतुष्टये ॥ २४ ॥

पञ्चशुद्धिविहीनेन यत् कृतं न च तत्कृतम् ।
पञ्चशुद्धिं विना पूजा अभिचाराय कल्पते ॥ २५ ॥

आत्मशुद्धिः स्थानशुद्धिर्द्रव्यस्य शोधनं तथा ।
मनुशुद्धिर्देवशुद्धेः पञ्चशुद्धिरितीरिता ॥ २६ ॥

भूप्रदेशे समे शुद्धि पुष्पप्रकरसंकुले ।
आसनं कल्पयेदादौ कोमलं कम्बलन्तु वा ॥ २७ ॥

वामे गुरून् पुनर्नत्वा दक्षिणे गणपतिं विभुम् ।
भूतशुद्धिं तथा कुर्यात् पूजायोग्यो यथा भवेत् ॥ २८ ॥

प्राणायामादि विधिवद् ऋष्यादिन्यासमाचरेत् ।
आदौ शुद्धिभैरवाय ऋषये नम इत्यथ ।। २९ ।।

उष्णिक्छन्दसे नमसा मुखे छन्दो विनिर्दिशेत् ।
मम प्रिये महाकालीदेवतायै नमो हृदि ।। ३० ।।

ह्रीं बीजाय नमः पूर्वं हूं शक्तये नमोऽप्यथ ।
कवित्वार्थे विनियोग इति विन्यस्य वाञ्छया ।। ३१ ।।

केवलां मातृकां न्यस्य बीजन्यासं समाचरेत् ।
ओं क्रां अङ्गुष्ठयोर्न्यस्य ओं क्रीं तर्जन्योर्नमः ।। ३२ ।।

ओं क्रं मध्यमयोर्न्यस्य ओं क्रैं अनामिकाद्वयोः ।
ओं क्रौं कनिष्ठायुगले ओं क्रः करतले तथा ।। ३३ ।।

पुनर्हृदयादिष्वेतैर्जातियुक्तैः षडङ्गकम् ।
षड्दीर्घभावं स्वबीजैः प्रणवाद्यैस्तु विन्यसेत् ।। ३४ ।।

वर्णन्यासं तथा कुर्यात् येन देवीमयो भवेत् ।
अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ च हृदये न्यसेत् ।। ३५ ।।

ए ऐ ओ औ अं अः क ख ग घ वै दक्षिणे भुजे ।
ङ च छ ज झ ञ ट ठ ड ढ वै वामके भुजे ।। ३६ ।।

ण त थ द ध न प फ ब भ दक्षजङ्घके न्यसेत् ।
म य र ल व श ष स ह ल क्ष वामजङ्घके ।। ३७ ।।

पञ्चधा सप्तधा वापि मूलविद्यां समुच्चरन् ।
शिर आदि च पादान्तं न्यसेद् व्यापकमुत्तमम् ।। ३८ ।।

नित्यन्यास इति प्रोक्तः सर्व एव सुखावहः ।
अथ ध्यानं प्रवक्ष्यामि भैरवाकारदायकम् ॥ ३९ ॥

हिमालयगिरेर्मध्ये नगरे भैरवस्य च ।
दिव्यस्थाने महापीठे मणिमण्डपराजिते ॥ ४० ॥

नारदाद्यैर्मुनिभिः श्रेष्ठैः संसेवितपदाम्बुजाम् ।
तत्र ध्यायेन्महाकालीमाद्यां भैरववन्दिताम् ॥ ४१ ॥

नीलेन्दीवरवर्णिनीं युग्मापीनतुङ्गस्तनीं
सुप्तश्रीहरिपीठराजितवतीं भीमां त्रिनेत्रां शिवाम् ।

मुद्राखड्गकरां वराभययुतां चित्राम्बरोद्दीपिनीं
वन्दे चञ्चलचन्द्रकान्तमणिभिर्मालां दधानां पराम् ॥ ४२ ॥

ध्यानान्तरं प्रवक्ष्यामि शृणु गौरि गिरेः सुते ।
तत्र पीठे महादेवीं कालीं दानवसेविताम् ॥ ४३ ॥

मेघाङ्गीं विगताम्बरां शवशिवारूढां त्रिनेत्रां पराम् ।
कर्णालम्बितबाणयुग्मलसितां मुण्डावलीमण्डिताम् ॥ ४४ ॥

वामाधोर्ध्वकराम्बुजे नरशिरः खड्गञ्च सव्येतरे ।
दानाभीतिविमुक्तकेशनिचया ध्येया सदा कालिका ॥ ४५ ॥

अपरञ्च प्रवक्ष्यामि ध्यानं परमदुर्लभम् ।
कालीं करालवदनां घोरदंष्ट्रां त्रिलोचनाम् ॥ ४६ ॥

स्मरेच्छवकरश्रेणिकृतकाञ्चीं दिगम्बराम् ।
वीरासनसमासीनां महाकालोपरि स्थिताम् ॥ ४७ ॥

श्रुतिमूलसमाकीर्णसृक्कणीं घोरनादिनीम् ।
मुण्डमालागलद्रक्तचर्चितां पीवरस्तनीम् ॥ ४८ ॥

मदिरामोदितास्फालकम्पिताखिलमेदिनीम् ।
वामे खड्गं छिन्नमुण्डं धारिणीं दक्षिणे करे ॥ ४९ ॥

वराभययुतां घोरवदनां लोलजिह्विकाम् ।
शकुन्तपक्षसंयुक्तबाणकर्णविभूषिताम् ॥ ५० ॥

शिवाभिर्घोररावाभिः सेवितां प्रलयोदिताम् ।
चण्डहासचण्डनादचण्डाख्यानैश्च भैरवैः ॥ ५१ ॥

गृहीत्वा नरकङ्कालं जयशब्दपरायणैः ।
सेविताखिलसिद्धौघैर्मुनिभिः सेवितां पराम् ॥ ५२ ॥

एषामन्यतमं ध्यानं कृत्वा च साधकोत्तमः ।
मानसैरुपचारैश्च सोऽहमात्मानमर्चयेत् ॥ ५३ ॥

ततो देवीं समभ्यर्च्य अर्घ्यद्वयं निवेदयेत् ।
दशपञ्चारपद्मेषु पीठपूजां समाचरेत् ॥ ५४ ॥

तत्रावाह्य महादेवीं नियमेन समाहितः ।
ततो ध्यायेन्महादेवीं कालिकां कुलभूषणाम् ॥ ५५ ॥

महाकालं यजेद् यत्नात् पीठशक्तिं ततो यजेत् ।
कालीं कपालिनीं कुल्लां कुरुकुल्लां विरोधिनीम् ॥ ५६ ॥

विप्रचित्तां तथा चैव बहिः षट्कोणके पुनः ।
उग्रामुग्रप्रभां दीप्तां तत्र त्रिकोणके पुनः ॥ ५७ ॥

नीलां घनां वलाकां च तथा परत्रिकोणके ।
मात्रां मुद्रां नित्याञ्चैव तथैवान्तस्त्रिकोणके ॥ ५८ ॥

तर्जनीं वामहस्तेन धारयन्ती शुचिस्मिता ।
ब्राह्म्याद्यास्तथा बाह्ये यजेत् पूर्वदलक्रमात् ॥ ५९ ॥

ब्राह्मी नारायणी चैव तथैव च महेश्वरी ।
चामुण्डापि च कौमारी तथा चैवापराजिता ॥ ६० ॥

वाराही च तथा पूज्या नारसिंही तथैव च ।
सर्वासामपि दातव्या बलिः पूजा तथैव च ॥ ६१ ॥

अनुलेपनकं गन्धं धूपदीपौ च पानकम् ।
त्रिस्त्रिः पूजा च कर्तव्या सर्वासामपि साधकैः ॥ ६२ ॥

पुनर्गन्धादिभिः पूज्य जप्त्वा शेषं समर्पयेत् ।
समयं चार्चयेद् देव्या योगिनीयोगिभिः सह ॥ ६३ ॥

मधु मांसं तथा मत्स्यं यत् किञ्चित् कुलसाधनम् ।
शक्त्यै दत्त्वा ततः पश्चाद् गुरवे विनिवेदयेत् ॥ ६४ ॥

तदनुज्ञां मूर्ध्नि कृत्वा शेषं चात्मनि योजयेत् ।
मधु मांसं विना यस्तु कुलपूजां समाचरेत् ॥ ६५ ॥

जन्मान्तरे सहस्रस्य सुकृतिस्तस्य नश्यति ।
तस्मात् सर्वप्रयत्नेन मकारपञ्चकैर्यजेत् ॥ ६६ ॥

मधुना न विना मन्त्रं न मन्त्रेण विना मधु ।
परस्परविरोधेन कथं सिद्ध्यन्ति साधकाः ॥ ६७ ॥

कुण्डकुम्भकपालादिपदार्थानां निषेवणम् ।
सौरे तन्त्रे विरुद्धञ्च शैवे शाक्ते महाफलम् ॥ ६८ ॥

ब्रह्माण्डखण्डसम्भूतमशेषरत्नसम्भवम् ।
श्वेतं पीतं सुगन्धि च निर्मलं भूरितेजसम् ॥ ६९ ॥

अथवा कुम्भमध्येऽस्मिन् स्रवन्तं परमामृतम् ।
अन्तर्लयो बहिर्मध्ये त्रिकोणोदरवर्तिनि ॥ ७० ॥

तद्बाह्यं स्फाटिकोदारमणिचन्द्रञ्च मण्डलम् ।
तेनामृतेन तद्बाह्ये चिन्तयेत् परमामृतम् ॥ ७१ ॥

आरम्भस्तरुणः प्रौढस्तदन्ते तु न्यासः पुनः ।
एभिरुल्लासवान् योगी स्वयं शिवमयो यतः ॥ ७२ ॥

सर्वशेषे च देवेशि सामान्यार्घ्यं पदेऽर्पयेत् ।
विशेषार्घ्यं शिवे दत्त्वा देव्याः प्रियतमो भवेत् ॥ ७३ ॥

साङ्गक्रियापदे दत्त्वा सामान्यार्घ्यं शिरे भवेत् ।
इत्युक्त्वा स परामयीशक्तितोषणकारकः ॥ ७४ ॥

भोगेन लभते मोक्षं बहुना जल्पितेन किम् ।
नियमः पुरुषे ज्ञेयो न योषित्सु कदाचन ॥ ७५ ॥

यद्वा तद्वा येन केन सर्वदा सर्वतोऽपि च ।
योषितां ध्यानयोगेन शुद्धशेषं न संशयः ॥ ७६ ॥

बालां वा यौवनां मत्तां वृद्धां वा युवतीं तथा ।
कुत्सितां वा महादुष्टां नमस्कृत्य विसर्जयेत् ॥ ७७ ॥

तासां प्रहारो निन्दाञ्च कौटिल्यमप्रियं तथा ।
सर्वथा न च कर्तव्यमन्यथा सिद्धिरोधकृत् ॥ ७८ ॥

इति ते कथितं शेषमाचरेत् लक्षणं प्रिये ।
नित्यपूजाक्रमं भक्त्या ज्ञात्वा सिद्धिमाप्नुयात् ॥ ७९ ॥

॥ इति दक्षिणाम्नाये कंकालमालिनीतन्त्रे सार्धलक्षग्रन्थे महाकाली-मन्त्र-पूजाकथनं नाम चतुर्थः पटलः ॥

# कालीमन्त्रपूजाविधिः

(बृहन्नारदीये नारदपुराणे वा ८५ अध्याये)

सनत्कुमार उवाच—

वाग्देवतावतारोऽन्यः कालिकेति प्रकीर्तिता ।
तस्या मन्त्रं प्रवक्ष्यामि भुक्तिमुक्तिप्रदं नृणाम् ।। १ ।।

सृष्टिक्रियान्विता शान्तिर्बिन्द्वाढ्या च त्रिधा पुनः ।
अरुणाक्ष्या दीपिका च बिन्दुयुक्ता द्विधा ततः ।। २ ।।

मायाद्वयं ततः पश्चाद् दक्षिणे कालिके पदम् ।
पुनश्च सप्तबीजानि स्वाहान्तोऽयं मनूत्तमः ।। ३ ।।

भैरवोऽस्य ऋषिश्छन्द उष्णिक् काली तु देवता ।
बीजं माया दीर्घवर्म शक्तिरुक्ता मुनीश्वर ।। ४ ।।

षड्दीर्घाढ्यो बोजेन विद्याया अङ्गमीरितम् ।
मातृकार्णान् दश दश हृदये भुजयोः पदोः ।। ५ ।।

विन्यस्य व्यापकं कुर्यान्मूलमन्त्रेण साधकः ।
शिरः कृपाणमभयं वरं हस्तैश्च बिभ्रतीम् ।। ६ ।।

मुण्डस्रङ्मस्तकां मुक्तकेशां पितृवनस्थिताम् ।
सर्वालङ्कृतवर्णां च श्यामाङ्गीं कालिकां स्मरेत् ।। ७ ।।

एवं ध्यात्वा जपेल्लक्षं जुहुयादयुतं ततः ।
प्रसूनैः करवीरोत्थैः पूजायन्त्रमथोच्यते ।। ८ ।।

विलिख्य पूर्वं षट्कोणं त्रिकोणत्रितयं ततः ।
पद्ममष्टदलं बाह्ये भूपुरं तत्र पूजयेत् ॥ ९ ॥

जया च विजया चापि अजिता चापराजिता ।
नित्या विलासिनी वापि दोग्ध्र्यघोरा च मङ्गला ॥१०॥

पीठस्य शक्तयो मायात्मने हृत्पीठमन्त्रकः ।
शिवरूपशवस्थां च शिवाभिर्दिक्षु वेष्टिताम् ॥ ११ ॥

महाकालरतासक्तां ध्यात्वाङ्गान्यर्चयेत् पुरा ।
कालीं कपालिनीं कुल्लां कुरुकुल्लां विरोधिनीम् ॥ १२ ॥

विप्रचित्तां च षट्कोणे नवकोणे ततोऽर्चयेत् ।
उग्रामुग्रप्रभां दीप्तां नीलाधानां बलाकिकाम् ॥ १३ ॥

मात्रां मुद्रां तथा मित्रां पूज्याः पत्रेषु मातरः ।
पद्मस्यास्य सुयत्नेन ब्राह्मी नारायणीत्यपि ॥ १४ ॥

माहेश्वरी च चामुण्डा कौमारी चापराजिता ।
वाराही नारसिंही च पुनरेतास्तु भूपुरे ॥ १५ ॥

भैरवीं महदाद्यां तां सिंहाद्यां धूम्रपूर्विकाम् ।
भीमोन्मत्तादिकां चापि वशीकरणभैरवीम् ॥ १६ ॥

मोहनाद्यां समाराध्य शक्रादीन्यायुधान्यपि ।
एवमाराधिता काली सिद्धा भवति मन्त्रिणाम् ॥ १७ ॥

ततः प्रयोगान् कुर्वीत महाभैरवभाषितान् ।
आत्मनो वा परस्यार्थं क्षिप्रसिद्धिप्रदायकान् ॥ १८ ॥

स्त्रीणां प्रहारं निन्दां च कौटिल्यं वाप्रियं वचः ।
आत्मनो हितमन्विच्छन् कालीभक्तो विवर्जयेत् ॥ १९ ॥

सुदृशो मदनावासं पश्यन् यः प्रजपेन् मनुम् ।
अयुतं सोऽचिरादेव वाक्पतेः समतामियात् ॥ २० ॥

दिगम्बरो मुक्तकेशः श्मशानस्थोऽधियामिनि ।
जपेद् योऽयुतमेतस्य भवेयुः सर्वसिद्धयः ॥ २१ ॥

शवस्य हृदये स्थित्वा निर्वासाः प्रेतभूमिगः ।
अर्कपुष्पसहस्रेणाभ्यक्तेन स्वीयरेतसा ॥ २२ ॥

देवीं यः पूजयेद् भक्त्या जपन्नेकैकशो मनुम् ।
सोऽचिरेणैव कालेन धरणीप्रभुतां व्रजेत् ॥ २३ ॥

रजःकीर्णं भगं नार्या ध्यायन् यो ह्ययुतं जपेत् ।
स कवित्वेन रम्येण जनान् मोहयति ध्रुवम् ॥ २४ ॥

त्रिपञ्चारे महापीठे शिवस्य हृदि संस्थिताम् ।
महाकालेन देवेन मारयुद्धं प्रकुर्वतीम् ॥ २५ ॥

तां ध्यायन् स्मेरवदनां विदधत्सुरतं स्वयम् ।
जपेत् सहस्रमपि यः स शङ्करसमो भवेत् ॥ २६ ॥

अस्थिलोमत्वचायुक्तं मांसं मार्जारमेषयोः ।
उष्ट्रस्य महिषस्यापि बलिं यस्तु समर्पयेत् ॥ २७ ॥

भूताष्टम्योर्मध्यरात्रे वश्याः स्युस्तस्य जन्तवः ।
विद्यालक्ष्मीयशःपुत्रैः स चिरं सुखमेधते ॥ २८ ॥

यो हविष्याशनरतो दिवा देवीं स्मरन् जपेत् ।
नक्तं निधुवनासक्तो लक्षं स स्याद् धरापतिः ॥ २९ ॥

रक्ताम्भोजैर्हुनेन्मन्त्री धनैर्जयति वित्तपम् ।
विल्वपत्रैर्भवेद् राज्यं रक्तपुष्पैर्वशीकृतिः ॥ ३० ॥

असृजा महिषादीनां कालिकां यस्तु तर्पयेत् ।
तस्य स्युरचिरादेव करस्थाः सर्वसिद्धयः ॥ ३१ ॥

यो लक्षं प्रजपेन्मन्त्रं शवमारुह्य मन्त्रवित् ।
तस्य सिद्धो मनुः सद्यः सर्वेप्सितफलप्रदः ॥ ३२ ॥

तेनाश्वमेधप्रमुखैर्यागैरिष्टं सुजन्मना ।
दत्तं दानं तपस्तप्तं उपास्ते यस्तु कालिकाम् ॥ ३३ ॥

ब्रह्मा विष्णुः शिवा गौरी लक्ष्मीर्गणपती रविः ।
पूजिताः सकला देवा यः कालीं पूजयेत् सदा ॥ ३४ ॥

[ इतः परमस्मिन्नध्याये सरस्वत्या अपरोऽवतारो वर्णितः । ]

## मन्त्रयोगस्याङ्गानि

चित्तवृत्तिनिरोधार्थं साधनायां मन्त्रयोगस्य प्राथम्यं वर्तते, तस्य च षोडश अङ्गानि सन्ति—

**भवन्ति मन्त्रयोगस्य षोडशाङ्गानि निश्चितम् ।**
**तथा सुधांशोर्जायन्ते कलाः षोडश शोभनाः ॥**

**भक्तिः शुद्धिश्चासनं च पञ्चाङ्गस्यापि सेवनम् ।**
**आचारधारणे दिव्यदेशसेवनमित्यपि ॥**

**प्राणक्रिया तथा मुद्रा तर्पणं हवनं बलिः ॥**
**यागो जपस्तथा ध्यानं समाधिश्चेति षोडश ॥**

भक्तिः, शुद्धिः, आसनम्, पञ्चाङ्गसेवनम्, आचारः, धारणा, दिव्यदेशसेवनम्, प्राणक्रिया, मुद्रा, तर्पणम्, हवनम्, बलिः, यागः, जपः, ध्यानम्, समाधिश्च ।

**१ भक्तिः**—इष्टदेवे परमानुरक्तिः[1], सा च त्रिधा—वैधी, रागात्मिका, परा । शास्त्रनिर्देशानुसारं देवे (इष्टदेवे) भजनप्रवृत्तिर्वैधी । भक्तिश्चैषा नवधा प्रकीर्तिता शास्त्रे[2] । वैधभक्तिप्रभावाज्जायते भावस्वरूपा रागात्मिका भक्तिः । एषा द्विधा—कामरूपा सम्बन्धरूपा च । केचिद् रागात्मिकातो रागानुगा भक्तिर्जायते या कामानुगा सम्बन्धानुगेति द्विधेति कथयन्ति । कामानुगापि द्विधा—संभोगेच्छामयी तत्तद्भावेच्छामयीति च । इष्टदेवं प्रति पुष्टे जाते रागे परमप्रेमरूपा परा भक्तिर्जायते ।

**विधिना या विनिर्णीता निषेधेन तथा पुनः ।**
**साध्यमाना च या धीरैः सा वैधी भक्तिरुच्यते ॥**

**ययास्वाद्य रसान् भक्तेर्भावे मज्जति साधकः ।**
**रागात्मिका सा कथिता भक्तिर्योगविशारदैः ॥**
**परानन्दप्रदा भक्तिः पराभक्तिर्मता बुधैः ॥**

**२. शुद्धिः**—निर्मलत्वम् । सा च कायचित्तदिक्स्थानभेदेन चतुर्धा । तत्र कायशुद्धिः स्नानेन सम्पद्यते । स्नानञ्च सप्तधा—मान्त्रं भौमम् आग्नेयं वायव्यं दिव्यं वारुणं मानसं च । चित्तशुद्धिर्यमनियमादिभिः क्रियते । दिक्शुद्धिस्तु शास्त्रोक्तविधिना दिशाभिमुखता । यथा दिवा पूर्वाभिमुखत्वम्, नक्तम् उत्तराभिमुखत्वम् । काम्ये च निर्दिष्टदिङ्मुखत्वमनुष्ठेयम् । स्थानशुद्धिर्मार्जनलेपनादिना ।

**३. आसनम्**—चैलं (क्षौमं) कम्बलम् अजिनं कुशासनं वा । काम्ये यथाविहितं वा । एवं निष्कामे सकामे वा कर्मणि स्वस्तिकासनपद्मासनाद्यासनेषु शास्त्रविहितानुसारमनुष्ठेयम् ।

४. **पञ्चाङ्गसेवनम्**—गीता, स्तोत्रम्, सहस्रनाम, कवचम्, हृदयञ्च । क्वचन स्तोत्रम्, कवचम्, हृदयम्, पटलम्, शतनाम इति ।

५ **आचारः**—त्रिविधो वामाचारो दक्षिणाचारो दिव्याचारश्च । तत्राद्यः प्रवृत्तिमूलकः । द्वितीयो निवृत्तिमूलकः । तृतीयस्तु प्रवृत्तिमार्गतो निवृत्तिमार्गं गमयति । एष आचारस्तूभयाचाराविरुद्ध एव ।

६ **धारणा**—द्विविधा-बहिर्धारणा,अन्तर्धारणा च । बाह्यवस्तुभिः साकं मनसो योगे सति बहिर्धारणा । मनसोऽन्तर्योगे सति धारणया भक्ति-जप-सिद्धि-आचार-प्राणसंयम-साक्षात्कार-देवशक्तिविकास-इष्टदर्शनानां प्राप्तिर्भवति ।

**७. दिव्यदेशसेवनम्**—दिव्यदेशाः षोडश—अग्निः, जलम्, लिङ्गम्, स्थण्डिलम्, भित्तिः, रेखा, चित्रम्, मण्डलम्, विशिखम्, नित्ययन्त्रम्, पीठम्,

---

१. भक्तिसूत्रम् (नारद), भक्तिसूत्रम् (शाण्डिल्य) ।

२. श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥

भावयन्त्रम् मूर्तिः, विभूतिः,नाभिः,हृदयम्, मूर्धा। धारणाद्वारा दिव्यदेश एव इष्टदेवदर्शनं भवति।

८. **प्राणक्रिया**—प्राणायामः। ;पूरककुम्भकरेचकात्मकः। स च त्रिवारात्मकः सामान्यरूपेणास्ति।

९. **मुद्रा**—मुद्रास्तु बह्व्यः सन्ति। करन्यासादयोऽत्रैवान्तर्गताः सन्ति। प्रायो भिन्नभिन्नकार्यानुसारेण भिन्ना भिन्ना मुद्रा भवन्ति। ता यथाकार्यं यथासम्प्रदायं प्रयोक्तव्याः।

१०. **तर्पणम्**—एतेनाशु देवता प्रसीदति। सकामे कर्मणि विशेषविहित-द्रव्यैः कार्यं निष्कामे जलेन।

११. **हवनम्**—'नो सिद्ध्यत्यजपान्मन्त्रो नाहुतश्च फलप्रदः'। सर्वस्मिन्नपि-कर्मणि हवनमावश्यकम्। हवनद्रव्याणि तु कार्यानुसारेण शास्त्रोक्तविधिना विधेयानि।

१२. **बलिः**—देवतायै द्रव्यसमर्पणमेव बलिदानम्। अनेन कर्मणा विघ्नशान्तिर्भवति सिद्धिश्च। अन्तर्यागे स्वात्मसमर्पणं यतोऽहङ्कारनाशो बहिर्यागे तु बलिद्रव्यैः शास्त्रविहितैरनुष्ठेयः।

१३. **यागः**—इष्टदेवपूजनं यागः, स द्विविधः—अन्तर्यागः, बहिर्यागश्च। पीठविग्रहयन्त्रादिषु इष्टदेवपूजनं बहिर्यागः। देहमयपीठे मानसोपचारैः स्वेष्टपूजनमन्तर्यागः। अत्रैव कुण्डलिनीजागरणादिक्रियाणामन्तर्भावः। अत्र षोडशदशपञ्चोपचारा यथाशक्ति कार्याः।

१४. **जपः**—जपस्त्रिविधः—मानसः, उपांशुः, वाचिकश्च। मन्त्रार्थ-भावनामयो भूत्वा मनसैव मन्त्रोच्चारणं प्रथमः। जिह्वयौष्ठाभ्यां निःशब्दो-च्चारणं द्वितीयः। स्पष्टोच्चारणरूपस्तृतीयः।

१५. **ध्यानम्**—मन्त्रसाधनायां ध्यानस्य माहात्म्यमाधिक्येन वर्तते। मनस इष्टदेवस्य स्वरूपवेदनं ध्यानम्। अस्यामवस्थायां मनोमन्त्रदेवताना-मैक्यबोधनं जायते।

१६ **समाधिः**—समाधौ तु मनसा मन्त्रे लयः,मनसश्च देवतायां लयो भवति। अस्यामवस्थायां साधकः स्वास्तित्वं विस्मृत्य स्वयमिष्टदेवमयो भवति।

# मन्त्रचैतन्यविधिः

तन्त्रशास्त्रे मन्त्रचैतन्यविधौ बहवः प्रकारा निर्दिष्टास्तत्र केचनात्र लिख्यन्ते—

१. मन्त्रस्य सर्वे वर्णा हृदये स्थिता इति साधकैः प्रथमं भावनीयम्, अनन्तरं कुण्डलिनीमुद्बोध्य षट्चक्रभेदनं कार्यम्, अनन्तरं सहस्रदलकमले वर्णान् न्यस्य मन्त्रशक्त्या सह ध्यात्वा पुनस्तान् मणिपूरकचक्रे नीत्वा, अनन्तरं चिद्रूपेण मन्त्रजपो विधेयः।

२. कामश्रीमायाबीजैः अकारात् क्षकारपर्यन्तं सम्पुटयाष्टोत्तरशतवारं जपेत्।

३. ईकारेण मन्त्रं सम्पुट्याष्टोत्तरशतं जपेत्।

४ **मन्त्रकुल्लुका**—विभिन्नमन्त्राणां विभिन्नाः कुल्लुकाः सन्ति। कुल्लुकामज्ञात्वा जपकरणे हानिः स्यादिति रुद्रयामलोक्तिः। सरस्वतीतन्त्रे वाराहीतन्त्रे च जपात् पूर्वं मन्त्रकुल्लुकया शिरसि न्यासं विधाय जपकरणे सिद्धिर्भवति। काल्याः कुल्लुका तु—ओं क्रीं हूं स्त्रीं ह्रीं फट्।

५. **महासेतुः**—प्रधानरूपेण मन्त्राणां सेतुः प्रणव एवास्ति। क्वचन तन्त्रग्रन्थे ब्राह्मणक्षत्रिययोरोङ्कारः, वैश्यस्य फट्, शूद्रस्य ह्रीं, इति सेतुत्वेन निर्दिष्टम्। मन्त्रजपात् पूर्वं महासेतुमन्त्रजपोऽवश्यमेवानुष्ठेयः। तेन सर्वास्ववस्थासु साधकानामधिकारो भवेत्। कलिकाया महासेतुः—'क्रीं' इति।

६. **निर्वाणम्**—प्रथमं प्रणवं तदनन्तरमकारात् क्षकारपर्यन्तं सर्वं वर्णं पुनर्मूलमन्त्रं तदनन्तरं सर्ववर्णं तदन्ते प्रणवमातृकाभ्यां सम्पुट्य मूलमन्त्रं जपेत्, एतदेव निर्वाणमित्युच्यते। अनेन मन्त्रस्य स्वरूपबोधो भवति, मन्त्रश्च जागर्ति।

७. **मुखशोधनम्**—अभीष्टदेवताया मुखशोधनमन्त्रस्य दशवारं जपं कुर्यात्। कालिकाया मन्त्रस्तु—क्रीं क्रीं क्रीं ओं ओं ओं क्रीं क्रीं क्रीं।

**८. प्राणयोग:** —मायाबीजसम्पुटितस्य मूलमन्त्रस्य सप्तवारं जपः।

**९. दीपनी**—मन्त्रजपात् पूर्वं प्रणवसम्पुटितमूलमन्त्रस्य सप्तवारं जपः।

**१०. मन्त्रसूतकम्**—सूतकं द्विधा जन्मसूतकं मृतसूतकञ्च। तन्निवृत्तये जपप्रारम्भे जपान्ते चाष्टोत्तरशतसंख्याकं सप्तवारं वा प्रणवसम्पुटितमूल-मन्त्रस्य जपः कार्यः।

**११. मन्त्रदोषा:** —अभक्तिः, अक्षरभ्रान्तिः,लुप्तता, छिन्नता,ह्रस्वता, दीर्घता, कथनम्, स्वप्नकथनमिति। शारदापटले एतदतिरिक्तत्वेन रुद्धता, शक्तिहीनता, पराङ्मुखता इत्यादिपञ्चाशद्दोषा उक्ताः। एतद्दोषनिवृत्तये उपायस्त्वित्थम्—अभक्तिनिवृत्तिस्तु भक्तेरुदयाद् एव भवति नान्यथा। अतो मन्त्रे स्वेष्टदेवे परा भक्तिः कार्या। भ्रान्तिलुप्तच्छिन्नह्रस्वदीर्घादिदोष-निवृत्तये मन्त्रस्य पुनर्दीक्षा ग्राह्या। शेषदोषाणां निवृत्तये मन्त्राणां दश संस्कारा विधेयाः। ते च संस्काराः—जननम्, दीपनम्, बोधनम्, ताडनम्, अभिषेकः, विमलीकरणम्, जीवनम्, तर्पणम्, गोपनम्, आप्यायनञ्च।

**जननं** यथा—भूर्जपत्रे रक्तचन्दनेन गोरोचनेन वा जननयन्त्रमुल्लिख्य तत्र विधिपूर्वकं मातृकादेवीमावाह्य संपूज्याऽन्यस्मिन् भूर्जपत्रे अभीष्टमन्त्र-स्यैकैकमक्षरमुद्धृत्य तद्वर्णानां मार्जनं कृत्वा पूर्णो मन्त्रो लेख्यः, इत्येव जननसंस्कारः।

**दीपनम्**—हंसः, इत्युच्चार्य मूलमन्त्रम् (इष्टमन्त्रम्) अनन्तरं सोऽहम्, इत्येवं सम्पुट्य मन्त्रस्य सहस्रसंख्याकं जपो दीपनसंस्कारः।

**बोधनम्**—'हूं' इति बीजेन सम्पुट्य पञ्चसंख्याकं मन्त्रस्य जपः।

**ताडनम्**—'फट्' इत्यनेन सम्पुट्य सहस्रसंख्याकं जपः।

**अभिषेकः** —भूर्जपत्रे मन्त्रमुल्लिख्य 'ऐं हंसः ओं' इति मन्त्रेण सहस्र-संख्याकेनाभिमन्त्रितजलेन तन्मन्त्रद्वारा मन्त्रस्याभिषेकः।

**विमलीकरणम्**—'ओं ओं वषट्' इति मन्त्रेण सम्पुट्य स्वेष्टमन्त्रस्य सहस्रवारं जपः।

**जीवनम्**—'स्वधा वषट्' इति सम्पुट्य मन्त्रस्य सहस्रपरिमितो जपः।

**तर्पणम्**—दुग्धघृतमधुभिर्जलेन वा मूलमन्त्रेण शतवारं तर्पणम्।

**गोपनम्**—मायाबीजेन सम्पुटय मूलमन्त्रस्य सहस्रवारं जपः ।

**आप्यायनम्**—'ह्सौः' अनेन सम्पुटय मन्त्रस्य सहस्रसंख्यात्मको जपः ।

**दीक्षा**—साधनायां दीक्षा परमावश्यकी । विना गुरुकृपां साधना कठिनैव न; अपि तु असाध्या । साधनारहस्यमनुभूतज्ञानं च गुरुगम्यमेव । अतः साधकानां कृते सद्गुरोः सम्प्रदायानुसारिणी दीक्षा ग्राह्यैव । गुर्वाज्ञानुसारेणैव साधनायां प्रवृत्तिः श्रेयसी भवति ।

दीक्षा साधारणतया त्रिविधा–शाक्ती शाम्भवी मान्त्री च । तत्र प्रथमदीक्षायां गुरुः स्वयमेव शिष्यदेहान्तः प्रविश्य कुण्डलीं (सर्पणीम्) उद्बोधयति तथा स्वशक्त्यैव तां परमे शिवे मेलयति । अत्र शिष्यस्य न काचन कर्तव्यता । द्वितीयदीक्षायां गुरुः प्रसादमात्रेणैव दृष्ट्या स्पर्शेन वा शिष्यं क्षणमात्रेण स्वस्वरूपे स्थापयति । तदानीं शिष्यः समाधिस्थो भूत्वा कृतकृत्यतां यातः । तृतीया मान्त्री दीक्षा या आणवीति कथ्यते सा मन्त्रपूजन-आसन-न्यास-ध्यानादिद्वारा सम्पद्यते । शारदापटले दीक्षा चतुर्विधा कथिता—क्रियावती, वर्णमयी, कलावती, वेद्यमयी च । मन्त्रसाधनायां पञ्चायतनी दीक्षापि प्रचरति ।

**पुरश्चरणम्**—गुरोः सकाशान्मन्त्रदीक्षामादाय सिद्धिप्राप्तये साधनामार्गेऽग्रसरणमेव पुरश्चरणम् । अनेनैव सिद्धिलाभो भवति । पुरश्चरणं तु सिद्धपीठ-पुण्यक्षेत्र-नद्यादितटेष्वेव विधेयम्, अथवा यत्र मनः प्रसीदति तत्रैव । काली-ताराच्छिन्नमस्तादिमन्त्रपुरश्चरणविधावेकलिङ्गशिवालयश्मशाननिर्जनगृहकाननादिस्थानं विशेषतः प्रशस्तम् । पुरश्चरणे भोजने पवित्रता सदापेक्षिता । जातिस्थाननिमित्तदोषरहितं शास्त्रविहितं भोजनं समीचीनम् । पुरश्चरणे कौटिल्यं क्षौरं तैलाभ्यङ्गं मैथुनादि च हेयमेव ।

**मुद्राः** —

तान्त्रिकक्रियायां पूजायां जपे च मुद्राया विशिष्टं स्थानमस्ति । मोदतेऽनया (मुद+उणा० रक्+टाप्) इति मुद्रा । यद्यप्येष शब्दो लोके शास्त्रे चाऽनेकार्थवाचकः; किन्त्वत्र मुद्रापदेन देवताविशेषप्रीतिजनिकाऽङ्गुलिरचना गृह्यते ।

मुद्राशब्दविषये तन्त्रग्रन्थेषु निरुक्तयो दृश्यन्ते, यथा कुलार्णवतन्त्रे—

**मुदं कुर्वन्ति देवानां मनांसि द्रावयन्ति च ।**
**तस्मान्मुद्रा इति ख्याता दर्शितव्या कुलेश्वरि ॥**

अस्यायं भावः—मुद्रया देवा मोदन्ते तेषां मनांसि च द्रवीभवन्ति, अत इयं मुद्राऽऽख्यायते। अत्र 'मुद्, द्रु' इत्युभाभ्यां निष्पत्तिः स्वीक्रियते। एवं मेरुतन्त्रेऽपि—

**मुदं स्वरूपलाभाभ्यां देहद्वारेण चात्मनः ।**
**या अर्पयन्त्ययत्नेन मुद्रास्ताः शक्तयो मताः ॥**

**मोदयन्ति ग्रहादिभ्यः पापौघं द्रावयन्ति च ।**
**मोदनं द्रावणं यस्मादतो मुद्राः प्रकीर्तिताः ॥**

यामले च—

**मोदनात् सर्वदेवानां द्रावणात् पापसन्ततेः ।**
**तस्मान्मुद्रेयमाख्याता सर्वकामार्थसाधनी ॥**

कुलार्णवे देवमनोद्रवणं विवक्षितमत्र पापचयद्रवणमपेक्षितम्। शारदा-तिलके तु—

**आवाहन्यादिका मुद्राः प्रवक्ष्यामि यथाक्रमम् ।**
**याभिर्विरचिताभिस्तु मोदन्ते सर्वदेवताः ॥**

(२३ प० १०६ श्लोकः)

तत्र राघवभट्टेनैवं व्याख्यातम्—रा दाने। मुदं राति ददाति मुद्रेति निर्वचनम्। इदमेव मोदन्ते सर्वदेवता इत्यनेन सूचितम्। अत एव तद्दर्शनेन देवताहर्षोत्पत्तिः। स्वाङ्गुल्यो हि पञ्चभूतात्मिका अङ्गुष्ठाद्या आकाशवाय्वग्निसलिलभूरूपाः। तासां मिथः संयोगरूपसंकेतात् कोऽपि देवताप्रगुणीभावपूर्वको मोदः सान्निध्यकरो भवति। तदुक्तम्—

पृथिव्यादीनि भूतानि कनिष्ठाद्याः क्रमान्मताः ।
तेषामन्योन्यसंभेदप्रकारैस्तत्प्रपञ्चता ॥
अर्चने जपकाले तु ध्याने काम्ये च कर्मणि ।
तत्तन्मुद्राः प्रयोक्तव्या देवतासन्निधापिकाः ॥ इति ॥

अन्यत्रापि—

मुदं रातीति मुद्रा स्याद् येनैका मुष्टिरेव तु ।
स्वल्पभेदात् कोपहर्षौ प्राणिनां जनयत्यतः ॥
तेनैव सर्वदेवानां मुद्रा हर्षप्रदा मता ।
पूजाकाले दर्शनीया मुद्रा सा सर्वदा शिवे ॥ इति ॥

एतेनेदमायाति यदयमाचार्यो मुद्राशब्दस्य निष्पत्तिः 'मुद्, रा' इत्युभाभ्यां स्वीकरोति । तथा मुद्राशब्दस्यार्थः 'देवानन्दकर' इति मन्यते । मुद्रोपयोगसमयस्तु यामले एवं प्रदर्शितः —

अथ मुद्राः प्रवक्ष्यामि सर्वमन्त्रेषु कल्पिताः ।
याभिर्विरचिताभिश्च मोदन्ते मन्त्रदेवताः ॥
अर्चने जपकाले च ध्याने काम्ये च कर्मणि ।
स्नाने चावाहने चैव प्रतिष्ठायां च रक्षणे ॥
नैवेद्ये च तथान्ये च तत्तत्कर्मप्रकाशने ।
स्थाने मुद्राः प्रकर्तव्याः स्वस्वलक्षणलक्षिताः ॥

एतत् सर्वं पुरश्चर्यार्णवादिग्रन्थेषूद्धृतं वर्तते । मुद्रां विना जपादिकर्मणि फलावाप्तिरोधो भवतीति मन्यन्ते तान्त्रिकाः । तद्यथा—

मुद्रां विना तु यज्जाप्यं प्राणायामः सुरार्चनम् ।
योगो ध्यानासने चापि निष्फलानि तु भैरव ॥

(कालिकापुराणे–१०।३५)

**मुद्रादिभिरेव तृप्यन्ति न पुष्पादिकपूजनैः ।**
**महापूजा कृता तेन येन मुद्राष्टकं कृतम् ।।**

(मेरुतन्त्रे–१७।१२)

सा चैषा मुद्रा बहुविधा । आसां संख्या नामानि परिभाषाश्चेति मुद्रा-लक्षणग्रन्थेषु भिन्नभिन्नतान्त्रिकग्रन्थेषु पुराणादिष्वप्यवलोकनीयम् । अत्र तु विषयेऽस्मिन् किञ्चिदुच्यते—

देवताविशेषेणापि मुद्रायाः संख्या भिन्ना नामानि च भिन्नानि । तत्र दिङ्मात्रं दर्श्यते—विष्णोः १९, शिवस्य १०,सूर्यस्य १, गणेशस्य ७, दुर्गायाः ९, लक्ष्म्याः १, सरस्वत्याः ४,अग्नेः १, शक्रस्य १,श्यामायाः १, तारायाः ५, त्रिपुराया १० इत्यादिक्रमेण समेषां संगृहीताः श्लोकाः पुराणेभ्य उद्धृताः शब्दकल्पद्रुमे ताः सर्वा मुद्रास्तथान्यत्र च द्रष्टव्याः । प्रायः सामान्यरूपेण विधानमेतद्—

**आवाहनादिका मुद्रा नव साधारणा मताः ।**
**तथा षडङ्गमुद्राश्च सर्वमन्त्रेषु योजयेत् ।।**

षडङ्गमुद्राश्च प्रत्येकमन्त्रेषु तत्तन्मन्त्रानुसारं ज्ञेयाः ।

### कतिपयमुद्राणां परिचयः

कालीपूजाविधाने आवाहनादिविधिषु विविधमुद्राणां प्रयोगस्यापि विधानं वर्तते तन्त्रागमेषु । अतोऽत्र कतिपयमुद्राणां चर्चा सलक्षणमत्र क्रियते ।

अङ्कुश-अवगुण्ठन-धेनु-योनि-मत्स्य-नाराच-तत्त्व-वरगालिनी–आवाहनी-स्थापनो–संनिधापनो–संनिरोधिनी–संमुखीकरण–परमीकरण–कूर्म–लेलिहा-संभार-अभय-खड्ग-भूतिनी-मुण्डमुद्राः ।

१. अङ्कुशस्य—

**ऋज्वीं च मध्यमां कृत्वा तर्जनीं मध्यपर्वणि ।**
**संयोज्याकुञ्चयेत् किञ्चित् मुद्रैषाऽङ्कुशसंज्ञिका ।।**

(तन्त्रसारे)

२. अवगुण्ठनस्य—

सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी ।
अवगुण्ठनमुद्रेयमभितो भ्रामिता मता ॥

३. धेनोः —

अन्योन्याभिमुखा श्लिष्टा कनिष्ठानामिका पुनः ।
तथैव तर्जनीमध्या धेनुमुद्रा प्रकीर्तिता ॥
अमृतीकरणं कुर्यात् तया साधकसत्तमः ॥

४. योनेः —

मिथः कनिष्ठिके बद्ध्वा तर्जनीभ्यामनामिके ।
अनामिकोर्ध्वसंश्लिष्टदीर्घमध्यमयोरधः ॥
अङ्गुष्ठाग्रद्वयं न्यस्येद् योनिमुद्रेयमीरिता ॥

५. मत्स्यस्य—

दक्षपाणिपृष्ठदेशे वामपाणितलं न्यसेत् ।
अङ्गुष्ठौ चालयेत् किञ्चिन्मुद्रैषा मत्स्यसंज्ञिका ॥

६ नाराचस्य—

अङ्गुष्ठाग्रे तु तर्जन्याः संयोज्य चोर्ध्वरेखया ।
अन्याङ्गुलिस्तथोर्ध्वं च नाराचः स्यात् प्रसार्यताः ॥

७. तत्त्वस्य—

अङ्गुष्ठानामिकाभ्यान्तु वामहस्तस्य सर्वदा ।
कथिता तत्त्वमुद्रेयं योजिता तर्पणे बुधैः ॥

८. वरस्य—

अधःस्थितदक्षहस्तप्रसूता वरमुद्रिका । (तन्त्रसारे)

९. गालिन्याः —

कनिष्ठाङ्गुष्ठके सक्तौ करयोरितरेतरम् ।
तर्जनीमध्यमानामाः संहृता भुग्नवर्जिताः ॥
मुद्रैषा गालिनी प्रोक्ता ... ।

(तन्त्रसारे, गौतमीयतन्त्रे, गन्धर्वतन्त्रे च)

१०-११. आवाहन्याः स्थापन्याश्च —

ऊर्ध्वाञ्जलिमधः कुर्यादियमावाहनी मता ।
इयं तु विपरीता स्यात् तदा वै स्थापनी भवेत् ॥

१२. सन्निधापन्याः —

ऊर्ध्वाङ्गुष्ठमुष्टियोगं तदेयं सन्निधापनी ।

१३. सन्निरोधिन्याः —

अन्तरङ्गुष्ठयुगलं तदेयं सन्निरोधिनी ।

१४. परमीकरणस्य—

अन्योन्यग्रथिताङ्गुष्ठा प्रसारितपराङ्गुली ।
महामुद्रेयमुदिता परमीकरणे बुधैः ॥

(कौलावल्यां तन्त्रसारे च)

१५. कूर्मस्य—

वामहस्तस्य तर्जन्यां दक्षिणस्य कनिष्ठया ।
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठेन योजयेत् ॥
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ।
अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ॥
वामस्य पितृतीर्थेन मध्यमानामिके तथा ।
अधोमुखे च ते कुर्यात् दक्षिणस्य करस्य च ॥

कूर्मपृष्ठसमं कुर्याद् दक्षपाणिञ्च सर्वतः ।
कूर्ममुद्रेयमाख्याता देवताध्यानकर्मणि ॥
(ज्ञानार्णवे, श्यामारहस्ये, कालिकापुराणे, तन्त्रसारे च)

१६ लेलिहामुद्रायाः —

वक्त्रं विस्तारितं कृत्वा अधोजिह्वां च चालयेत् ।
पार्श्वस्थं मुष्टियुगलं लेलिहानेति कीर्तिता ॥ (तन्त्रसारे)

एषा कालीतारापूजायै व्यवहर्तव्या । कौलावल्यां तत्त्वचिन्तामणौ वा अन्यरूपेणैषा मुद्रा प्रदर्शिता वर्तते ।

१७ संहारस्य—

अधोमुखे वामहस्ते ऊर्ध्वास्यं दक्षहस्तकम् ।
क्षिप्ताङ्गुरङ्गुलिभिः संग्रथ्य परिवर्तयेत् ॥
एषा संहारमुद्रा स्याद् विसर्जनविधौ स्मृता ॥ (तन्त्रसारे)

१८. आकर्षण्याः —

मध्यमातर्जनीभ्यान्तु कनिष्ठानामिके समे ।
अङ्कुशाकाररूपाभ्यां मध्यमे परमेश्वरि ॥
इयमाकर्षणी मुद्रा त्रैलोक्याकर्षणी परा ॥ (तन्त्रसारे)

१९. अभयस्य—

ऊर्ध्वीकृतवामहस्तप्रसृतेत्यभयमुद्रिका ।

२०. खड्गस्य—

कनिष्ठानामिके बद्ध्वा स्वाङ्गुष्ठेनैव दक्षतः ।
शेषाङ्गुलिस्तु ······प्रसृते खड्गमुद्रिका ॥
(कौलावल्यां श्यामारहस्ये ज्ञानार्णवे च)

२१. भूतिन्याः —

बद्ध्वा तु योनिमुद्रां वै मध्यमे कुटिले कुरु ।
अङ्गुष्ठे तु तदग्रे तु मुद्रेयं भूतिनी मता ॥ (तन्त्रसारे)

२२. मुण्डस्य—

अन्तरङ्गुष्ठमुष्टिन्तु कृत्वा वामकरस्य च ।
मध्यमाग्रं दक्षिणस्य तथा लङ्घ्य प्रयत्नतः ॥
मध्यमेनाथ तर्जन्या अङ्गुष्ठाग्रेण योजयेत् ।
दक्षिणं योजयेत् पाणिं वाममुष्टौ तु साधकः ॥
दर्शयेद् दक्षिणे भागे मुण्डमुद्रेयमुच्यते ॥

(तन्त्रसारे, श्यामारहस्ये च)

अपि च खट्वाङ्गस्य—

पञ्चाङ्गुल्यो दक्षिणास्तु मिलिता ह्यूर्ध्वमुन्नताः ।
खट्वाङ्गमुद्रा विख्याता शिवस्यातिप्रिया मता ॥

डमरोः —

मुष्टिं च शिथिलां बद्ध्वा ईषदुच्छ्रितमध्यमाम् ।
दक्षिणामूर्ध्वमुन्नम्य कर्णदेशे प्रचारयेत् ॥
एषा डमरुमुद्राख्या सर्वविघ्नविनाशिनी ॥

गणेशप्रीतये दन्तमुद्रायाः —

उत्तानोर्ध्वमुखी मध्या सरला बद्धमुष्टिका ।
दन्तमुद्रा समाख्याता सर्वागमविशारदैः ॥

लक्ष्मीमुद्रायाः —

चक्रमुद्रां तथा बद्ध्वा मध्यमे द्वे प्रसार्य च ।
कनिष्ठिके तथानीय तदग्रेऽङ्गुष्ठकौ क्षिपेत् ॥

लक्ष्मीमुद्रा परा ह्येषा सर्वसम्पत्प्रदायिनी ॥

दिङ्मात्रमिह निर्दिशितं विस्तरेणाकरग्रन्थेभ्योऽवगन्तव्यम् ।

षोडशोपचारपूजा

**देवपक्षे—**

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्कमाचमस्नानवसनाभरणानि च ॥
सुगन्धसुमनोधूपदीपनैवेद्यवन्दनम् ।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥

**देवीपक्षे—**

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्कः स्नानजलं वस्त्रं भूषणचन्दने ॥
पुष्पं धूपश्च दीपश्च नेत्राञ्जनमतः परम् ।
नैवेद्याचमनीये तु उपचारास्तु षोडश ॥

**अथ दशोपचाराः—**

पाद्यमर्घ्यं तथाचामं मधुपर्काचमनं तथा ।
गन्धादयो नैवेद्यान्ता उपचारा दश क्रमात् ॥

(आगमत० वि० ५७१ पृ०)

**पञ्चोपचाराः—**

गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ।
पञ्चोपचारमुद्दिष्टं मुनिभिस्तन्त्रवेदिभिः ॥
अभावे गन्धपुष्पाभ्यां तदभावे तु भक्तितः ॥

(तत्रैव, पृ० ५७२)

**अपि च—**

सर्वोपचारवस्तूनामभावे भावनैव हि ।
निर्मलेनोदकेनाथ पूर्णतेत्याह नारदः ॥ इति ।

२९

**अष्टादशोपचाराः —**

**आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।**
**स्नानं वस्त्रोपवीतं च भूषणानि च सर्वशः ।।**
**गन्धं पुष्पं तथा धूपं दीपमन्नं च दर्शनम् ।**
**माल्यानुलेपनञ्चैव नमस्कारविसर्जने ।।**
**अष्टादशोपचारैश्च मन्त्री पूजां समाचरेत् ।।**

(आ० त० वि०, पृ० ३७०)

एते सर्वोपचारा भिन्नरूपेण देवविशेषानुसारेण बहुषु स्थलेषु विभेदतः प्रतिपादिताः, तत्र मयैकप्रकारः प्रदर्शितोऽतोऽत्र मतभेदे सति न कापि हानिः। पूजायां चतुःषष्टयुपचाराणां प्रयोगो भवति। ते तत्रैव द्रष्टव्याः, विस्तरभयान्न लिख्यन्ते।

अत्रैकैकं विविच्यते—**आसनं यथा**—आयससीसककांस्यादिरिक्तं तैजसं पाषाणमयं पुष्पमयं दारुमयं वस्त्रमयं चर्ममयं कुशमयं वा पुरो निधाय मूलमुच्चार्य इदमासनम् ओं अमुकदेवतायै नमः, इति दद्यात्।

**आदौ मन्त्रं समुच्चार्य पश्चाद् देयं समुच्चरेत् ।**
**संप्रदानं तदन्ते तु त्यागार्थकपदं ततः ।।**
**एवं क्रमेण देवेशि उपचारान् प्रकल्पयेत् ।।**

कालिकापुराणे—

**आसनञ्चार्घ्यपात्रं च भग्नमासादयेन्न तु ।।**

**पाद्यं यथा**—श्यामाकदूर्वाब्जविष्णुक्रान्तायुक्तं जलं केवलं वा जलं शंखे तैजसपात्रे वा निधाय पूर्ववद् देवतापादयोर्दद्यात्।

**पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम् ।।**

**अर्घ्यम्—**

**गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः ।**
**सदूर्वैः सर्वदेवानामर्घ्यमेतदुदीरितम् ।।**

**आचमनीयम्**–जातिलवंगकंकोलान्वितजलं तैजसपात्रे शंखे वा निधाय स्वधान्तमन्त्रेण उत्सृज्य वदने दद्यात्। **'जातिलवंगकंकोलैर्जलमाचमनीयकम्'** इति।

**अथ मधुपर्कः** —स च घृतदधिमधुयोगाद् भवति। तथा च— **आज्यं दधिमधून्मिश्रं मधुपर्कं विदुर्बुधाः।**

कालिकापुराणे–घृतदधिमधुसिताजलेति पञ्चयोगान्मधुपर्कविधानमुक्तम्। एतत् त्वाचमनीयवत् कार्यम्। तदनन्तरं स्नानजलं पुनराचमनीयञ्च देयम्। तदनन्तरं नवीनं वस्त्रं पुनराचमनीयं नमोमन्त्रेण यज्ञोपवीतमलङ्कारं च दद्यात्।

**अथ गन्ध** :—स च नमोऽन्तेन देयः—**गन्धश्चन्दनकर्पूरकालागुरुभिरीरितः।** गन्धाष्टकमपि दद्यात्। यथा शारदायाम्—

**गन्धाष्टकं च त्रिविधं शक्तिविष्णुशिवात्मकम्।**
**चन्दनागुरुकर्पूरचोरकुंकुमरोचना॥**
**जटामांसी कपियुता शक्ते गन्धाष्टकं विदुः॥**

चोरः कृष्णशटी। कपिः गाठियालेति। पुष्पं तु वौषडन्तेन दद्यात्।

**कुशपुष्पसमिद्वारि ब्राह्मणः स्वयमाहरेत्।**
**शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् व्रजत्यधः॥**

कमल-करवीर-तुलसी-जाति-केतक-नागकेशर-पारन्ती-कह्लार-चम्पकादिभिः पूजा विधेया। देवोनामर्कमन्दारौ प्रियौ स्तः।

देवीपूजने तुलसी वर्जिता—

**भैरवी सुन्दरी काली ब्रह्मविघ्नविवस्वताम्।**
**तुलसीवर्जिता पूजा सा पूजाऽविफला भवेत्॥**

(३८५ पृ० आगमतत्त्वविलासे)

**पुष्पाभावे जलेनापि दूर्वया तण्डुलेन च।**
**नित्यपूजा प्रकर्तव्या भक्तिभावेन सुन्दरि॥**

**अथ धूप :—**

**सगुग्गुल्वगुरुशीरशर्करामधुचन्दनैः ।**
**धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः ॥**

देशिकः पूजाकर्ता। अयं सप्ताङ्गो धूपः। धूपश्च षडङ्गो दशाङ्गः षोडशाङ्गश्च वर्तते, तत्सर्वमागमतत्त्वविलासे ३९१–९२ पृष्ठयोर्द्रष्टव्यम्।

**अथ दीपः —**

**वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ।**
**आरोप्य दर्शयेद् दीपानुच्चैः सौरभशालिनः ॥**

**अथाञ्जनम्—**

**विधवा नाञ्जनं कुर्यान्महामायार्थमुत्तमम् ॥**

अपि च—

**न मृत्पात्रे योजयेत्तु साधको नेत्ररञ्जनम् ॥**

**अथ नैवेद्यम्**—तत्तु बहुविधं सौवर्णादिपात्रे प्रस्तरे पद्मपत्रे निधाय नमोऽन्तेन दद्यात्। विशेषोऽवगन्तव्यो नृसिंहपुराणे—

**तत्र तत्र जलं दद्यादुपचारान्तरान्तरे ।**
**स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ॥**

**अथ प्रदक्षिणानमस्कारौ—**

**अष्टोत्तरशतं यस्तु देव्याः कुर्यात् प्रदक्षिणम् ।**
**स सर्वकाममासाद्य पश्चान्मोक्षमवाप्नुयात् ॥**

नमस्कारस्तु त्रिविधः—कायिको वाचको मानसश्च। इति संक्षेपेण प्रदर्शित उपचारः।

# कतिपयबीजानां परिचयः

१. ह्रीं–पराया मायाया वा बीजम्
२. श्रीं–श्रीबीजम्
३. क्लीं–कामबीजम्,कमलाबीजं वा
४. ऐं–वाग्बीजम्
५. सौः–शक्तिबीजम्
६. ओं–गायत्रीबीजम्
७. क्रीं–कालीबीजम्
८. हूम्–कूर्चबीजम्
९. त्रीं–ताराबीजम्
१०. स्त्रीं–स्त्री-वधूबीजम्
११. दूं–दुर्गाबीजम्
१२ हौं–शिव-सदाशिवबीजम्
१३. गं–गणेशबीजम्
१४. क्ष्रौं–नृसिंहबीजम्
१५. यँ–वायुबीजम्
१६. वँ–वरुणबीजम्
१७. रँ–अग्निबीजम्
१८. लँ–इन्द्रबीजम्
१९. लं–पृथिवीबीजम्
२०. हँ–ईशानबीजम्
२१. हौं–प्रासादबीजम्
२२ फ्रों–भूतबीजम्
२३. हस्त्रौं–कालाग्निबीजम्
२४. क्लीँ–गोपालबीजम्
२५. वौषट्–चक्षुर्बीजम्
२६. ख्फ्रें–डाकिनीबीजम्
२७. ब्लूं–त्रिपुरमालिनीबीजम्
२८. ह्सौं–हयग्रीवबीजम्
२९. ह्लीं–बगलाबीजम्
३०. अं–आत्मबीजम्
३१. हंसः–अजपा
३२. क्रों–अंकुशः
३३. ख्रीं–अत्युग्रः
३४ ह्स्रौ–कामकूटम्
३५. फ्रें–शाकिनीबीजम्
३६. छ्रीं–योगिनीबीजम्
३७. क्रों–अंकुशबीजम्
३८. ह्स्ख्फ्रें–फेत्कारीबीजम्
३९ वषट्–आकर्षणम्
४०. ह्रीँ–ईशानवल्लभा
४१. क्ल्ह्रीं–कामेश्वरी
४२. क्लीं–गोपालबीजम्
४३. ध, ह्रीँ, ह्लीँ, ह्लीं–बगला-बीजम्
४४. ऐं–बाला प्रणवः
४५. ऊ, ऐँ, क्लीँ, सौः–बाला त्रिपुरा
४६. भ् र् ल् स् ह् ई–भ्रामरीबीजम्
४७ आ, ह्ब्लेँ–भगमालिनी
४८ ह्सौः–योनिबीजम्
४९. भ्रूँ–राजबीजम्
५०. स्वों–सर्वमंगला

# कतिपयसंकेतः

वह्निकान्ता–स्वाहा
द्विठः–स्वाहा
द्वन्द्वम्–स्वाहा
अस्त्रम्–फट्
ङेन्तः–चतुर्थ्यन्तः
ङेनामा–य
अन्त्यः–क्ष
अपांपतिः–रूँ
आद्यः–अ
आद्या–ल
आत्मा–अ
इक्षुः–ष
अर्धचंः–ऌ
अर्धेन्दुः–अं ँ
अर्बुदः–ऋ
अर्यमा–आ
अवनिः–ल
अश्मकः–नमः
अहङ्कारः–फ
वर्गाद्यः–क
वह्निः–र
रतिः–ई
ब्रह्मा–क
वामनेत्रम्–ई
चन्द्रारूढः–ँ
कामः–कः

इन्दिरा–ई
नादः–अं
क्रोधीशः–क
क्षतजः–र
धूम्रभैरव्यः–ई
हालाहलः–ओं
कवचम्–हुं
पाशः–आं
स्कन्दः–क
धनेशः–ध
अंशुः–उ
अकुलम्–हँ
अक्रूरः–ठ
अक्षि–इ
अगस्त्यः–औ
अंगिरः–र
अंकुशः–ई
अङ्गदः–औ
अचला–ई
अच्युतः–अ
अजपा–हंसः
अजागलः–ॡ
अजेश्वरः–ङ
अञ्जनम्–ज
अनलः–र
अनुच्चार्या–अः

अम्भः–व वं
अर्धर्चः–ऌ
अर्धेन्दुः–अं
अश्मकः–नमः
आषाढीशः–ण
आषाढी–त
आह्लादिनी–द
इन्दिरा–इ
इन्द्राणी–इ
इला–ल
ईकारः–श्री ँ
ईशानी–ई
ईहा–ओं
उग्रभैरवी–ऐ
उर्वशी–आ
उर्वी–ल
उष्मा–र
ऊर्मिमाली–ॠँ
ऋषिकुल्ला–ॡ
एकः–ओ, ओं
एकादशी–ए
ऐन्दवम्–ऊ

ऐश्वर्यम्–ऐ
ककुत्–ल
कचम्–उ
कलहप्रिया–ज
कलाशक्तिः–क
कलिका–ह
कल्पः–ध्रुँ
कल्पना–ए
कवचम्–हुं
कामकूटम्–ऐं हस्रौँ
कामा–क्ष
कालाग्निः–क, ह्स्त्रौँ
कौमुदी–आ
क्रियाा–ऋ, ल
क्लिन्न–उ
क्षुधा–व
गगनम्–उ
गौरवम्–ॡ
घण्टा–घ्रीँ
घोणा–प्राँ
चतुष्कलम्–हुं

# कालिकामाहात्म्यम्

( मुण्डमालातन्त्रे षष्ठपटले )

**पार्वत्युवाच—**

इदानीं श्रोतुमिच्छामि नीलकण्ठ सदाशिव ।
माहात्म्यं कालिकायाश्च तारायाश्च सुरेश्वर ।। १५५ ।।

श्रोतुमिच्छाम्यहं नाथ यतस्त्वं कालिकापतिः ।
तारापतिस्त्वं देवेश वद शीघ्रं सदाशिव ।। १५६ ।।

**श्रीशिव उवाच—**

धन्यासि पतिभक्तासि पार्वति शृणु मद्वचः ।
कालिकायाश्च ताराया माहात्म्यं सिद्धिदायकम् ।। १५७ ।।

यथा काली तथा तारा एकदैव[1] हि भिन्नता ।
दक्षांशा चैव वामांशा यथानुक्रमसारतः ।। १५८ ।।

न हि कालीसमा पूज्या न हि कालीसमं फलम् ।
न हि कालीसमं ज्ञानं न हि कालीसमं तपः ।। १५९ ।।

तस्यैव धन्या जननी धन्यस्तस्य पितामहः ।
धन्यं कुलं यशश्चण्डि येन काली समर्चिता ।। १६० ।।

काली-तारासमा विद्याचारे स्तुतिविचारणे ।
यन्त्रे मन्त्रे फलं तुल्यं न विशेषः कथञ्चन ।। १६१ ।।

---

१. एकदेहा विभिन्नता, इति पाठः ।

इत्येवं भेदबुद्धया तु कथितं चरितं प्रिये ।
अभेदबुद्धया देवेशि सर्वास्तुल्या न संशयः ॥ १६२ ॥

श्रीमदेकजटा देवि उग्रतारा सरस्वती ।
व्यालानां दमने कृष्णरक्षणे यमुनाजले ॥ १६३ ॥

पपात तारिणी विद्या नीलवर्णा सरस्वती ।
देवैश्चैव हि देवेन्द्रैर्योगेन्द्रैः साधकोत्तमैः ॥ १६४ ॥

साधकैर्मुनिभिः सर्वैर्गन्धर्वैः किन्नरैः खगैः ।
विद्याधरैर्नर्तकैश्चैव नाना ऋषिगणैरपि ॥ १६५ ॥

आराधिता महाकाली महानीलसरस्वती ।
वदन्ति साधकाः सर्वे कालीं कालविनाशिनीम् ॥ १६६ ॥

नीलां सरस्वतीं विद्यामुग्रतारां मनोहराम् ।
कालिकायाश्च ताराया माहात्म्यं देवदुर्लभम् ॥ १६७ ॥

कः शक्नोति महोमध्ये तस्या माहात्म्यकोविदः ॥ १६८ ॥

इतः परं पटलेऽस्मिन् जीवमोहनादिकवचं निरूपितमस्ति तत्सर्वं तत्रैव द्रष्टव्यम् ।

त्रिपाठिकुलसम्भूतो रामनारायणस्सुधीः ।
समग्रहीन्महाकाल्याः स्तुतिमन्त्रार्चनविधीन् ॥